अजीर्णेनापि हन्यन्त देवताः पितृभिस्सह ।
सोममेवान्वपद्यन्त तेनाज्यान्नाभिपूजिताः ॥ ४७॥

तेऽब्रुवन् सोममासाद्य पितरोऽजीर्णपीडिताः ।
निवापान्नेन पीड्यामश् श्रेयो नोऽत्र विधीयताम् ॥ ४८॥

तान् सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं परम् ।
स्वयम्भूसदनं यात स वश्श्रेयो विधास्यति ॥ ४९॥

ते सोमवचनाद्देवाः पितृभिस्सह भारत ।
मेरुशृङ्गे समासीनं पितामहमुपागमन् ॥ ५०॥

पितरः—

निवापान्नेन भगवन् भृशं पीड्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नस्संविधीयताम् ॥ ५१॥

भीष्मः—

इति तेषां वचश्श्रुत्वा स्वयम्भूरिदमब्रवीत् ॥ ५२

ब्रह्मा—

एष मे पार्श्वतो वह्निर् युष्मच्छ्रेयो विधास्यति ॥ ५२॥

अग्निः—

सहितास्तस्य भोक्ष्यामो निवापे समुपस्थिते ।
जरयिष्यथ चाप्यन्नं मया सार्धं न संशयः ॥ ५३॥

भीष्मः—

एतच्छ्रुत्वा तु पितरस् ततस्ते विज्वरा भवन् ।

एतस्मात् कारणादग्नेः प्राग्भागो दीयते नृप ॥ ५४॥

निवापे चाग्निपूर्वे वै निवृत्ते पुरुषर्षभ ।

न ब्रह्मराक्षसास्तं वै निवापं [1]धर्षयन्त्युत ॥ ५५॥

रक्षांसि नाभिवर्धन्ते स्थिते देवे विभावसौ ॥ ५६

ततः पूर्वं पितुर्दद्यात् पश्चाद् दद्यात् पितामहे ।

प्रपितामहाय च ततस् तावच्छ्राद्धविधिस्स्मृतः ॥ ५७

ब्रूयाच्छ्राद्धे च सावित्रीं [2]पिण्डे पिण्डे समाहितः ॥ ५७॥

सोमायेति च वक्तव्यं तथा पितृमतेति च ॥ ५८

रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या ।

निवापे नोप[3]तिष्ठेते न ग्राह्या प्यस्य वंशजाः ॥ ५९

जलं प्रतरमाणश्च कीर्तयेत पितामहान् ।

नदीमासाद्य कुर्वीत पितणां पितृतर्पणम् ॥ ६०

पूव स्ववंशजानां तु कृत्वाऽद्भिस्तर्पणं पुनः ।

सुहृत्सम्बन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् ॥ ६१

कल्माषगोयुगेनाथ युक्तेन तरतो जलम् ।

पितरोऽभिलषन्ते वै नावं चाप्यधिरोहतः ॥ ६२

तदा नदीजलं तज्ज्ञाः प्रयच्छन्ति समाहिताः ।

1. अ—भक्षयन्त्युत 2. घ—पिण्डं

3. ख—तिष्ठन्ते न ग्राह्याश्चाप्यवंशजाः

मासार्धे कृष्णपक्षस्य कुर्यान्निवपनानि वै ॥ ६२

पुष्टिरायुस्तथा वीर्यं श्रीश्चैव पितृवर्तिनः ॥ ६३॥

पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा ।

अङ्गिराश्च क्रतुश्चैव काश्यपश्च महानृषिः ॥ ६४॥

एते कुरुकुलश्रेष्ठ महायोगेश्वरास्स्मृताः ॥ ६५

एते च पितरो राजन्नेष श्राद्धविधिः [1]परः ।

प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्मणा ॥ ६६

इति ते पुरुषव्याघ्र श्राद्धोत्पत्तिर्यथाक्रमम् ।

ख्यापिता पूर्वनिर्दिष्टा किं ते वक्ष्याम्यतः परम् ॥ ६७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां

अनुशासनपर्वणि एकोनाशीतितमोऽध्यायः ॥।७९ ॥ ।

॥ ८९ ॥ आनुशासनिकपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

[ अस्मिन्नध्याये ६७ श्लोकाः ]

---

1. क-ख-घ—पुरा

## ॥ अशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्युपवासब्रह्मचर्यादीनां लक्षणकथनम् ॥

युधिष्ठिरः—

द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते ।
अन्नं ब्राह्मणकामाय कथमेतत् पितामह ॥ १

भीष्मः—

अवेदोक्तव्रताश्चैव भुञ्जानाः कार्यकारणैः ।
वेदोक्तेषु तु भुञ्जाना व्रत[1]युक्ता युधिष्ठिर ॥ २

युधिष्ठिरः—

यदिदं तप इत्याहुर् उपवासं पृथग्जनाः ।
तपस्स्यादेतदिह वै तपोऽन्यद्वाऽपि किं भवेत् ॥ ३

भीष्मः—

मासार्धमासौ नोपवसेद् यत्तपो मन्यते जनः ।
आत्मतन्त्रोपघाती स न तपस्वी न धर्मवित् ॥ ४

त्यागस्य चापि सम्पत्तिश् शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद् ब्रह्मचारी तथैव च ॥ ५

मुनिश्च स्यात् सदा विप्रो देवांश्चैव सदा यजेत् ।

1. अ-क-ग—लुप्ता

कुटुम्बिको धर्मकामस् सदाऽस्वप्नश्च भारत ॥ ६

अमृताशी सदा च स्यात् पवित्री च सदा भवेत् ।
[1]ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ॥ ७

विघसाशी सदा च स्यात् सदा चैवातिथिप्रियः ।
अमांसाशी सदा च स्यात् पवित्री च सदा भवेत् ॥ ८

युधिष्ठिरः—

कथं सदोपवासी स्याद् ब्रह्मचारी च पार्थिव ।
विघसाशी कथं च स्यात् तथा चैवातिथिप्रियः ॥ ९

भीष्मः—

अन्तरा सायमाशश्च प्रातराशस्तथैव च ।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ १०

भार्यां गच्छन् ब्रह्मचारी सदा चैव भवेन्नरः ।
ऋतवादी सदैव स्याद् दानशीलश्च मानवः ॥ ११

अभक्षयन् वृथा मांसं अमांसाशी भवत्युत ।
दानं ददत् पवित्री स्याद् अस्वप्नश्च दिवाऽस्वपन् ॥ १२

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरस्सदा ।
अमृतं सकलं भुङ्क्ते [2]इति विद्धि युधिष्ठिर ॥ १३

अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः ।

1. अ—अर्धवयं नास्ति 2. क-घ—अष्टौ पादा न सन्ति

अभोजनेन तेनास्य जितस्स्वर्गो भवत्युत ॥ १४
देवेभ्यश्च पितृभ्यश्च [1]भूतेभ्योऽतिथिभिस्सह ।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ १५
तेषां लोका ह्यपर्यन्तास् सदने ब्रह्मणस्स्मृताः ।
उपस्थिता ह्यप्सरोभिर् गन्धर्वैश्च जनाधिप ॥ १६
देवतातिथिभिस्सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

1. ख—भृत्येभ्यो

## ॥ एकाशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यसाधुभ्यः प्रतिग्रहस्य निन्द्यत्वे प्रमाणतया सप्तर्षिवृषादर्विसंवादानुवादः ॥ १ ॥ वृषादर्विणा राज्ञा काश्यपादिसप्तर्षिभिः स्वस्मात् प्रतिग्रहनिराकरणे तज्जिघांसया कृत्योत्पादनम् ॥ २ ॥ तन्नामार्थपरिज्ञानेन तद्वधं चोदितया कृत्यया वने तत्समीपं प्रति गमनम् ॥ ३ ॥ वने विचरतां सप्तर्षीणां परिव्राडूपधारिणेन्द्रेण समागमः ॥ ४ ॥ अरुन्धत्या तस्यातिपीनाङ्गत्वे कारणं पृष्टैस्तैस्तत्कथनम् ॥ ५ ॥ तथा कामपि पद्मिनीमवलोकितवद्भिस्तैर्बिसग्रहणाय तत्समीपगमनम् ॥ ६ ॥ तत्र तद्रक्षिण्या वृषादर्विनिर्मितकृत्यया स्वस्वनामनिर्वचनेन सरःप्रवेशं चोदितैस्तां प्रति तन्निर्वचनम् ॥ ७ ॥ भिक्षुरूपिणेन्द्रेण सकृत्स्वनामनिर्वचनेऽपि पुनः पृच्छन्त्याः कृत्याया दण्डेन मारणपूर्वकमृषीन् प्रति स्वस्वरूपप्रकटनम् ॥८॥ सम्भूय तीर्थयात्रां कुर्वद्भिर्द्विजर्षिभी राजर्षिभिश्च क्रमेण ब्रह्मसरः प्रति गमनम् ॥९॥ तत्रागस्त्येन ह्रदात् समुद्धृतपद्मस्य धर्मशुश्रूषुणेन्द्रेण गूढमपहारे ऋषिभी राजभिश्च स्वेषु पुष्करस्तेयं शङ्कमानमगस्त्यं प्रति प्रत्येकशो नानाशपथकरणम् ॥ १० ॥ पश्चादिन्द्रेण स्वस्वरूपप्रकाशनपूर्वकं स्वेनपुष्करापहारस्य प्रयोजननिवेदनेन तत्प्रसादनम् ॥ ११ ॥

---

युधिष्ठिरः—

ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च ।
दातृप्रतिग्रहीत्रोर्वा को विशेषः पितामह ॥ १

भीष्मः—

साधोर्यः प्रतिगृह्णीयात् तथैवासाधुतो द्विजः ।

गुणवत्यल्पदोषस्याग्निर्गुणे तु निमज्जति ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
वृषाद[1]र्वेश्च संवादं सप्तर्षीणां च सुव्रत ॥ ३

काश्यपोऽ[2]त्रिर्वसिष्ठश्च भारद्वाजोऽथ गौतमः ।
विश्वामित्रो जामदग्निस् साध्वी चैवाप्यरुन्धती ॥ ४

सर्वेषामथ तेषां तु [3]चण्डाऽभूत् परिचारिका ।
शूद्रः पशुसखश्चैव तस्या भर्ता बभूव ह ॥ ५

ते वै सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम् ।
समाधिना प्रतीक्षन्तो ब्रह्मलोकं सनातनम् ॥ ६

[4]तदाऽभवदनावृष्टिर् महती कुरुनन्दन ।
कृच्छ्रप्राणोऽभवत् तत्र लोकोऽयं वै क्षुधाऽन्वितः ॥ ७

कस्मिंश्चिद्यः पुरा यज्ञे याज्येन शिबिसूनुना ।
दक्षिणार्थे च ऋत्विग्भ्यो दत्तः पुत्रोऽ[5]नलः किल ॥ ८

तस्मिन् काले तु सोऽल्पायुर् दिष्टान्तमगमत् प्रभो ।
ते तं क्षुधाऽभिसन्तप्ताः परिवार्योपतस्थिरे ॥ ९

---

1. ब—र्भै
2. ख—त्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः
   जमदग्निर्वसिष्ठश्च
3. ब—गण्डोऽभूत् परिचारकौ
4. ख—अथाभव ब—अङ्गाभव
5. ख—नवः किल ब—ऽतिलः किल

याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः ।
अपचन्त दृता स्थाल्यां क्षुधाऽऽर्ताः किल भारत ॥ १०

नाजीव्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः ।
कृच्छ्रामापेदिरे वृत्तिम् अन्नहेतोस्तपस्विनः ॥ ११

अटमानोऽथ तान् मार्गे पचमानान् महीपतिः ।
राजा शैब्यो वृषाद[1]र्विः क्लिश्यमानान् ददर्श ह ॥ १२

वृषादर्विः—
प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम् ।
मयि यद्विद्यते वित्तं तद्वृणुध्वं तपोधनाः ॥ १३

[2]प्रतिग्रहो ब्राह्मणानां सृष्टा वृत्तिरनिन्दिता ।
तस्माद् ददामि वो वित्तं तद् गृह्णीध्वं तपोधनाः ॥ १४

प्रिया हि मे ब्राह्मणा याचमाना
ददाम्यहं वोऽश्वतरीसहस्रम् ।
[3]धेनूर्ददाम्ययुतं वै समग्रम्
एकैकशस्सवृषास्सम्प्रसूताः ॥ १५

[4]अश्वांस्तथा शीघ्रगाञ् श्वेतरूपान्
[5]मनोजवान् प्रददान्यर्बुदानि ।

---

1. घ—र्भिः    2. अ-क-घ—अर्धद्वयं नास्ति
3. क-घ—अयं पादो नास्ति
4. क-घ—तेषां सर्वे शीघ्रगाश्वरूपाः (?)    [ पाठान्तरम् ]
5. क-घ—अयं पादो नास्ति

कुलम्भराननडुहश्शतं शतान्
धुर्याञ् शुभान् सर्वशोऽहं ददामि ॥ १६

हृष्टो वाहान् पीवराणां च तावद्
अग्र्या गृष्टीर्धेनवस्सुव्रताश्च ॥ १६॥

[1]वरान् ग्रामान् व्रीहियवान् रसांश्च
रत्नं चान्यद्दुर्लभं किं ददामि ।
मा स्माभोज्ये भावमेवं कुरुध्वं
पुष्ट्यर्थं वै किं प्रयच्छाम्यहं वः ॥ १७॥

ऋषयः—

राजन् प्रतिग्रहो राज्ञो मध्वास्वादो विषोपमः ।
तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥ १८॥

[2]दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ १९॥

[3]दशसूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यो भवेद्राजा घोरस्तस्य प्रतिग्रहः ॥ २०॥

क्षत्रं हि दैवतमिव ब्राह्मणं समुपाश्रितम् ।
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ २१॥

अह्नायेह तपो जातु ब्राह्मणस्योपजायते ।

---

1. ख—पुरान्
2. क-घ—अर्धचतुष्टयं नास्ति
3. ख—अर्धद्वयं नास्ति

तद्भाव इव निर्दह्यात् प्राप्तो राजप्रतिग्रहः ॥　२२॥

कुशलं सह दानेन राजन्नस्तु सदा तव ।

अर्थिभ्यो [1]दिशतां सर्वाम् इत्युक्त्वा तेऽन्यतो ययुः ॥　२३॥

भीष्मः—

अपक्वमेव तन्मांसम् अभूत्तेषां च धीमताम् ।

अथ हित्वा ययुस्सर्वे वनमाहारकाङ्क्षिणः ॥　२४॥

ततः प्रचोदिता राज्ञा वनं गत्वाऽस्य मन्त्रिणः ।

[2]प्रचीयोदुम्बराणि स्म दानं दातुं प्रचक्रमुः ॥　२५॥

दृष्ट्वा फलानि मुनयस् ते ग्रहीतुमुपाद्रवन् ॥　२६

गुरूणीति विदित्वाऽथ न ग्राह्याण्यत्रिरब्रवीत् ।

[3]नास्महे मूढविज्ञाना नास्म मानुषबुद्धयः ॥　२७

अत्रिः—

हैमानीमानि जानीमः प्रतिबुद्धास्स्म जागृमः ।

इह ह्येतदुपावृत्तं प्रेत्य स्यात् कटुकोदयम् ॥　२८

अप्रतिग्राह्यमेतद्वै प्रेत्येह च सुखेप्सुना ॥　२८॥

वसिष्ठः—

शतेन निष्कगुणितं सहस्रेण च सम्मितम् ।

तथा बहु प्रतीच्छन् वै पापिष्ठां लभते गतिम् ॥　२९॥

---

1. क-घ—दीयतां सर्वम्
2. घ—प्रवरोदुम्बराणि स्म दानं दातुं प्रचक्रमुः ।　[ पाठान्तरम् ]
3. क—नारम्भे　ख—नमेहे　घ—नास्तम्भे

काश्यपः—

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः ।
सर्वं तन्नालमेकस्य तस्माद्विद्वान् शमं [1]व्रजेत् ॥ ३०॥

भारद्वाजः—

उत्पन्नस्य [2]रुरोश्शृङ्गं वर्धमानस्य वर्धते ।
प्रार्थना पुरुषस्येह तस्य मात्रा न विद्यते ॥ ३१॥

गौतमः—

न तल्लोके द्रव्यमस्ति यल्लोभं प्रतिपूरयेत् ।
समुद्रकल्पः पुरुषो न कदाचन पूर्यते ॥ ३२॥

विश्वामित्रः—

कामं कामयमानस्य यदा कामस्समृध्यते ।
[3]अथैनमपरः कामस् त्विष्टो विध्यति बाणवत् ॥ ३३॥

अत्रिः—

न जातु कामः कामानाम् उपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३४॥

जमदग्निः—

प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ ३५॥

---

1. क-घ—लभेत्
2. क-घ—तु गोः
3. क-घ—अर्धद्वयं नास्ति

अरुन्धती—

धर्मार्थं सञ्चयो यो वै द्रव्याणां क्षयसंज्ञकः ।
तपस्सञ्चय एवेह विशिष्टो द्रव्यसञ्चयात् ॥ ३६॥

चण्डा—

उग्रादितो भयात्तस्माद् बिभ्यतीमे महेश्वराः ।
बलीयसो दुर्बलवद् बिभेम्यहमतः परम् ॥ ३७॥

पशुसखः—

[1]यद्वै धर्मात् परं नास्ति ब्राह्मणास्तादृशं विदुः ।
विनयात् साधु विद्वांस उपासेयं यथातथम् ॥ ३८॥

ऋषयः—

[2]कुशलं धर्मदानाय तस्मै यस्य प्रजा इमाः ।
फलान्युपधियुक्तानि यत्र वः प्रतियच्छति ॥ ३९॥

भीष्मः—

इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि ते ।
ऋषयो जग्मुरन्यत्र सर्व एव दृढव्रताः ॥ ४०॥

[3]अथ ते मन्त्रिणस्सर्वे राजानमिदमब्रुवन् ॥ ४१

1. ख—यथा चरन्ति विद्वांसस् तथा धर्मपरायणाः ।
तदिदं विदुषा कार्यम् आत्मनो हितमिच्छता ॥
[ पाठान्तरम् ]

2. ख—अर्धद्वयं नास्ति

3. क-ख-घ—इदमर्धं नास्ति

मन्त्रिणः—

उपधिं शङ्कमानास्तु हित्वेमानि फलानि वै ।
ततोऽन्येनैव गच्छन्ति विदितं तेऽस्तु पार्थिव ॥ ४२

भीष्मः—

इत्युक्तस्स तु भृत्यैस्तु वृषादर्[1]विश्चुकोप ह ।
तेषां सम्प्रतिकर्तुं च सर्वेषामगमद्गृहान् ॥ ४३

स:गत्वाऽऽहवनीयाग्नौ तीव्रं नियममास्थितः ।
जुहाव संस्कृतां मन्त्रैर् एकैकामाहुतिं नृपः ॥ ४४

तस्मादग्नेस्समुत्तस्थौ कृत्या लोकभयङ्करी ।
तस्या नाम वृषादर्[2]विर् यातुधानीत्यथाकरोत् ॥ ४५

सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता ।
वृषादर्[3]विं नरपतिं किं करोमीति चाब्रवीत् ॥ ४६

वृषादर्विः—

ऋषीणां गच्छ सप्तानाम् अरुन्धत्यास्तथैव च ।
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥ ४७

ज्ञात्वा नामानि वै तेषां सर्वानेतान् विनाशय ।
विनष्टेषु यथा स्वैरं गच्छ यत्रेप्सितं तव ॥ ४८

भीष्मः—

सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी ।

---

1. ब—र्भि 2. क-ब—र्भि
3. क-ब—र्भिं

जगाम तद्वनं यत्र विचेरुस्ते महर्षयः* ॥ ४९

अथात्रिप्रमुखा राजन् वने तस्मिन् महर्षयः ।
व्यचरन् भक्षयन्तो वै [1]मूलानि च फलानि च ॥ ५०

अथापश्यन् सुपीनांसपाणिपादशिरोमुखम् ।
पथि व्रजन्तं स्थूलाङ्गं परिव्राजं शुनस्सखम् ॥ ५१

अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभम् ।
भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ ५२

वसिष्ठः—

नैतस्येह यथाऽस्माकम् अग्निहोत्रमनिर्हुतम् ।
सायं प्रातस्तु होतव्यं तेन पीवाञ् शुनस्सखः ॥ ५३

अत्रिः—

[2]नैतस्येह यथाऽस्माकं क्षुधया वीर्यमाहृतम् ।
कृच्छ्राधीतं प्रनष्टं च तेन पीवाञ् शुनस्सखः ॥ ५४

विश्वामित्रः—

नैतस्येह यथाऽस्माकं शश्वच्छास्त्रकृतो ज्वरः ।
अलसः क्षुत्परो मूर्खस् तेन पीवाञ् शुनस्सखः ॥ ५५

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—अष्टौ पादा न सन्ति

2. अ—अर्धचतुष्टयं नास्ति　ख—अर्धद्वयं नास्ति

जमदग्निः—

[1]नैतस्येह यथाऽस्माकं भक्तमिन्धनमेव च ।
सञ्चिन्त्य वार्षिकं किञ्चित् तेन पीवाञ् शुनस्सखः ॥ ५६

गौतमः—

[2]नैतस्येह यथाऽस्माकं त्रिकौशेयं हि राङ्कवम् ।
एकैकं वै त्रिवार्षीकं तेन पीवाञ् शुनस्सखः ॥ ५७

भीष्मः—

अथ दृष्ट्वा परिव्राट् स तान् महर्षीञ् शुनस्सखः ।
अभिवाद्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ ५८

[3]परिचर्य वने तांस्तु क्षुत्प्रतीकारकाङ्क्षिणः ।
अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ ५९

एकनिश्चयकार्याश्च व्यचरन्त वनानि ते ।
आददानास्समुद्धृत्य मूलानि च फलानि च ॥ ६०

कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम् ।
शुचिपूर्णप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥ ६१

बालादित्यवपुःप्रख्यैः पुष्करैरुपशोभिताम् ।
वैडूर्यवर्ण[4]रुचिरैः पद्मपत्रैरथावृताम् ॥ ६२

1. क-घ—अर्धद्वयं नास्ति
2. ख—अर्धद्वयं नास्ति
3. क-ख—परिवार्य
4. क-ख-घ—रचितैः

नानाविधैश्च विहगैर् [1]जलप्रवरसेविभिः ।
एकद्वारामनादेयां सूपतीर्थामकर्दमाम् ॥ ६३

वृषादर्विप्रयुक्ता तु कृत्या विकृतदर्शना ।
[2]यातुधानीति विख्याता पद्मिनीं तामरक्षत ॥ ६४

शुनस्सखसहायास्तु बिसार्थं ते महर्षयः ।
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् ॥ ६५

ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम् ।
स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः ॥ ६६

ऋषयः—

कथं तिष्ठसि का तु त्वं कस्यार्थे किं प्रयोजनम् ।
पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किं चिकीर्षसि ॥ ६७

यातुधानी—

याऽस्मि काऽस्म्यनुयोगो मे न कर्तव्यः कथञ्चन ।
आरक्षिकां मां पद्मिन्या वित्त सर्वे तपोधनाः ॥ ६८

ऋषयः—

सर्वे एव क्षुधार्तास्स्म न चान्यत् किञ्चिदस्ति नः ।
भवत्यास्सम्मतास्सर्वे गृह्णीमहि बिसान्युत ॥ ६९

1. ख—जलजन्तुभिरावृताम्

2. क-ब—अर्धचतुष्टयं नास्ति

यातुधानी—

समयेन बिसानीतो गृह्णीध्वं कामकारतः ।
एकैको नाम मे प्रोक्त्वा ततो गृह्णीत मा चिरम् ॥ ७०

भीष्मः—

विज्ञाय यातुधानीं तां कृत्यामृषिवधैषिणीम् ।
अत्रिः क्षुधा परीतात्मा ततो वचनमब्रवीत् ॥ ७१

अत्रिः—

अरात्त्रिरत्रेस्सा रात्रिर् या नाधीते त्रिरद्य वै ।
अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने ॥ ७२

यातुधानी—

[1]यथोदाहृतमेतत्ते [2]त्वया नाम महामुने ।
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ७३

वसिष्ठः—

वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासं गृहेष्वपि ।
वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् ॥ ७४

यातुधानी—

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ७५

---

1. ख—नामनैरुक्तमेतत्ते मयि नाम

2. क-घ—मम नाम

काश्यपः—

[1]कुलं कुलं च [2]कुशलं कुपयः काश्यपो द्विजः ।
काश्यपः [3]काशिनीकाश एतन्मे नाम धारय ॥ ७६

यातुधानी—

[4]यथोदाहृतमेतत्ते मयि नाम महामुने ।
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ७७

भारद्वाजः—

भरे सुतान् भरे पोष्यान् भरे देवान् भरे द्विजान् ।
भरे भार्यामहं व्याजाद् भरद्वाजोऽस्मि शोभने ॥ ७८

यातुधानी—

[5]नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ७९

गौतमः—

[6]गौतमो मम गोधूमो धूमो दुर्दर्शनश्च ते ।
विद्धि मां गौतमं कृत्ये यातुधानि निबोध मे ॥ ८०

---

1. ख—द्वादशार्धानि न सन्ति
2. क—कुलशं कुपथः    ख—कुलपः कुशयः
3. ख—काश्यपाच्छश्वदेतन्मे
4. क—अर्धचतुष्टयं नास्ति
5. अ—यथोदाहृतमेतत्ते त्वया नाम महामुने ।
   दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥    [ पाठान्तरम् ]
6. क—अर्धचतुष्टयं नास्ति
   ख—गोदमो दमगोधूमो दमारो दुर्दमश्च ते ।

यातुधानो—

यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८१

विश्वामित्रः—

विश्वे देवाश्च मे मित्रं मित्रमस्मि गवां तथा ।
विश्वामित्र इति ख्यातं यातुधानि निबोध मे ॥ ८२

यातुधानी—

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८३

जमदग्निः—

[1]जजामाद्यं जजामायं जजामाहं जजायुषी ।
जमदग्निरिति ख्यातम् अतो मां विद्धि शोभने ॥ ८४

यातुधानी—

यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८५

अरुन्धती—

सारं धरित्रीं वसुधां [2]इच्छे भर्तुरनन्तरम् ।
मनो रुन्धति [3]मां भर्तुर् इति मां विद्ध्यरुन्धतीम् ॥ ८६

1. क-घ—अर्धचतुष्टयं नास्ति
2. ख—नेच्छे
3. क-घ—मे

यातुधानी—

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८७

चण्डा—

[1]चण्डं गतवती चण्डा चण्डा चण्डेति संज्ञिता ।
चण्डचण्डेति चण्डेति विद्धि माऽनलसम्भवे ॥ ८८

यातुधानी—

[2]नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८९

पशुसखः—

[3]सखे सखायस्सख्ये यः पशूनां च तथा सखा ।
[4]गौण्यो पशुसखेत्येव विद्धि मामग्निसम्भवे ॥ ९०

यातुधानी—

नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९१

शुनस्सखः—

एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे ।

---

1. क-घ—गण्डं गण्डवती गण्डा गण्डागण्डेति संज्ञिता ।
गण्डं गण्डेति गण्डेति विद्धि मा नयसम्भवे ॥ [पाठान्तरम्]

2. अ—अर्धद्वयं नास्ति

3. क-घ—अर्धचतुष्टयं नास्ति

4. ख—तथा गौण्यं पशुसखम्

शुनां सदा सहायं मां यातुधान्युपधारय ॥ १२

यातुधानी—

नाम न व्यक्तमुक्तं वै वाक्यं सन्दिग्धया गिरा ।
तस्मात् सकृदिदानीं त्वं ब्रूहि यन्नाम ते द्विज ॥ १३

शुनस्सखः—

सकृदुक्तं मया नाम न गृहीतं यदि त्वया ।
तस्मात् त्रिदण्डाभिहता गच्छ भस्मेति मा चिरम् ॥ १४

भीष्मः—

सा ब्रह्मदण्डकल्पेन तेन मूर्ध्नि हता तदा ।
कृत्या पपात मेदिन्यां भस्मसाच्च जगाम ह ॥ १५

शुनस्सखश्च हत्वा तां यातुधानीं महाबलाम् ।
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ॥ १६

ततस्ते मुनयस्सर्वे पुष्कराणि बिसानि च ।
यथाकाममुपादाय समुत्तस्थुर्मुदाऽन्विताः ॥ १७

श्रमेण महता युक्तास् ते बिसानि कलापशः ।
तीरे निक्षिप्य पद्मिन्यास् तर्पणं चक्रुरम्भसा ॥ १८

अथोत्थाय जलात् तस्मात् सर्वे ते वै समागमन् ।
नापश्यंश्चापि ते तानि बिसानि भरतर्षभ ॥ १९

ऋषयः—

केन क्षुधाभिभूतानाम् अस्माकं पापकर्मणा ।

नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥ १००

भीष्मः—

ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ।
त ऊचुश्शपथं सर्वे कुर्म इत्यरिकर्शन ॥ १०१

त उक्त्वा बाढमित्येव सर्व एव शुनस्सखम् ।
क्षुधार्तास्सुपरिश्रान्ताश् शपथायोपचक्रमुः ॥ १०२

अत्रिः—

स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु ।
अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥ १०३

वसिष्ठः—

अनध्यायपरो लोके शुनस्स परिकर्षतु ।
परिव्राट् कामवृत्तिस्तु बिसस्तैन्यं करोति यः ॥ १०४

[1]शरणागतं हन्तु मित्रं स्वसुतां चोपजीवतु ।
आशां काङ्क्षतु कीनाशाद् बिसस्तैन्यं करोति यः ॥ १०५

काश्यपः—

सर्वत्र सर्वं पणतु न्यासलोभं करोतु च ।
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ १०६

वृथा मांसानि चाश्नातु वृथा दानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥ १०७

1. अ—इदमर्धद्वयं नास्ति

भारद्वाजः—

[1]नृशंसस्त्यक्तधर्माऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
[2]ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ॥ १०८

उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च ।
जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः[3-4] ॥ १०९

गौतमः—

अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु ।
विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ॥ ११०

[5]उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ॥ १११

विश्वामित्रः—

विगुणान् बिभृयाद् भृत्यान् भरन्त्वस्यापरे जनाः ।
दरिद्रो बहुपुत्रोऽस्तु बिसस्तैन्यं करोति यः ॥ ११२

---

1. अ—अर्धचतुष्टयं नास्ति 2. ख—ब्राह्मणं निन्दतु सदा

3. ख—जमदग्निः—

पुरीषमुत्सृजत्वप्सु हन्तु गां चापि दुस्तनीम् ।
अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥

[ अधिकः पाठः ]

4. अ-ख—

द्वेष्यभार्योपजीवी स्याद् दूरबन्धुश्च वैरवान् ।
अन्योन्यस्यातिथिस्सोऽस्तु बिसस्तैन्यं करोति यः ॥

[ अधिकः पाठः ]

5. ख—उदपानप्लवे ग्रामे

अशुचिर्ब्रह्मकूटोऽस्तु मिथ्या चैवाप्यहंकृतः ।
कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥ ११३

जमदग्निः—

हर्षं करोतु भृतके राज्ञस्स्यात् स पुरोहितः ।
अयाज्यस्य भवेदृत्विक् बिसस्तैन्यं करोति यः ॥ ११४

अरुन्धती—

[1]नित्यं परिभवेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः ।
एका स्वादूनि चाश्नातु बिसस्तैन्यं करोति या ॥ ११५

ज्ञातीनां गृहमध्यस्था सक्तूनां भुवि भक्षणे ।
अभाग्या वीरसूरस्तु बिसस्तैन्यं करोति या ॥ ११६

चण्डा—

अनृतं भाषतु सदा साधुभिश्च विरुध्यतु ।
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥ ११७

[2]सा याचित्वा स्वयं प्राशेद् आस्ये दिश्येत् तथैव सा ।
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥ ११८

पशुसखः—

दास्यभावं प्रजनयेत् सोऽप्रसूतिरकिञ्चनः ।
दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ॥ ११९

1. ख—अर्धद्वयं नास्ति
2. ख-घ—साधयित्वा

शुनस्सखः—

अध्वर्यवे दुहितरं ददातु
च्छन्दोगे वाऽऽचरितब्रह्मचर्ये ।
अथर्ववेदं समधीत्य विप्रास्
स्नायीत यो वै हरते बिसानि ॥ १२०

ऋषयः—

इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतमिदं स्तैन्यं सर्वेषां नश्शुनस्सख ॥ १२१

शुनस्सखः—

अन्नमेतदपश्यद्भिर् यदुक्तं कृतकर्मभिः ।
सत्यमेतन्न मिथ्यैतद् बिसस्तैन्यं कृतं मया ॥ १२२

मयाऽन्तर्हितानि सर्वाणि बिसानीमानि पश्यत ।
परीक्षार्थं भगवतां कृतमेवं मयाऽनघाः ॥ १२३

रक्षणार्थं हि सर्वेषां भवतामहमागतः ।
यातुधानी ह्यपि क्रुद्धा कृत्यैषा वो वधैषिणी ॥ १२४

वृषादर्विप्रयुक्तैषा निहता मे तपोधनाः ।
दुष्टा हिंस्यादियं पापा युष्मान् प्रत्यग्निसम्भवा ॥ १२५

तस्मादभ्यागतं विप्रा वासवं मां निबोधत ।
अलोभादक्षया लोकाः प्राप्ता वस्सार्वकामिकाः ॥ १२६

[1]उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥ १२६॥

भीष्मः—

ततो महर्षयः प्रीतास् तथेत्युक्त्वा पुरन्दरम् ।
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ॥ १२७॥

एवमेते महात्मानो भोगैर्बहुविधैरपि ।
क्षुधा परमया युक्ताश् छन्द्यमाना महात्मभिः ॥ १२८॥
नैव लोभं तदा चक्रुस् ततस्स्वर्गमवाप्नुवन् ॥ १२९

तस्मात् सर्वास्ववस्थासु नरो लोभं विवर्जयेत् ।
एष धर्मः परो राजन् ब्राह्मणस्य प्रकीर्तितः ॥ १३०

इदं नरस्सुचरितं समवायेषु कीर्तयेत् ।
सुखभागी च भवति न च दुर्गाण्यवाप्नुते ॥ १३१

प्रीयन्ते पितरश्चास्य देवता ऋषयस्तथा ।
[2]यशोधर्मार्थभागी च भवति प्रेत्य मानवः* ॥ १३२

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥ १३३

पुष्करार्थं कृते स्तैन्ये पुरा भरतसत्तम ।

---

1. घ—उपतिष्ठामि वै क्षिप्रम्

2. क-घ—यशोधनार्थं

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥ १३४

पुरा प्रभासे ऋषय[1]स्समागतास्
समेता वै मन्त्रममन्त्रयन्त ।
चराम सर्वे पृथिवीं पुण्यतीर्थां
तन्नः कार्यं [2]हन्त गच्छाम सर्वे ॥ १३५

शुक्रोऽङ्गिराश्चैव कविश्च विद्वांस्
तथा ह्यगस्त्यो नारदः पर्वतश्च ।
भृगुर्वसिष्ठः काश्यपो गौतमश्च
विश्वामित्रो जमदग्निश्च राजन् ॥ १३६

ऋषिस्तथा गालवोऽथाष्टकश्च
भारद्वाजोऽरुन्धती वालखिल्याः ।
शिबिर्दिलीपो नहुषोऽम्बरीषो
राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥ १३७

जग्मुः पुरस्कृत्य महानुभावाश्
शतक्रतुं वृत्रहणं [3]नरेन्द्राः ।
तीर्थानि सर्वाणि परिक्रमन्तस्
तां प्रत्युदीयुः कौशिकीं पुण्यतीर्थाम् ॥ १३८

1. क-घ—समेता एवं मन्त्रं मन्त्रयन्ति स्म सर्वे
2. क-घ—इतोऽर्धद्वयं नास्ति
3. क-ख—सुरेन्द्रम्

सर्वेषु तीर्थेषु विधूतपापा
　जग्मुस्ततो वै ब्रह्मसरस्सुपुण्यम् ।
देवस्य तीर्थे ज्वलिताग्निकल्पा
　विगाह्य ते भुक्तबिसप्रसूनाः ॥ १३९

केचिद्बिसान्यखनंस्तत्र राज-
　न्नन्ये मृणालान्यखनन्त विप्राः ।
अथापश्यन् पुष्करं ते [1]हृतं तं
　तदा ह्यगस्त्येन समुद्धृतं वै ॥ १४०

तानाह सर्वानृषिमुख्यानगस्त्यः
　केनाहृतं वै पुष्करं मे सुजातम् ।
युष्माञ् शङ्के दीयतां पुष्करं मे
　न वै भवन्तो हर्तुमर्हन्ति पद्मम् ॥ १४१

शृणोमि कालो हिंसते धर्मवीर्यं
　सेयं प्राप्ता [2]वर्धते धर्मपीडा ।
पुराऽधर्मो वर्धते नेह तावद्
　यावद्गच्छामि परलोकं चिराय ॥ १४२

1. क—ह्रियन्तं दास्येन समुद्धृतं वै भवस्य
　ख—ह्रियन्तं ह्रदे ह्यगस्त्यो बिसमुद्धृतं वै
　ख—ह्रियन्तं अदास्येन समुद्धृतं वै भवस्य
2. ख—वर्तते

पुरा वेदान् ब्राह्मणा ग्राममध्ये
घुष्टस्वरान् वृषलान् श्रावयन्ति[1] ।
पुरा राजा व्यवहारानधर्मान्
पश्यत्यहं परलोकं व्रजामि ॥ १४३

पुरा राजा प्रत्यवरान् गरीयसो
मंस्यत्यथैनमनुयास्यन्ति सर्वे ।
धर्मोत्तरं यावदिदं न वर्तते
तावद्व्रजामि परलोकं चिराय ॥ १४४

पुरा प्रपश्यामि परेण मर्त्यान्
बलीयसा दुर्बलान् भुज्यमानान् ।
तस्माद्यास्यामि परलोकं चिराय
न ह्युत्सहे द्रष्टुमीदृङ् नृलोके ॥ १४५

[2]तमाहुरार्ता ऋषयो महर्षे
न ते वयं पुष्करं चोरयामः ।
मिथ्याभिशंसा भवता न कार्या
शपाम तीक्ष्णाञ् शपथान् महर्षे ॥ १४६

ते निश्चितास्तत्र महर्षयस्तु
सम्मानयन्तो धर्ममेवं नरेन्द्र ।

1. क-घ—पुष्ट; ख—भ्रष्टस्वरान् पुष्कलान्
2. क-घ—अर्धद्वयं नास्ति

ततोऽकुर्वञ् शपथान् [1]पर्ययेण
सहैव तैः पार्थिव पुत्रपौत्रैः ॥ १४७

भृगुः—

प्रत्याक्रोशेदिहाक्रुष्टस् ताडितः प्रतिताडयेत् ।
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥ १४८

गौतमः—

[2]अस्वाध्यायपरो लोके श्वानं च परिकर्षतु ।
पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥ १४९

काश्यपः—

सर्वत्र [3]सर्वं पणतु न्यासे लोभं करोतु च ।
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम् ॥ १५०

वसिष्ठः—

[4]जीवत्वहङ्कृतो बुद्ध्या कृपणत्वं समेतु सः ।
कर्षको मत्सरी वाऽस्तु यस्ते हरति पुष्करम् ॥ १५१

अङ्गिराः—

अशुचिर्ब्रह्मकूटस्तु श्वानं च परिकर्षतु ।
ब्रह्महा निकृतश्चास्तु यस्ते हरति पुष्करम् ॥ १५२

1. घ—प्रत्ययेन
2. क—दशार्धानि न सन्ति
3. ख—सर्वमश्नातु न्यासे लोपं
4. अ—अर्धचतुष्टयं नास्ति

धुन्धुमारः—

[1]अकृतज्ञोऽस्तु मित्राणां शूद्रायां च प्रजायताम् ।
एकस्सम्पन्नमश्नातु यस्ते हरति पुष्करम् ॥ १५३

पूरुः—

[2]चोरकार्यं प्रचरतु भार्यां वाचैव दुष्यतु ।
श्वशुरात्तस्य वृत्तिस्स्याद् यस्ते हरति पुष्करम् ॥ १५४

दिलीपः—

[3]उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य लोकान् स व्रजतु यस्ते हरति पुष्करम् ॥ १५५

शुक्रः—

पृष्ठमांसानि चाश्नातु यतिर्गच्छतु मैथुनम् ।
प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् ॥ १५६

जमदग्निः—

[4]अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् ।
श्राद्धे शूद्रस्य चाश्नीयाद् यस्ते हरति पुष्करम् ॥ १५७

शिबिः—

[5]अनाहिताग्निर्म्रियतु यज्ञविघ्नं करोतु च ।

---

1. घ—अर्धद्वयं नास्ति
2. ख—चोरिकां स प्रचरतु भार्यां स्वां चैव दूष्यतु ।
3. क-ख-घ—अर्धचतुष्टयं नास्ति
4. अ—अर्धद्वयं नास्ति
5. अ-क-घ—अर्धद्वयं नास्ति

तपस्विभिर्विरुध्येत यस्ते हरति पुष्करम् ॥ १५८

नहुषः—

अतिथिं गृहस्थो नुदतु कामवृत्तोऽस्तु दीक्षितः ।
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम् ॥ १५९

[1]ययातिः—

अनृतौ जटी व्रतिन्यां वै भार्यायां सम्प्रजायतु ।
निराकरोतु वेदांश्च यस्ते हरति पुष्करम् ॥ १६०

अम्बरीषः—

नृशंसस्त्यक्तकर्माऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जहतु यस्ते हरति पुष्करम् [2]॥ १६१

नारदः—

गूढो ज्ञातिबहिश्शास्त्रं पठतां विस्वरं पदम् ।
गरीयसोऽवजानातु यस्ते हरति पुष्करम् ॥ १६२

[3]गाधिः—

अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु ।
शुल्केन कन्यां ददतु यस्ते हरति पुष्करम् ॥ १६३

---

1. ख—भारद्वाजः [ पाठान्तरम् ]
2. ख—दिलीपः—
 उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
 तस्य लोकान् स व्रजतु यस्ते हरति पुष्करम् ॥ [ अधिकः पाठः ]
3. ख—विश्वामित्रः [ पाठान्तरम् ]

कविः—

पदा च गां स्पृशतुससूर्यं च प्रति मेहतु ।
शरणागतं च त्यजतु यस्ते हरति पुष्करम् ॥ १६४

[1]अष्टकः—

स राजाऽस्त्वकृतप्रज्ञः कामवृत्तोऽथ पापकृत् ।
अधर्मेणानुशास्तूर्वीं यस्ते हरति पुष्करम् ॥ १६५

शुकः—

[2]शूद्रयोनौ द्विजातिस्तु रेतो मुञ्चतु कामतः ।
सन्यासी मैथुनं गच्छेद् यस्ते हरति पुष्करम् ॥ १६६

यमः—

औपासनविहीनस्तु देवब्राह्मणनिन्दकः ।
देवसत्राधिकार्यस्तु यस्ते हरति पुष्करम् ॥ १६७

अरुन्धती—

श्वश्र्वा[3]ऽपवादं वदतु भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु या ते हरति पुष्करम् ॥ १६८

भारद्वाजः—

[4]सदा वसतु सन्यासी ग्रामे वा नगरेऽपि वा ।
बन्धुभिस्सहवासोऽस्तु यस्ते हरति पुष्करम् ॥ १६९

1. क—अष्टावक्रः—
2. अ-क-ख -अर्धचतुष्टयं नास्ति
3. घ—विवादं
4. अ-क-घ—अर्धद्वयं नास्ति

वालखिल्यः—

एकपादेन वृत्त्यर्थं ग्रामद्वारेषु तिष्ठतु ।
धर्मज्ञस्त्यक्तधर्मोऽस्तु यस्ते हरति पुष्करम् ॥ १७०

पशुसखः—

अग्निहोत्रमनादृत्य स सुखं स्वपतु द्विजः ।
परिव्राट् कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ॥ १७१

भीष्मः—

ततस्तु तैश्शपथैश्शप्यमानैर्
नानाविधैर्बहुभिः कौरवेन्द्र ।
सहस्राक्षो देवराट् सम्प्रहृष्यन्
समीक्ष्य तं कोपनं विप्रमुख्यम् ॥ १७२

अथाब्रवीन्मघवान् प्रत्ययं स्वं
स्वयं समालभ्य तमृषिं जातरोषम् ।
ब्रह्मर्षिदेवर्षिराजर्षिमध्ये
यं तं निबोधेह समेत्य राजन् ॥ १७३

शतक्रतुः—

अध्वर्यवे दुहितरं ददातु
छन्दोगे वाऽऽचरितब्रह्मचर्ये ।

अथर्वणं वेदमधीत्य विप्रस्
स्नायीत [1]यः पुष्करमाददाति ॥ १७४

सर्वान् वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः ।
ब्रह्मणस्सदनं यातु यस्ते हरति पुष्करम् ॥ १७५

अगस्त्यः—

आशीर्वादस्त्वया प्रोक्तश् शपथो बलसूदन ।
दीयतां पुष्करं मह्यम् एष धर्मस्सनातनः ॥ १७६

इन्द्रः—

न मया भगवँल्लोभाद् धृतं पुष्करमद्य वै ।
धर्मं तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥ १७७

धर्मश्श्रुतस्समुत्कर्षो धर्मसेतुरनामयः ।
आर्षो वै शाश्वतो नित्यम् अव्ययोऽयं मया श्रुतः ॥ १७८

तदिदं गृह्यतां विद्वन् पुष्करं मुनिसत्तम ।
अतिक्रमं मे भगवन् क्षन्तुमर्हस्यनिन्दित ॥ १७९

भीष्मः—

इत्युक्तस्स महेन्द्रेण तपस्वी कोपनो भृशम् ।
जग्राह पुष्करं धीमान् प्रसन्नश्चाभवत् पुनः ॥ १८०

प्रययुस्ते ततो भूयस् तीर्थानि वनगोचराः ।
पुण्यतीर्थेषु च तदा गात्राण्याप्लावयन्ति ते ॥ १८१

1. क-ब—यस्ते

आख्यानं य इदं युक्तः पठेत् पर्वणि पर्वणि ।
न मूर्खं जनयेत् पुत्रं न भवेच्च निराकृतिः ॥ १८२

[1]न तमापत् स्पृशेत् काचिन्न ज्वरो नाप्यहङ्कृतिः ।
विरजाश्श्रेयसा युक्तः प्रेत्य सद्गतिमाप्नुयात् ॥ १८३

यश्च शास्त्रमनुध्यायेद् ऋषिभिः परिपालितम् ।
स गच्छेद्ब्रह्मणो लोकम् अव्ययं च नरोत्तम ॥ १८४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ ८१ ॥ आनुशासनिकपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
[ अस्मिन्नध्याये १८४ श्लोकाः ]

---

1. अ—इदमर्धं नास्ति

## ॥ द्व्यशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति छत्रोपानत्प्रवृत्तिप्रदाननिदानकथनाय सूर्यजमदग्निसंवादानुवादः ॥ १ ॥ जमदग्निना रेणुकायाः स्वधनुर्निस्सृतशराणां पुनः पुनरादाने नियोजनेन बाणक्रीडारम्भः ॥ २ ॥ रेणुकया सूर्यतेजःप्रतप्तशिरःपादतया तरुच्छायाश्रयणेन शरानयनविलम्बने रुष्टेन मुनिना तत्कारणप्रश्नः ॥ ३ ॥ रेणुकया तन्निवेदने मुनिना कोपाच्छरेण भूमौ सूर्यनिपातनोद्यमनम् ॥ ४ ॥ भयात्सूर्येण विप्ररूपधारणेन भुवमेत्य तत्प्रसादनम् ॥ ५ ॥

युधिष्ठिरः—

यदिदं श्राद्धधर्मेषु दीयते पुरुषर्षभ ।
छत्रं चैतत् समुत्पन्नं कथञ्चैतत् प्रदीयते ॥ १
केवलं श्राद्धधर्मेषु [1]पुण्यं केष्वभिधीयते ॥ १॥
एतद् विस्तरतो राजञ् श्रोतुमिच्छामि तत्त्वतः ॥ २

भीष्मः—

शृणु राजन्नवहितश् छत्रोपानहविस्तरम् ।
यथैतत् प्रथितं लोके येन चैव प्रकीर्तितम् ॥ ३
यथा चाक्षय्यतां प्राप्तं पुण्यतां च यथा गतम् ।
सर्वमेतदशेषेण प्रवक्ष्यामि जनाधिप ॥ ४

1. ख—अयं पादोऽनन्तरश्च न स्तः

[1]इतिहासं पुरावृत्तम् इदं शृणु नराधिप ।
जमदग्नेस्तु संवादं सूर्यस्य च महात्मनः ॥ ५

पुरा स भगवान् साक्षाद् धनुषा क्रीडति प्रभो ।
सन्धाय सन्धाय शरांश् चिक्षेप किल भार्गवः ॥ ६

तान् क्षिप्तान् रेणुका सर्वास् तस्येषून् दीप्ततेजसः ।
आनाय्य सा तदा तस्मै प्रादादसकृदच्युत ॥ ७

अथ तेन स शब्देन ज्यातलस्य शरस्य च ।
प्रहृष्टस्सम्प्रचिक्षेप सा च प्रत्याजहार तान् ॥ ८

[2]ततो मध्याह्नमारूढे ज्येष्ठामूलं दिवाकरे ।
स सायकान् द्विजो विद्ध्वा रेणुकामिदमब्रवीत् ॥ ९

गच्छानय विशालाक्षि शरानेतान् धनुश्च्युतान् ।
यावदे[3]तान् सुखात् सुभ्रु क्षिपामीति जनाधिप ॥ १०

सा गच्छन्त्यन्तरा छायावृक्षमाश्रित्य भामिनी ।
तस्थौ तस्या हि सन्तप्तं शिरः पादौ तथैव च ॥ ११

स्थिता सा तु मुहूर्तं तु भर्तुश्शापभयाच्छुभा ।
ययावानयितुं भूयस् सायका[4]नायतेक्षणा ॥ १२

---

1. ख—इदमर्धं नास्ति 2. क-ख—अर्धत्रयं नास्ति
3. क—तच्च्युतान्; ख—तान् सुखं
घ—यावदेवंतच्च्युतान् सुभ्रु
4. ख—नसिते

प्रत्याजगाम च शरांस् तानादाय यशस्विनी ॥ १२॥
सा हि प्रस्विन्नसर्वाङ्गी पद्भ्यां दुःखं नियच्छती ।
उपाजगाम भर्तारं भयाद्भर्तुः प्रवेपती ॥ १३॥
स तामृषिस्ततः क्रुद्धो वाक्यमाह शुभाननाम् ।
रेणुके किं चिरेण त्वम् आगतेति पुनः पुनः ॥ १४॥

रेणुका—

शिरस्तप्तं प्रदीप्तौ मे पादौ चैव तपोधन ।
सूर्यतेजोनिरुद्धाऽहं वृक्षच्छायामुपाश्रिता ॥ १५॥
एतस्मात् कारणाद् ब्रह्मंश् चिरमेतत् कृतं मया ।
एतज्ज्ञात्वा मम विभो मा क्रुधस्त्वं तपोधन ॥ १६॥

जमदग्निः—

अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ॥ १७॥

भीष्मः—

स विष्फार्य धनुर्दिव्यं गृहीत्वा च बहून् शरान् ।
अतिष्ठत् सूर्यमभितो यतो याति ततोमुखः ॥ १८॥
अथ तं प्रहरिष्यन्तं सूर्योऽभ्येत्य वचोऽब्रवीत् ।
द्विजरूपेण कौन्तेय किं ते सूर्योऽपराध्यति ॥ १९॥
आदत्ते रश्मिभिस्सूर्यो दिवि विद्वस्ततस्ततः ।
रसान् हि दिव्यान् वर्षासु प्रवर्षति दिवाकरः ॥ २०॥

ततोऽन्नं जायते विप्र मनुष्याणां सुखावहम् ।
अन्नं प्राणा इति तथा वेदेषु परिपठ्यते ॥ २१॥

तथाऽभ्रेषु निगूढश्च रश्मिभिः परिवारितः ।
सप्तद्वीपानिमान् ब्रह्मन् वर्षेणाभिप्रवर्षति ॥ २२॥

ततस्तदौषधीनां च वीरुधां पत्रपुष्पकम् ।
सर्वं वर्षाभिनिर्वृत्तम् अन्नं सम्भवति प्रभो ॥ २३॥

जातकर्माणि सर्वाणि व्रतोपनयनानि च ।
गोदानानि विवाहाश्च तपो यज्ञसमृद्धयः ॥ २४॥

[1]सत्राणि दानानि तथा संयोगा वित्तसञ्चयाः ।
अन्नतस्सम्प्रवर्तन्ते तथा तद् वेत्थ भार्गव ॥ २५॥

रमणीयानि यावन्ति यावदारम्भकाणि च ।
सर्वमन्नात् प्रभवति विदितं कीर्तयामि ते ॥ २६॥

[2]सर्वाणि वेत्थ वै विप्र यदेतत् कथितं मया ।
प्रसादये त्वां विप्रर्षे किं ते सूर्यो निपात्यते ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. क-घ—सर्वाणि    2. क-घ—सर्वं हि वेत्थ वै विप्र

## ॥ त्र्यशीतितमोऽध्यायः ॥

जमदग्निना सौरातपतापनिवारणोपायकल्पनं चोदितेन सूर्येण तस्मै छत्रोपानत्प्रदानम् ॥ १ ॥ एवं भीष्मेण युधिष्ठिरं प्रति तत्प्रवृत्तिकथन-पूर्वकं तद्दानप्रशंसनम् ॥ २ ॥

युधिष्ठिरः—

एवं तथा प्रयाचन्तं भास्करं मुनिसत्तमः ।
जमदग्निर्महातेजाः किं कार्यं प्रत्यपद्यत ॥ १

भीष्मः—

तथा प्रयाचमानस्य मुनिरग्निसमप्रभः ।
जमदग्निश्शमं नैव जगाम कुरुनन्दन ॥ २

ततस्सूर्यो मधुरया वाचा तमिदमब्रवीत् ।
कृताञ्जलिर्विप्ररूपी प्रणम्यैनं विशां पते ॥ ३

सूर्यः—

[1]चलं निमित्तं ब्रह्मर्षे सदा सूर्यस्य गच्छतः ।
कथं चलं वेत्स्यसि तं सदा यान्तं दिवाकरम् ॥ ४

जमदग्निः—

स्थिरं वाऽपि चलं वाऽपि जाने त्वां ज्ञानचक्षुषा ।
अवश्यं विनयाधानं कार्यमद्य तवानघ ॥ ५

1. ख—जगन्निमित्तं ब्रह्मर्षे सदा सूर्योऽपि गच्छति । [ पाठान्तरम् ]

अपराह्णे वै निमेषार्धं तिष्ठसि त्वं दिवाकर ।
तत्र वेत्स्यामि सूर्य त्वां न मेऽस्त्यत्र विचारणा ॥ ६

सूर्यः—

असंशयं मां ब्रह्मर्षे वेत्स्यसे धन्विनां वर ।
अपकारिणं तु मां विद्धि भगवञ् शरणागतम् ॥ ७

भीष्मः—

ततः प्रहस्य भगवाञ् जमदग्निरुवाच तम् ॥ ७॥

जमदग्निः—

न भीस्सूर्य त्वया कार्या प्रणिपातं गतो ह्यसि ॥ ८
ब्राह्मणेष्वपि यज्ज्ञानं धैर्यं च धरणीतले ।
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च ॥ ९
दीप्तिमग्नेः प्रभां मेरोः [1]प्रतापं तपनस्य च ।
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम् ॥ १०
भवेत् स गुरुतल्पी च ब्रह्महा च तथा भवेत् ।
सुरापानं च कुर्यात् स यो हन्याच्छरणागतम् ॥ ११
एतस्य त्वपनीतस्य समाधिं त्वनुचिन्तय ।
यथा सुखगमः पन्था भवेत्त्वद्रश्मितापितः ॥ १२

भीष्मः—

एतावदुक्त्वा भगवांस् तूष्णीमासीद्भृगूत्तमः ।

---

1. अ-क-घ--प्रतापं धनदस्य च

अथ सूर्योऽददात्तस्मै छत्रोपानहमाशु वै ॥ १३

सूर्यः—

महर्षे सशिरस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके ॥ १४

अद्यप्रभृति चैवैतल्लोके सम्प्रचरिष्यति ।
पुण्यदानेषु सर्वेषु परमक्षय्यमेव च ॥ १५

भीष्मः—

उपानहौ च च्छत्रं च सूर्येणैव प्रकीर्तितम् ।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥ १६

तस्मात् प्रयच्छ विप्रेभ्यश् छत्रोपानहमुत्तमम् ।
धर्मस्ते सुमहान् भावी न तत्रास्ति विचारणा ॥ १७

छत्रं हि भरतश्रेष्ठ यः प्रदद्याद्द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥ १८

स शक्रलोके वसति पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥ १९

उपानहौ च यो दद्याच् छ्लक्ष्णौ स्नेहसमन्वितौ ।
स्नातकाय महाबाहो संश्रिताय द्विजातये ॥ २०

सोऽपि लोकानवाप्नोति दैवतैरभिपूजितः ।
गोलोकेषु मुदा युक्तो वसति प्रेत्य भारत ॥ २१

एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम् ।
छत्रोपानहधर्मस्य फलं भरतसत्तम ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

## ॥ चतुरशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पराशरोक्तानां शूद्रधर्माणां मृत्तिकाशौचादीनां च निरूपणम् ॥ १ ॥ ब्राह्मणादिधर्मनिरूपणपूर्वकं शूद्रस्य यतिशुश्रूषाप्रकारनिरूपणम् ॥ २ ॥ यतिशुश्रूषाप्रशंसनम् ॥ ३ ॥ यतिशुश्रूषादि नानाधर्मकथनम् ॥ ४ ॥ पुरुषस्य मृतिसूचकलिङ्गैः स्वमरणनिश्चयेन भगवत्स्मरणादिपूर्वकं देहत्यागे स्वर्गभोगप्रकारस्य सुकृतशेषेण पुनर्भूलोके जननादिप्रकारादेश्च कथनम् ॥ ५ ॥ पुरुषस्य पुण्यविशेषेण पुनः पुनः स्वर्गभूम्यादिपरिवर्तनेन जातवैराग्यस्य ब्रह्मज्ञानेनापुनरावृत्तिशाश्वतपदप्राप्त्यादिप्रकारप्रतिपादनम् ॥ ६ ॥ चातुर्वर्ण्यस्य श्रेयस्साधनोपायप्रतिपादकपराशरवचनानुवादः ॥ ७ ॥

युधिष्ठिरः—
शूद्राणामिह शुश्रूषा नित्यमेवानुवर्णिता ।
कैः कारणैः कतिविधा शुश्रूषा समुदाहृता ॥ १

के च शुश्रूषया लोका विहिता भरतर्षभ ।
[1]शूद्राणां भरतश्रेष्ठ ब्रूहि मे धर्मलक्षणम् ॥ २

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
शूद्राणामनुकम्पार्थं यदुक्तं ब्रह्मवादिना ॥ ३

वृद्धः पराशरः प्राह धर्मं शुभ्रमनामयम् ।
अनुग्रहार्थं वर्णानां शौचाचारसमन्वितम् ॥ ४

धर्मोपदेशमखिलं यथावदनुपूर्वशः ।
शिष्यानध्यापयामास शास्त्रमर्थवदर्थवित् ॥ ५

पराशरः—

क्षान्तेन्द्रियेण [2]दान्तेन शुचिनाऽचापलेन वै ।
अबलेन च धीरेण नोत्तरोत्तरवादिना ॥ ६

[3]अलुब्धेनानृशंसेन ऋजुना ब्रह्मवादिना ।
चारित्रतत्परेणैव सर्वभूतहितात्मना ॥ ७

अरयष्षड्विजेतव्या नित्यं स्वं देहमाश्रिताः ।
कामक्रोधौ च लोभश्च मानमोहौ मदस्तथा ॥ ८

---

1. अ-क-घ—शुश्रूषां
2. अ-क-घ—दानेन
3. ख—अदुर्बलेन धीरेण शान्तेनोत्तरवादिना ।
क-घ—दुर्बलेन च धीरेण उत्तरोक्तविधायिना । [पाठान्तरम्]

विधिना धृतिमास्थाय शुश्रूषुरनहङ्कृतः ।
वर्णत्रयस्यानुमतो यथाशक्ति यथाबलम् ॥ ९

कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
आस्थाय नियमं धीमान् शान्तो दान्तो जितेन्द्रियः ॥ १०

[1]रक्षोयक्षजनद्वेषी शेषान्नकृतभोजनः ।
वर्णत्रयान्मधु यथा भ्रमरो धर्ममाचरन् ॥ ११

यदि शूद्रस्तपः कुर्याद् वेददृष्टेन कर्मणा ।
इह चास्य परिक्लेशः प्रेत्य चास्याशुभा गतिः ॥ १२

अधर्म्यमयशस्यं च तपश्शूद्रे प्रतिष्ठितम् ।
अमार्गेण तपस्तप्त्वा म्लेच्छेषु फलमश्नुते ॥ १३

अन्यथा वर्तमानो हि न शूद्रो धर्ममर्हति ।
अमार्गेण प्रयातानां प्रत्यक्षादुपलभ्यते ॥ १४

चातुर्वर्ण्यव्यपेतानां [2]जातिमूर्तिपरिग्रहः ॥ १४॥

तथा ते हि शकाश्चीनाः काम्भोजाः पारदास्तथा ।
शबराः पह्लवाश्चैव तुषारयवनास्तथा ॥ १५॥

दार्वाश्च दरदाश्चैव उज्जिहानास्तथेतराः ।

1. ख—नित्यं दक्षजनान्वेषी

2. क-घ—जात; ख—जातिमुक्त

[1]वेणाश्च कङ्कणाश्चैव सिंहला मद्रकास्तथा ॥ १६॥

किष्किन्धकाः पुलिन्दाश्च कह्वाश्चान्ध्रा[2]स्सनीरगाः ।
[3]गान्धिका द्रमिडाश्चैव बर्बराश्चूचुकास्तथा ॥ १७॥

[4]किराताः पार्वतेयाश्च कोलाश्चो[5]षास्सखाषकाः ।
[6]आरुकाश्चैव दोहाश्च याश्चान्या म्लेच्छजातयः ॥ १८॥

विकृता विकृताचारा दृश्यन्ते क्रूरबुद्धयः ।
अमार्गेणाश्रिता धर्मं ततो जात्यन्तरं गताः ॥ १९॥

अमार्गोपार्जितस्यैतत् तपसो विदितं फलम् ।
न नश्यति कृतं कर्म शुभं वा यदि वाऽशुभम् ॥ २०॥

अत्राप्येते वसु प्राप्य [7]विकर्म तपसाऽर्जितम् ।
पाषण्डानर्चयिष्यन्ति धर्मकामा वृथाश्रमाः ॥ २१॥

एवं चतुर्णां वर्णानाम् आश्रमाणां च पार्थिव ।
विपरीतं वर्तमाना म्लेच्छा जायन्त्यबुद्धयः ॥ २२॥

---

1. ख—वेताश्च
2. ख—सदिद्धराः; अ—सुनीतगाः
3. क-ख—गण्डका; ख—गविका
4. ख—पार्वतीयाश्च काशाश्च किराताश्चोलकाश्शकाः।
5. ख—लाः
6. क—आरूहाश्च विदे; ख—कुकुराश्च विदे
7. क-ख—विक्रमं

स्वाध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम् ।
[1]वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ॥ २३॥

व्युच्छेदात्तस्य धर्मस्य निरयायोपपद्यते ॥ २४

ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ।
पुनश्च निरयं तेषां तिर्यग्योनिश्च शाश्वती ॥ २५

ये तु सत्पथमास्थाय वर्णाश्रमकृतं पुरा ।
सर्वान् विमार्गानुत्सृज्य स्वधर्मपथमाश्रिताः ॥ २६

सर्वभूतदयावन्तो दैवतद्विजपूजकाः ।
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः ॥ २७
तेषां [2]विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ॥ २७॥

[3-4]उपादानविधिं कृत्स्नं शुश्रूषाधिगमं तथा ।
शिष्टोपनयनं चैव मन्त्राणि विविधानि च ॥ २८॥

तथा शिष्यपरीक्षां च शास्त्रप्रामाण्यदर्शनात् ।
प्रवक्ष्यामि यथातत्त्वं यथावदनुपूर्वशः ॥ २९॥

शौचकृत्यस्य [5]शौचार्थान् सर्वानेव विशेषतः ॥ ३०

महाशौचप्रभृतयो दृष्टास्तत्त्वार्थदर्शिभिः ।

---

1. ख—इदमर्धं नास्ति
2. ख—सिद्धिं
3. अ—अर्धचतुष्टयं नास्ति
4. ख—उपयानविधिं
5. ख—पूर्वार्थान्

[1]तत्रापि शूद्रो भिक्षूणाम् [2]मृदं देशं च कल्पयेत् ॥ ३१

भिक्षुभिस्सुकृतप्रज्ञैः केवलं धर्ममाश्रितैः ।
सम्यग्दर्शनसम्पन्नैर् गताध्वनि हितार्थिभिः ॥ ३२

अवकाशमिदं मेध्यं निर्मितं कामवीरुधम् ॥ ३२॥

निर्जनं संवृतं बुद्ध्वा नियतात्मा जितेन्द्रियः ।
सजलं भाजनं [3]शुभ्रं मृत्तिकां च परीक्षिताम् ॥ ३३॥

परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ॥ ३४

उदङ्मुखो दिवा कुर्याद् रात्रौ चेद्दक्षिणामुखः ॥ ३४॥

अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ।
असमाप्ते तथा शौचे न वाचं किञ्चिदीरयेत् ॥ ३५॥

कृतकृत्यस्तथाऽऽचम्य गच्छन्नोदीरयेद्वचः ॥ ३६

शौचार्थमुपविष्टस्तु मृद्भाजनपुरस्कृतः ।
स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे ॥ ३७

शौचं कुर्याच्छनैर्धीरो बुद्धिपूर्वमसङ्करम् ॥ ३७॥

[4]पाणिना शुद्धमुदकं सङ्गृह्य विधिपूर्वकम् ।
विप्रुषश्च यथा न स्युर् यथा चोरू न संस्पृशेत् ॥ ३८॥

---

1. क-घ—इदमर्धं नास्ति
2. अ—इदं शेषं च
3. क-घ—स्थाप्य
4. अ—अर्धमिदं नास्ति; ख—पाणिना पाणिमुदकं संक्रम्य

अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ।
हस्ताभ्यां च तथा विप्रो हस्तं हस्तेन संस्पृशेत् ॥ ३९॥
अपाने नव देयास्स्युर् इति वृद्धानुशासनम् ।
मृत्तिका दीयमाना हि शोधयेद्देशमञ्जसा ॥ ४०॥
तस्मात् पाणितले देया मृत्तिकास्तु पुनः पुनः ॥ ४१
बुद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत् स्फिजौ ।
[1]यथा घातो हि न भवेत् क्लेदजः परिधानके ॥ ४२
तथा गुदं प्रमार्जेत शौचार्थं तु [2]पुनः पुनः ॥ ४२॥
प्रतिपादं ततस्त्यक्त्वा शौचमुत्थाय कारयेत् ।
सव्ये द्वादश देयास्स्युस् तिस्रस्तिस्रः पुनः पुनः ॥ ४३॥
[3]देया कूर्परके हस्ते पृष्ठबन्धे पुनः पुनः ॥ ४४
तथैवादर्शके दद्याच् चतस्रस्तूभयोरपि ।
उभयोर्हस्तयोरेवं सप्त सप्त प्रदापयेत् ॥ ४५
ततोऽन्यां मृत्तिकां गृह्य कार्यं शौचं पुनस्तयोः ।
हस्तयोरेवमेतद्धि महाशौचं विधीयते ॥ ४६
[4]ततोऽन्यथा न कुर्वीत विधिरेष सनातनः ॥ ४६॥

---

1. क-घ—यथोत्पातो ; ख—यथोद्घातो × क्लेशजः
2. ख—शनैश्शनैः
3. घ—इदमर्धं नास्ति
4. क-घ—अर्धचतुष्टयं नास्ति

उपस्थे मूत्रशौचं स्याद् अत ऊर्ध्वं विधीयते ।
अतोऽन्यथा तु यः कुर्यात् प्रायश्चित्तीयते तु सः ॥ ४७॥

मलोपहतचेलस्य द्विगुणं तु विधीयते ।
सहपादमथोरुभ्यां हस्तशौचमसंशयम् ॥ ४८॥

अवधीरयमाणस्य सन्देह उपजायते ।
यथा यथा विशुद्ध्येत तत्तथा तदुपक्रमेत् ॥ ४९॥

सकर्दमं तु वर्षासु गृहमाविश्य सङ्कटम् ।
हस्तयोर्मृत्तिकास्तिस्रः पादयोष्षट् प्रदापयेत् ॥ ५०॥

कामं दत्त्वा गुदे दद्यात् तिस्रः पञ्चां तथैव च ।
हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ॥ ५१॥

मूत्रशौचे तथा [1]हस्तौ पादाभ्यां चानुपूर्वशः ।
[2]नैष्ठिके स्थानशौचे तु महाशौचं विधीयते ॥ ५२॥

क्षारौषराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनम् अमेध्यस्य विधीयते ॥ ५३॥

स्नानशाट्यां मृदस्तिस्रो हस्ताभ्यां चानुपूर्वशः ।
शौचं प्रयत्नतः कृत्वा कम्पयानस्समुद्धरेत् ॥ ५४॥

देयाश्चतस्रस्तिस्रो वा द्वे वाऽप्येकां तथाऽऽपदि ।

---

1. क-ख-व—ह्यष्टौ पा
2. क-घ—अर्धचतुष्टयं नास्ति; ख—नैष्ठिके स्नान

कालमासाद्य देशं च शौचस्य गुरुलाघवम् ॥ ५५॥
विधिनाऽनेन शौचं तु नित्यं कुर्यादतन्द्रितः ॥ ५६
अविप्रेक्षन्नसम्भ्रान्तः पादौ प्रक्षाल्य तत्परः ।
सुप्रक्षालितपादस्तु पाणिमामणिबन्धनात् ॥ ५७
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ॥ ५७॥
मनोगतास्तु निश्शब्दा निश्शब्दं त्रिरपः पिबेत् ।
द्विर्मुखं परिमृज्याच्च खानि चोपस्पृशेद्बुधः ॥ ५८॥
ऋग्वेदं तेन प्रीणाति प्रथमं यः पिबेदपः ।
द्वितीयं च यजुर्वेदं तृतीयं साम एव च ॥ ५९॥
[1]मृज्यते प्रथमं तेन अथर्वा प्रीतिमाप्नुयात् ।
द्वितीयेनेतिहासं च पुराणस्मृतिदेवताः ॥ ६०॥
यच्चक्षुषि समाधत्ते तेनादित्यं तु प्रीणयेत् ।
प्रीणाति [2]वायुं घ्राणं च दिशश्चाप्यथ श्रोत्रयोः ॥ ६१॥
ब्रह्माणं तेन प्रीणाति यन्मूर्धनि समा[3]लभेत् ।
[4]समुत्क्षिपति चापोर्ध्वम् आकाशं तेन प्रीणयेत् ॥ ६२॥
प्रीणाति विष्णुः पद्भ्यां तु सलिलं वै समादधत् ॥ ६३

1. ख—स्पृश्यते
2. ख—वायुं घ्राणे तु
3. अ-क-ग—पयेत्
4. ख—यदुपक्षिपति चाप्यूर्ध्वम्

प्राङ्मुखोदङ्मुखो वाऽपि अन्तर्जानुरुपस्पृशेत् ।
सर्वत्र विधिरित्येव भोजनादिषु नित्यशः ॥ ६४

[1]दन्तेषु दन्तलग्नेषु उच्छिष्टः पुनराचमेत् ।
विधिरेष समुद्दिष्टश् शौचे चाभ्युक्षणं स्मृतम् ॥ ६५

शूद्रस्यैष विधिर्दृष्टो गृहान्निष्क्रमतस्सतः ।
नित्यं चालुप्तशौचेन वर्तितव्यं कृतात्मना ॥ ६६

यशस्कामेन भिक्षुभ्यश् शूद्रेणात्महितार्थिना* ॥ ६६॥

[2]क्षत्रा आरम्भयज्ञास्तु हविर्यज्ञा विशस्स्मृताः ।
शूद्राः परिचारयज्ञा जपयज्ञास्तु ब्राह्मणाः ॥ ६७॥

शुश्रूषाजीविनश्शूद्रा वैश्या विपणजीविनः ।
[3]अनिष्टनिग्रहाः क्षत्रा विप्रास्स्वाध्यायजीविनः ॥ ६८॥

तपसा शोभते विप्रो राजन्यः पालनादिभिः ।
आतिथ्येन तथा वैश्यश् शूद्रो दास्येन शोभते ॥ ६९॥

यतात्मना तु शूद्रेण शुश्रूषा नित्यमेव तु ।
कर्तव्या त्रिषु वर्णेषु प्रायेणाश्रमवासिषु ॥ ७०॥

---

1. ख—दन्तवद्दन्त

* सर्वेषु कोशेषु अर्धैवाध्यायसमाप्तिर्दृश्यते

2. ख—क्षत्रस्यारम्भयज्ञस्तु हविर्यज्ञो विशां स्मृतः ।

3. क-घ—इदमर्धं नास्ति

अशक्तेन त्रिवर्णस्य सेव्या ह्याश्रमवासिनः ।
यथाशक्ति यथाप्रज्ञं यथाधर्मं यथाश्रुतम् ॥ ७१॥

विशेषेणैव कर्तव्या शुश्रूषा भिक्षुकाश्रमे ॥ ७२

आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधानमिति मन्यन्ते शिष्टाश्शास्त्रविनिश्चये ॥ ७३

यच्चोपदिश्यते शिष्टैश् श्रुतिस्मृतिविधानतः ।
तथाऽऽस्थेयमशक्तेन स धर्म इति निश्चितः ॥ ७४

अतोऽन्यथा तु कुर्वाणश् श्रेयो नाप्नोति मानवः ।
तस्माद्भिक्षुषु शूद्रेण कार्यमात्महितं सदा ॥ ७५

इह यत् कुरुते श्रेयस् तत् प्रेत्य [1]समुपाश्नुते ।
तच्चानसूयता कार्यं कर्तव्यं यद्धि मन्यते ॥ ७६

असूयता कृतस्येह फलं दुःखादवाप्यते ॥ ७६॥

प्रियवादी जितक्रोधो वीततन्द्रिरमत्सरः ।
क्षमावाञ् शीलसम्पन्नस् सत्यधर्मपरायणः ॥ ७७॥

आपद्भावेन कुर्याद्धि शुश्रूषां भिक्षुकाश्रमे ॥ ७८

अयं मे परमो धर्मस् त्वनेनेदं सुदुस्तरम् ।
संसारसागरं घोरं तरिष्यामि न संशयः ॥ ७९

1. क-ख—सुखमाप्नुते

निर्भयो देहमुत्सृज्य यास्यामि परमां गतिम् ।
नातः परं ममास्त्यन्य एष धर्मस्सनातनः ॥ ८०

एवं सञ्चिन्त्य मनसा शूद्रो बुद्धिसमाधिना ।
कुर्यादविमना नित्यं शुश्रूषाधर्ममुत्तमम् ॥ ८१

शुश्रूषानियमेनेह भाव्यं शिष्टाशिना सदा ।
शमान्वितेन दान्तेन कार्याकार्यविदा सदा ॥ ८२

सर्वकार्येषु कृत्यानि कृतान्येव च दर्शयेत् ।
यथा प्रीतो भवेद्भिक्षुस् तथा कार्यं प्रसाधयेत् ॥ ८३

[1]यदकल्यं भवेद्भिक्षोर् न तत् कार्यं समाचरेत् ॥ ८३॥

यदाश्रमस्याविरुद्धं धर्ममात्राभिसंहितम् ।
तत् कार्यमविचारेण नित्यमेव शुभार्थिना ॥ ८४॥

मनसा कर्मणा वाचा नित्यमेव प्रसादयेत् ॥ ८५

स्थातव्यं तिष्ठमानेषु गच्छमानाननुव्रजेत् ।
आसीनेष्वासितव्यं च नित्यमेवानुवर्तिना ॥ ८६

धर्मलब्धेन स्नेहेन पादौ सम्प्रदिहेत् सदा ।
उद्वर्तनादींश्च तथा कुर्यादप्रतिचोदितः ॥ ८७

नैशकार्याणि कृत्वा तु नित्यं चैवानुचोदितः ।
यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम् ॥ ८८

1. ख—यदकार्यं

भिक्षूणां निलयं गत्वा प्रणम्य विधिपूर्वकम् ।
ब्रह्मपूर्वान् गुरूंस्तत्र प्रणम्य नियतेन्द्रियः ॥ ८९
तथाऽऽचार्यपुरोगाणाम् अनुकुर्यान्नमस्क्रियाम् ॥ ८९॥
स्वधर्मचारिणां चापि सुखं पृष्ट्वाऽभिवाद्य च ॥ ९०
यो भवेत् पूर्वसंसिद्धस् तुल्यधर्मा भवेत् सदा ।
तस्मै प्रणामः कर्तव्यो नेतरेषां कदाचन ॥ ९१
अनुक्त्वा तेषु चोत्थाय नित्यमेव यतव्रतः ।
सम्मार्जनमथो कृत्वा कृत्वा चाप्युपलेपनम् ॥ ९२
ततः पुष्पबलिं दद्यात् पुष्पाण्यादाय धर्मतः ।
निष्क्रम्यावसथात्तूर्णम् अन्यत् कर्म समाचरेत् ॥ ९३
यथोपघातो न भवेत् स्वाध्यायेऽऽश्रमिणां तथा ।
उपघातं तु कुर्वाण एनसा सम्प्रयुज्यते ॥ ९४
तथाऽऽत्मा प्रणिधातव्यो यथा ते प्रीतिमाप्नुयुः ॥ ९४॥
परिचारकोऽहं वर्णानां त्रयाणां धर्मतस्स्मृतः ।
किमुताश्रम[1]वृद्धानां यथालब्धोपजीविनाम् ॥ ९५॥
भिक्षूणां [2]गतरागाणां केवलं ज्ञानदर्शिनाम् ।
विशेषेण मया कार्या शुश्रूषा नियतात्मना ॥ ९६॥

1. क-ब—युक्तानां
2. क-घ—गतपौराणां; ख—गतपापानां

तेषां प्रसादात्तपसा प्राप्स्यामीष्टां शुभां गतिम् ॥ ९७

एवमेतद्विनिश्चित्य यदि सेवेत भिक्षुकान् ।
विधिना यथोपदिष्टेन प्राप्नोति परमां गतिम्* ॥ ९८

न तथा सम्प्रदानेन नोपवासादिभिस्तथा ।
इष्टां गतिमवाप्नोति यथा शुश्रूषकर्मणा ॥ ९९

यादृशेन तु तोयेन शुद्धिं प्रकुरुते नरः ।
तादृग्भवति तद्धौतम् उदकस्य स्वभावतः ॥ १००

शूद्रोऽप्येतेन मार्गेण यादृशं सेवते जनम् ।
तादृग्भवति संसर्गाद् अचिरेण न संशयः ॥ १०१

तस्मात् प्रयत्नतस्सेव्या भिक्षवो नियतात्मना ।
उदकग्रहणाद्येन स्नपनोद्वर्तनैस्तथा ॥ १०२

अध्वना कर्शितानां च व्याधितानां तथैव च ।
शुश्रूषां नियतः कुर्यात् तेषामापदि यत्नतः ॥ १०३

[1]दर्भाजिनान्यवेक्षेत भैक्षभाजनमेव च ।
[2]यथाकामं च कार्याणि सर्वाण्येवोपसाधयेत् ॥ १०४

प्रायश्चित्तं यथा न स्यात् तथा सर्वं समाचरेत् ॥ १०४॥

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. ख—उदभाजना
2. ख—यथाकालं

व्याधितानां तु प्रयतः चेलप्रक्षालनादिभिः ।
प्रतिकर्मक्रिया कार्या भेषजानयनैस्तथा ॥ १०५॥

पिंषणालेपनं चूर्णं कषायमथ साधनम् ।
[1]तान्यस्य प्रतिचारेषु सुखार्थमुपपादयेत् ॥ १०६॥

[2]भिक्षाटनोऽभिगच्छेत भिषजश्च विपश्चितः ।
ततो विनि[3]ष्क्रियार्थानि द्रव्याणि समुपार्जयेत् ॥ १०७॥

यश्च प्रीतमना दद्याद् आदद्याद्भेषजं नरः ।
अश्रद्धया हि दत्तानि तान्यभोज्याणि भिक्षुभिः ॥ १०८॥

श्रद्धया यदुपादत्तं श्रद्धया चोपपादितम् ।
तस्योपभोगाद्धर्मस्स्याद् व्याधिभिश्च निवर्त्यते ॥ १०९॥

आदेहपतनादेवं शुश्रूषेद्विधिपूर्वकम् ।
न त्वेव धर्ममुत्सृज्य कुर्यात्तेषां प्रतिक्रियाम् ॥ ११०॥

स्वभावतो हि द्वन्द्वानि विप्रयान्त्युपयान्ति च ।
[4]स्वभावतस्सर्वभावा भवन्ति न भवन्ति च ॥ १११॥

सागरस्योर्मिसदृशा विज्ञातव्या गुणात्मकाः ॥ ११२

विद्यादेवं हि यो धीमांस् तत्वविंत्तत्वदर्शनः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा* ॥ ११३

1. ख—नान्य　2. ख-घ—भिक्षादानोपि
3. क-घ—मयार्थानि　4. अ—इदमर्धं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

एवं प्रयतितव्यं हि शुश्रूषार्थमतन्द्रितैः ।
सर्वाभिरुपसेवाभिस् तुष्यन्ति यतयो यथा ॥ ११४

नापराध्येत भिक्षोस्तु न चैवमवधीरयेत् ।
उत्तरं च न सन्दद्यात् क्रुद्धं चैव प्रसादयेत् ॥ ११५

श्रेय एवाभिधातव्यं [1]कर्तव्यं च प्रहृष्टवत् ।
तूष्णीम्भावेन वै तत्र न क्रुद्धमभिसंवदेत् ॥ ११६

[2]नाददीत परस्वानि न गृह्णीयादयाचितम् ।
लब्धालब्धेन जीवेत तथैव परिपोषयेत् ॥ ११७

कोपिनं तु न याचेत ज्ञानविद्वेषकारितः ।
स्थावरेषु दयां कुर्याज् जङ्गमेषु च प्राणिषु ॥ ११८

यथाऽऽत्मनि तथाऽन्येषु समां दृष्टिं निपातयेत् ॥ ११८॥

सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यमानो विचरन् ब्रह्मभूयाय कल्पते ॥ ११९॥

हिंसां वा यदि वाऽहिंसां न कुर्यादात्मकारणात् ।
यत्रेतरो भवेन्नित्यं दोषं तत्र न कारयेत् ॥ १२०॥

एवं स मुच्यते दोषात् परानाश्रित्य वर्तयन् ।
आत्माश्रयेण दोषेण लिप्यते ह्यल्पबुद्धिमान् ॥ १२१॥

---

1. ख—वक्तव्यं 2. अ—इदमर्धद्वयं नास्ति

जरायुजाण्डजाश्चैव उद्भिज्जास्स्वेदजाश्च ये ।
अवध्यास्सर्व एवैते बुधैस्समनुवर्णिताः ॥ १२२॥

निश्चयार्थं विबुद्धानां प्रायश्चित्तं विधीयते ।
हिंसा यथाऽन्या विहिता तथा दोषं प्रयोजयेत् ॥ १२३॥

तथोपदिष्टं गुरुणा शिष्यस्य चरतो विधिम् ॥ १२४

न हि लोभः प्रभवति हिंसा वाऽपि तदात्मिका ।
शास्त्रदर्शनमेतद्धि विहितं विश्वयोनिना ॥ १२५

यद्येतदेवं मन्येत शूद्रो ह्यपि च बुद्धिमान् ।
कृतं कृतवतां गच्छेत् किं पुनर्यो निषेवते ॥ १२६

न शूद्रः पतते कश्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात् प्रतिषेधनम् ॥ १२७

अनुग्रहार्थं मनुना सर्ववर्णेषु वर्णितम् ॥ १२७॥

यदाऽपवादस्तु भवेत् स्त्रीकृतः परिचारके ।
अभ्रावकाशशयनं तस्य संवत्सरं स्मृतम् ॥ १२८॥

तेन तस्य भवेच्छान्तिस् ततो भूयोऽप्युपाव्रजेत् ॥ १२९

सवर्णाया भवेदेतद्धीनायास्त्वर्धमर्हति ।
वर्षत्रयं तु वैश्यायाः क्षत्रियायास्तु षट् समाः ॥ १३०

ब्राह्मण्या तु समेतस्य समा द्वादश कीर्तिताः ॥ १३०॥

कटाग्निना वा दग्धव्यस् तस्मिन्नेव क्षणे भवेत् ।
शिश्नावपातनाद्वाऽपि विशुद्धिं समवाप्नुयात् ॥ १३१॥
अनस्थिबन्धमेकं तु यदि प्राणैर्वियोजयेत् ।
उपोष्यैकाहमादद्यात् प्राणायामांस्तु द्वादश ॥ १३२॥
त्रिस्स्नानमुदके कृत्वा तस्मात् पापात् प्रमुच्यते ।
अस्थिबन्धेषु द्विगुणं प्रायश्चित्तं विधीयते ॥ १३३॥
अनेन विधिना वाऽपि स्थावरेषु न संशयः ।
कायेन पद्भ्यां हस्ताभ्याम् अपराधात्तु मुच्यते ॥ १३४॥
अदुष्टं क्षपयेद्यस्तु सर्ववर्णेषु वाचयेत् ।
तस्याप्यष्टगुणं विद्यात् प्रायश्चित्तं तदेव तु ॥ १३५॥
चतुर्गुणं कर्मकृते द्विगुणं वाक्प्रदूषिते ।
कृत्वा तु मानसं पापं तथैवैकगुणं स्मृतम् ॥ १३६॥
तस्मादेतानि सर्वाणि विदित्वा न समाचरेत् ।
सर्वभूतहितार्थं हि कुशलानि समाचरेत् ॥ १३७॥
एवं समाहितमनास् सेवते यदि सत्तमः ।
तद्गतिस्तत्समाचारस् तन्मनास्तत्परायणः ॥ १३८॥
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ॥ १३९॥
एवं प्रवर्तमानस्तु विनीतः प्रयतात्मवान् ।

निर्णयं पुण्यपापाभ्याम् अचिरेणोपगच्छति* ॥ १४०॥

शुश्रूषानिरतो नित्यम् अरिष्टान्युपलक्षयेत् ।
त्रैवार्षिकं द्विवार्षिकं वा वार्षिकं वा समुत्थितम् ॥ १४१॥

षाण्मासिकं मासिकं वा साप्तरात्रिकमेव वा ।
सर्वांस्तदर्थान् वा विद्यात् तेषां चिह्नानि लक्षयेत् ॥ १४२॥

पुरुषं हिरण्मयं यस्तु तिष्ठन्तं दक्षिणामुखम् ।
लक्षयेदुत्तरेणैव मृत्युस्त्रैवार्षिको भवेत् ॥ १४३॥

शुद्धमण्डलमादित्यम् अरश्मिं सम्प्रपश्यतः ।
संवत्सरद्वयेनैव तस्य मृत्युं समादिशेत् ॥ १४४॥

ज्योत्स्नायामात्मनश्छायां छिद्रां यो हि प्रपश्यति ।
मृत्युं संवत्सरेणैव जानीयात् स विचक्षणः ॥ १४५॥

विशिरस्कां यदा च्छायां पश्येत् पुरुष आत्मनः ।
जानीयादात्मनो मृत्युं षाण्मसेनेह बुद्धिमान् ॥ १४६॥

[1]कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुते यदि ।
जानीयादात्मनो मृत्युं मासेनैव विचक्षणः ॥ १४७॥

शवगन्धमुपाघ्राति अन्यद्वा सुरभिं नरः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—अर्धद्वयं नास्ति

देवतायतनस्थो वै सप्तरात्रेण मृत्युभाक् ॥ १४८॥
कर्णनासापनयनं दन्तदृष्टिरिवागता ।
लुप्त[1]संज्ञं हि करणं सद्यो मृत्युं समादिशेत् ॥ १४९॥
एवमेषामरिष्टानां पश्येदन्यतमं यदि ।
[2]न तं कालं परीक्षेत यथाऽरिष्टं प्रकल्पितम् ॥ १५०॥
अभ्यासेन तु कालस्य गच्छेत पुलिनं शुचिः ।
तत्र प्राणान् प्रमुञ्चेत तं हरिं मनसा स्मरन् ॥ १५१॥
ततोऽन्यं देहमासाद्य गान्धर्वं स्थानमाप्नुयात् ।
तत्रस्थो वसते विंशत् पद्मानि स महाद्युतिः ॥ १५२॥
गन्धर्वैश्चित्रसेनाद्यैस् सहितस्सत्कृतस्तथा ।
नीलवैडूर्यवर्णेन विमानेनावभासयन् ॥ १५३॥
नभस्थलमदीनात्मा सार्धमप्सरसां गणैः ।
छन्दकामानुसारी च तत्र तत्र महीयते ॥ १५४॥
मोदतेऽमरतुल्यात्मा सदाऽमरगणैस्सह ।
पतितश्च क्षये काले क्षणेन विमलद्युतिः ॥ १५५॥
वैश्यस्य बहुवित्तस्य कुलेऽग्र्ये बहुगोधने ।
अवाप्य तत्र वै जन्म स पूतो दैवकर्मणा ॥ १५६॥

1. ख—संज्ञानि पुष्पाणि सद्यो
2. ख—ततः कालं परीक्षेत यथाकालं

छन्दसा जागतेनैव प्राप्तोपनयनं ततः ।
क्षौमवस्त्रोपकरणं द्विजत्वं समवाप्य तु ॥ १५७॥
अधीयमानो वेदार्थान् गुरुशुश्रूषणे रतः ।
ब्रह्मचारी जितक्रोधस् तपस्वी जायते ततः ॥ १५८॥
अधीत्य दक्षिणां दत्त्वा गुरवे विधिपूर्वकम् ।
कृतदारस्समुपैति गृहस्थव्रतमुत्तमम् ॥ १५९॥
ददाति यजते चैव यज्ञैर्विमलदक्षिणैः ।
अग्निहोत्रमुपासन् वै जुह्वंश्चैव यथाविधि ॥ १६०॥
धर्मं सञ्चिनुते नित्यं मृदुगामी जितेन्द्रियः ।
स कालपरिणामात्तु मृत्युना सम्प्रयुज्यते ॥ १६१॥
संस्कृतश्चाग्निहोत्रेण कृतपात्रोपधानवान् ।
संस्कृतो देहमुत्सृज्य मरुद्भिरुपपद्यते ॥ १६२॥
मरुद्भिस्सहितश्चापि तुल्यतेजा महाद्युतिः ।
बालार्कसमवर्णेन विमानेन विराजता ॥ १६३॥
सुखं चरति तत्रस्थो गन्धर्वाप्सरसां गणैः ।
विरजोम्बरसंवीतस् तप्तकाञ्चनभूषणः ॥ १६४॥
छन्दकामानुसारी च द्विगुणं कालमावसेत् ॥ १६५
स निवर्तेत कालेन स्थानादस्मात् परिच्युतः ।
अवितृप्तविहारार्थो दिव्यान् भोगान् विहाय तु ॥ १६६

सञ्जायते नृपकुले गजाश्वरथसङ्कुले ।
पार्थिवीं श्रियमापन्नश् श्रीमान् [1]धर्मपतिर्यथा ॥ १६७
जन्मप्रभृति संस्कारं चौलोपनयनानि च ।
प्राप्य राजकुले तत्र यथावद्विधिपूर्वकम् ॥ १६८
छन्दसा त्रैष्टुभेनेह द्विजत्वमुपनीयते ॥ १६८॥
अधीत्य वेदमखिलं धनुर्वेदं च मुख्यशः ।
समावृत्तस्ततः पित्रा यौवराज्येऽभिषिच्यते ॥ १६९॥
कृतदारक्रियश्श्रीमान् राज्यं सम्प्राप्य धर्मतः ।
प्रजाः पालयते सम्यक् षड्भागकृतसंविधिः ॥ १७०॥
यज्ञैर्बहुभिरीजानस् सम्यगाप्तार्थदक्षिणैः ।
प्रशासति महीं श्रीमान् राज्यमिन्द्रसमद्युतिः ॥ १७१॥
स्वधर्मनिरतो नित्यं पुत्रपौत्रसहायवान् ।
कालस्य वशमापन्नः प्राणांस्त्यजति संयुगे ॥ १७२॥
देवराजस्य भवनम् इन्द्रलोकमवाप्नुते ।
सम्पूज्यमानस्त्रिदशैर् विचचार यथासुखम् ॥ १७३॥
राजर्षिभिः पुण्यकृद्भिर् यथा देवपतिस्तथा ।
तैस्स्तूयते वन्दिभिस्तु नानावाद्यैः प्रबोध्यते ॥ १७४॥
दिव्यजाम्बूनदमयं भ्राजमानं समन्ततः ।

---

1. ख-घ—धनपति

वराप्सरोभिस्सम्पूर्णं देवगन्धर्वसेवितम् ॥ १७५॥

यानमारुह्य विचरेद् यथा शक्रश्शचीपतिः ॥ १७६

स तत्र वसते षष्टिं पद्मानीह मुदाऽन्वितः ।
सर्वांल्लोकाननुचरन् महर्द्धिरवभासयन् ॥ १७७

अथ पुण्यक्षयात्तस्मात् स्थाप्यते भुवि भारत ।
जायते च द्विजकुले वेदवेदाङ्गपारगे* ॥ १७८

ततश्श्रुतिसमापन्नस् संस्कृतश्च यथाविधि ।
चौलोपनयनं तस्य यथावत् क्रियते द्विजैः ॥ १७९

ततोऽष्टमे स वर्षे तु व्रतोपनयनादिभिः ।
क्रियाभिर्विधिदृष्टाभिर् ब्रह्मत्वमुपनीयते ॥ १८०

गायत्रेण छन्दसा तु संस्कृतश्चरितव्रतः ।
अधीयमानो मेधावी शुद्धात्मा नियतव्रतः ॥ १८१

अचिरेणैव कालेन सङ्गान् वेदानवाप्नुते ।
समावृत्तस्स धर्मात्मा समावृत्तक्रियस्तथा ॥ १८२

याजनाध्यापनरतः कुशले कर्मणि स्थितः ।
अग्निहोत्रपरो नित्यं देवतातिथिपूजकः ॥ १८३

यजते विविधैर्यज्ञैर् जपयज्ञैस्तथैव च ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

न्यायागतध[1]नान्वेषी न्यायवृत्तस्तपोधनः ॥ १८४

सर्वभूतहितश्चैव सर्वशास्त्रविशारदः ।
स्वदारपरितुष्टात्मा ऋतुगामी जितेन्द्रियः ॥ १८५

परापवादानिरतस् सत्यव्रतपरस्सदा ।
स कालपरिणामात्तु संयुक्तः कालधर्मणा ॥ १८६

संस्कृतश्चाग्निहोत्रेण यथावद्विधिपूर्वकम् ।
सोमलोकमवाप्नोति देहन्यासा[2]न्न संशयः ॥ १८७

तत्र सोमप्रभैर्देवैर् अग्निष्वात्तैश्च भास्वरैः ।
तथा बर्हिषदैश्चैव देवैराङ्गिरसैरपि ॥ १८८

विश्वेभिश्चैव देवेभिस् तथा ब्रह्मर्षिभिः पुनः ।
देवर्षिभिश्चाप्रतिमैस् तथैवाप्सरसां गणैः ॥ १८९
साध्यैस्सिद्धैश्च सततं सत्कृतस्तत्र मोदते ॥ १८९॥

जातरूपमयं दिव्यम् अर्कतुल्यं मनोजवम् ।
देवगन्धर्वसङ्कीर्णं विमानमधिरोहति ॥ १९०॥

सौम्यरूपा मनःकान्तास् तप्तकाञ्चनभूषणाः ।
सोमकन्या विमानस्थं रमयन्ति मुदाऽन्विताः ॥ १९१॥

स तत्र रमते प्रीतस् सह देवैस्सहर्षिभिः ।
लोकान् सर्वाननुचरन् दीप्ततेजा मनोजवः ॥ १९२॥

---

1, ख—नाजीवी 2. क-घ—सेन

सभां कामजवीं चापि नित्यमेवाभिगच्छति ।
सर्वलोकेश्वरमृषिं नम[1]स्कृत्य पितामहम् ॥ १९३॥
परमेष्ठिरनन्तश्रीर् लोकानां प्रभवाप्ययः ।
यतस्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ॥ १९४॥
स तत्र वर्तते श्रीमान् द्विशतं द्विजसत्तम ॥ १९५
अथ कालक्षयात् तस्मात् स्थानादावर्तते पुनः ।
जातिधर्मास्तथा सर्वान् स्वर्गादावर्तनानि च ॥ १९६
अशाश्वतमिदं सर्वम् इति चिन्त्योपलभ्य च ।
शाश्वतं धर्ममचलम् अदीनमपुनर्भवम् ॥ १९७
आस्थास्यत्यभयं दिव्यं यत्रावृत्तिर्न विद्यते ।
तत्र गत्वा न म्रियते जन्म चापि न विद्यते ॥ १९८
गर्भक्लेशामयाः प्राप्ता जायता च पुनः पुनः ।
कायक्लेशाश्च विविधा द्वन्द्वानि विविधानि च ॥ १९९
शीतोष्णसुखदुःखानि ईर्ष्याद्वेषकृतानि च ।
तत्र तत्रोपभुक्तानि न क्वचिच्छाश्वती स्थितिः ॥ २००
एवं स निश्चयं कृत्वा निर्मुच्य गृहबन्धनात् ।
छित्त्वा भार्यामयं पाशं तथैवापत्यसम्भवम् ॥ २०१
यतिधर्ममुपाश्रित्य गुरुशुश्रूषणे रतः ।

1. क-ख-ब—स्कर्तुं

अचिरेणैव कालेन श्रेयस्समधिगच्छति ॥ २०२

योगशास्त्रं च साङ्ख्यं च विदित्वा सोऽर्थतत्वतः ।
अनुज्ञातश्च गुरुणा यथाशास्त्रमवस्थितः ॥ २०३

पुण्यतीर्थानुसेवी च नदीनां पुलिनाश्रयः ।
[1]शून्यागारनिकेतश्च वनवृक्षगुहाशयः ॥ २०४

अरण्यानुचरो नित्यं वेदारण्यनिकेतनः ।
एकरात्रं द्विरात्रं वा न क्वचित् सज्जते द्विजः ॥ २०५

शीर्णपर्णपुटे वाऽपि वन्ये चरति भिक्षुकः ।
न भोगार्थमनुप्रेत्य यात्रामात्रं समश्नुते ॥ २०६

धर्मलब्धं समश्नाति न कामात् किञ्चिदश्नुते ।
युगमात्रदृगध्वानं क्रोशादूर्ध्वं न गच्छति ॥ २०७

समो मानावमानाभ्यां समलोष्टाश्मकाञ्चनः ।
सर्वभूताभयकरस् तथैवाभयदक्षिणः ॥ २०८

निर्द्वन्द्वो निर्नमस्कारो निरानन्दपरिग्रहः ।
निर्ममो निरहङ्कारस् सर्वभूतनिराश्रयः ॥ २०९

परिसङ्ख्यानतत्वज्ञस् तदा सत्यरतिस्सदा ।
ऊर्ध्वं नाधो न तिर्यक् च न किञ्चिदभिकामयेत् ॥ २१०

एवं सञ्चरमाणस्तु यतिधर्मं यथाविधि ।

---

1. ख—इदमर्धं नास्ति

कालस्य परिणामात्तु यथा पक्वफलं तथा ॥ २११

स विसृज्य स्वकं देहं प्रविशेद्ब्रह्म शाश्वतम् '।
निरामयमनाद्यन्तं गुणसौम्यमचेतनम् ॥ २१२

निरक्षरमबीजं च निरिन्द्रियमजं तथा ।
अजय्यमक्षरं यत्तद् अभेद्यं सूक्ष्ममेव च ॥ २१३

निर्गुणं च प्रकृतिमन्निर्विकारं च सर्वशः ।
भूतभव्यभविष्यस्य कालस्य परमेश्वरम् ॥ २१४

अव्यक्तं पुरुषं क्षेत्रम् आनन्त्याय प्रपद्यते* ॥ २१४॥

एवं स भिक्षुर्निर्वाणं प्राप्नुयाद्दग्धकिल्बिषः ।
इहस्थो देहमुत्सृज्य नीडं शकुनिवद्यथा ॥ २१५॥

सत्पथालम्बनादेव शूद्रः प्राप्नोति सद्गतिम् ।
ब्रह्मणस्थानमचलं स्थानात् स्थानमवाप्नुयात् ॥ २१६॥

यथा खनन् खनित्रेण जाङ्गले वारि विन्दति ।
अनिर्वेदात्ततस्थानम् ईप्सितं प्रतिपद्यते ॥ २१७॥

सैषा गतिरनाद्यन्ता सर्वैरप्युपधारिता ।
तस्माच्छूद्रैरनिर्वेदाच् छद्मध्यानैस्तु नित्यदा ॥ २१८॥

वर्तितव्यं यथाशक्त्या यथा प्रोक्तं मनीषिभिः ॥ २१९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

यत् करोति तदश्नाति शुभं वा यदि वाऽशुभम् ।
नाकृतं भुज्यते कर्म न कृतं नश्यते फलम् ॥ २२०

शुभकर्मसमाचारश् शुभमेवाप्नुते फलम् ।
तथाऽशुभसमाचारो ह्यशुभं समवाप्नुते ॥ २२१

[1]तथा शुभसमाचारो ह्यशुभानि विवर्जयेत् ।
शुभान्येव समादद्याद् य इच्छेद्भूतिमात्मनः ॥ २२२

भूतिश्च नान्यतश्शक्या शूद्राणामिति निश्चयः ।
ऋते यतीनां शुश्रूषाम् इति सन्तो व्यवस्थिताः ॥ २२३

तस्मादागमसम्पन्नो भवेत् सुनियतेन्द्रियः ।
शक्यते ह्यागमादेव गतिं प्राप्तुमनामयाम् ॥ २२४

परा चैषा गतिर्दृष्टा यामन्वेषन्ति साधवः ।
यत्रामृतत्वं लभते त्यक्त्वा दुःखमनन्तकम् ॥ २२५

इमं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्याश्च शूद्राश्च प्राप्नुयुः परमां गतिम् ॥ २२६

किं पुनर्ब्राह्मणो विद्वान् क्षत्रियो वा बहुश्रुतः ॥ २२६॥

न चाप्यक्षीणपापस्य ज्ञानं भवति देहिनः ।
ज्ञानोपलब्धिर्भवति कृतकृत्यो यदा भवेत् ॥ २२७॥

उपलभ्य तु विज्ञानं ज्ञानं वाऽप्यनसूयकः ।

---

1. अ-ख—नास्तीदमर्धम्

तथैव वर्तेद्गुरुषु भूयांसं वा समाहितः ॥ २२८॥

यथावमन्येत गुरुं तथा तेषु प्रवर्तते ।
व्यर्थमस्य श्रुतं भवति ज्ञानमज्ञानतां व्रजेत् ॥ २२९॥

गतिं चाप्यशुभां गच्छेन्निरयाय न संशयः ।
प्रक्षीयते तस्य पुण्यं ज्ञानमस्य विरुध्यते ॥ २३०॥

अदृष्टपूर्वकल्याणो यथा दृष्टविधिर्नरः ।
उत्सेकान्मोहमापद्य तत्वज्ञानं नचाप्नुयात् ॥ २३१॥

एवमेव हि नोत्सेकः कर्तव्यो ज्ञानसम्भवः ।
फलं ज्ञानस्य हि शमः प्रशमाय यतेत् सदा ॥ २३२॥

उपशान्तेन दान्तेन क्षमायुक्तेन सर्वदा ।
शुश्रूषा प्रतिप[1]त्तव्या नित्यमेवानसूयता ॥ २३३॥

धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा ।
इन्द्रियार्थांश्च मनसा मनो बुद्धौ समादधेत् ॥ २३४॥

धृत्याऽऽसीत ततो गत्वा शुद्धदेशं सुसंवृतम् ।
[2]लब्ध्वाऽऽसनं यथा दृष्टं विधिपूर्वं समाचरेत् ॥ २३५॥

ज्ञानयुक्तस्तथा देवं हृदिस्थमुपलक्षयेत् ।
आदीप्यमानं वपुषा विधूममनलं यथा ॥ २३६॥

रश्मिमन्तमिवादित्यं वैद्युताग्निमिवाम्बरे ।

---

1. ख—कर्तव्या	2. ख—बध्वाऽऽसनम्

संस्थितं हृदये पश्येद् ईशं शाश्वतमव्ययम् ॥ २३७॥

न चायुक्तेन शक्योऽयं द्रष्टुं देहे महेश्वरः ।
युक्तस्तु पश्यते बुद्ध्या संनिवेश्य मनो हृदि ॥ २३८॥

अथ त्वेवं न शक्नोति कर्तुं हृदयधारणम् ।
यथासाङ्ख्यमुपासीत यथावद्योगमास्थितः ॥ २३९॥

पञ्च बुद्धीन्द्रियाणीह पञ्च कर्मेन्द्रियाण्यपि ।
पञ्च भूतविशेषाश्च मनश्चैव तु षोडश ॥ २४०॥

तन्मात्राण्यपि पञ्चैव मनोऽहङ्कार एव च ।
अष्टमं चाप्यथाव्यक्तम् एताः प्रकृतिसंज्ञिताः ॥ २४१॥

एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ॥ २४२

[1]एवमेतदिहस्थेन विज्ञेयं तत्त्वबुद्धिना ।
[2]एवं वर्ष्म समुत्तीर्य तीर्णो भवति नान्यथा ॥ २४३

परिसङ्ख्यानमेवैतन्मन्तव्यं ज्ञानबुद्धिना ॥ २४३॥

अहन्यहनि शान्तात्मा पावनाय हिताय च ।
एवमेव प्रसङ्ख्याय तत्त्वबुद्धिर्विमुच्यते ॥ २४४॥

निष्कलं केवलं भवति शुद्धतत्त्वार्थतत्त्ववित् ॥ २४५

1. ख— सर्वमे
2 ख—अर्धद्वयं नास्ति

भिक्षुकाश्रममास्थाय शुश्रूषानिरतो बुधः ।
शूद्रो निर्मुच्यते सत्त्वसंसर्गादेव नान्यथा ॥ २४६

सत्सन्निकर्षे परिवर्तितव्यं
विद्याधिकाश्चापि निषेवितव्याः ।
सवर्णतां गच्छति सन्निकर्षा-
न्नीलः खगो मेरुमिवाश्रयन् वै ॥ २४७

भीष्मः—

इत्येवमाख्याय महामुनिस्तदा
चतुर्षु वर्णेषु विधानमर्थवित् ।
शुश्रूषया वृत्तगतिं समाधिना
समाधियुक्तः प्रययौ स्वमाश्रमम् ॥ २४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
[अस्मिन्नध्याये २४८ श्लोकाः]

---

## ॥ पञ्चाशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सकलसेव्यताप्रयोजकगुणप्रतिपादकेन्द्रमातलिसंवादानुवादः ॥

युधिष्ठिरः—

केषां देवा महाभागास् सन्नमन्ते महात्मनाम् ।
लोकेऽस्मिंस्तानृषीन् सर्वाञ् श्रोतुमिच्छामि [1]तत्त्वतः ॥ १

भीष्मः—

इतिहासमिमं विप्राः कीर्तयन्ति पुराविदः ।
अस्मिन्नर्थे महाप्राज्ञास् तं निबोध युधिष्ठिर ॥ २

वृत्रं हत्वाऽप्युपावृत्तं त्रिदशानां पुरस्कृतम् ।
महेन्द्रमनुसम्प्राप्तं स्तूयमानं महर्षिभिः ॥ ३

श्रिया परमया युक्तं रथस्थं हरिवाहनम् ।
मातलिः प्राञ्जलिर्भूत्वा देवमिन्द्रमुवाच ह ॥ ४

मातलिः—

नमस्कृतानां सर्वेषां भगवंस्त्वं पुरस्कृतः ।
येषां लोके नमस्कुर्यात् तान् ब्रवीतु भवान् मम ॥ ५

भीष्मः—

तस्य तद्वचनं श्रुत्वा देवराजश्शचीपतिः ।

1. क-घ—सत्तम

यन्तारं परिपृच्छन्तं तमिन्द्रः प्रत्युवाच ह ॥ ६

इन्द्रः—

धर्मं चार्थं च कामं च येषां चिन्तयतां मतिः ।
नाधर्मे वर्तते नित्यं तान् नमस्यामि मातले ॥ ७

ये रूपगुणसम्पन्नाः प्रमदाहृदयङ्गमाः ।
निवृत्ताः कामभोगेषु तान् नमस्यामि मातले ॥ ८

स्वेषु भोगेषु सन्तुष्टास् सुवाचो वचनक्षमाः ।
[1]अमानकामाश्चार्घार्हास् तान् नमस्यामि मातले ॥ ९

धनं विद्यास्तथैश्वर्यं येषां न चलयेन्मतिम् ।
चलितां ये निगृह्णन्ति तान् नित्यं पूजयाम्यहम् ॥ १०

इष्टै[2]र्दारैरुपेतानां शुचीनामाग्निहोत्रिणाम् ।
चतुष्पादकुटुम्बानां मातले प्रणमाम्यहम् ॥ ११

महतस्तपसः प्राप्तौ धनस्य विपुलस्य च ।
त्यागस्तस्य न वै कार्यो योऽऽत्मानं नावबुध्यते ॥ १२

येषामर्थस्तथा कामो धर्ममूलविवर्धितः ।
धर्मार्थौ यस्य नियतौ तान् नमस्यामि मातले ॥ १३

[3]धर्ममूलार्थकामानां ब्राह्मणानां गवामपि ।

---

1. क-घ—अजातका
2. ख—दानैरुपेतानां
3. ख-अर्धद्वयं नास्ति

पतिव्रतानां नारीणां प्रणामं प्रकरोम्यहम् ॥ १४

ये भुक्त्वा मानुषान् भोगान् पूर्वे वयसि मातले ।
तपसा स्वर्गमायान्ति शश्वत् तान् पूजयाम्यहम् ॥ १५

असम्भोगान्नचासक्तान् धर्मनित्याञ्जितेन्द्रियान् ।
संन्यस्तानचलप्रख्यान् मनसा पूजयामि तान् ॥ १६

ज्ञानप्रसन्नविद्यानां निरूढं धर्ममिच्छताम् ।
परैः कीर्तितशौचानां मातले तान् नमाम्यहम् ॥ १७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ षडशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तटाकनिर्माणफलकथनम् ॥ १ ॥ तथा वृक्षरोपणफलकथनम् ॥ २ ॥

युधिष्ठिरः—

संस्कृतानां तटाकानां यत् फलं कुरुपुङ्गव ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ १

भीष्मः—

सुप्रदर्शो धनपतिश् चित्रधातुविभूषितः ।
त्रिषु लोकेषु सर्वत्र पूजितो यस्तटाकवान् ॥ २

इह चामुत्र सदनं पुत्रीयं वित्तवर्धनम् ।
[1]कीर्तिसञ्जननं श्रेष्ठं तटाकानां निवेशनम् ॥ ३

धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।
तटाकं सुकृतं देशे क्षेत्रे देशसमाश्रयम् ॥ ४

चतुर्विधानां भूतानां तटाकमुपलक्षये ।
तटाकानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥ ५

देवा मनुष्या गन्धर्वाः पितरोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥ ६

1. अ-क-घ—नास्तीदमर्धम्

तस्मात्तांस्ते प्रवक्ष्यामि तटाके ये गुणास्स्मृताः ।
या च तत्र फलप्राप्ती ऋषिभिस्समुदाहृता ॥ ७

वर्षमात्रं तटाके तु सलिलं यत्र तिष्ठति ।
अग्निहोत्रफलं तस्य [1]फलमाहुर्मनीषिणः ॥ ८

निदाघकाले सलिलं तटाके यस्य तिष्ठति ।
वाजपेयफलं तस्य फलं वै ऋषयोऽब्रुवन् ॥ ९

सकुलं तारयेद्वंशं यस्य खाते जलाशये ।
गावः पिबन्ति पानीयं साधवश्च नरास्सदा ॥ १०

तटाके यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ ११

यत् पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तटाककर्तुस्तत् सर्वं प्रेत्यानन्ताय कल्पते ॥ १२

दुर्लभं सलिलं तात विशेषेण परन्तप ।
पानीयस्य प्रदानेन सिद्धिर्भवति शाश्वती ॥ १३

तिलान् ददति पानीयं दीपमन्नं प्रतिश्रयम् ।
बान्धवैस्सह मोदध्वम् एतत् प्रेतेषु दुर्लभम् ॥ १४

सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ १५

---

1. अ-क-घ—इतश्चत्वारः पादा न सन्ति

एवमेतत् तटाकेषु कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामपि रोपणे ॥ १६

स्थावराणां तु भूतानां जातयः षट्प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस् त्वक्सारतृण[1]वीरुधः ॥ १७

एता जात्यस्तु वृक्षाणाम् एषां रोपगुणास्त्विमे ।
पनसाम्रादयो वृक्षा गुल्मा मन्दारपूर्वकाः ॥ १८

[2]नागिकामलियावल्ल्यो मालतीत्यादिकालताः ।
वेणुक्रमुकत्वक्सारास् सस्यानि तृणजातयः ॥ १९

कीर्तिश्च मानुषे लोके प्रेत्य चैव शुभं फलम् ।
लभ्यते नाकपृष्ठे च पितृभिश्च महीयते ॥ २०

देवलोकगतस्यापि नाम तस्य न नश्यति ॥ २०॥

अतीतानागतांश्चैव पितृवंशांश्च भारत ।
तारयेद् वृक्षरोपी तु तस्माद्वृक्षान् प्ररोपयेत् ॥ २१॥

तस्य पुत्रा भवन्त्येव पादपान्नात्र संशयः ।
परलोकगतस्स्वर्गे लोकांश्चाप्नोति सोऽव्ययान् ॥ २२॥

पुष्पैस्सुरगणान् वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथींस्तात पूजयन्ति महीरुहाः ॥ २३॥

किन्नरोरगरक्षांसि देवगन्धर्वमानवाः ।

---

1. ख—जातयः    2. ख—नागकामरिचावल्ल्यो

तथा ऋषिगणाश्चैव संश्रयन्ते महीरुहान् ॥ २४॥

पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ॥ २५

वृक्षदान् पुत्रवद् वृक्षाः तारयन्ति परत्र च ।
तस्मात् तटाके वृक्षा वै रोप्याश्श्रेयोर्थिना सदा ॥ २६

पुत्रवत् परिरक्ष्याश्च पुत्रास्ते धर्मतस्स्मृताः ॥ २६॥

तटाककृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥ २७॥

तस्मात् तटाकं कुर्वीत आरामांश्चापि [1]योजयेत् ।
यजेच्च विविधैर्यज्ञैस् सत्यं च विधिवद्वदेत् ॥ २८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
[ अस्मिन्नध्याये २८॥ श्लोकाः ]

---

1. ख—रोपयेत्

## ॥ सप्ताशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति गृहस्थधर्मप्रतिपादकपृथिवीवासुदेवसंवादानुवादः ॥

युधिष्ठिरः—

गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ ।
वृद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव ॥ १

भीष्मः—

अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप ।
वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥ २

संस्तूय पृथिवीं देवीं वासुदेवः प्रतापवान् ।
पप्रच्छ भरतश्रेष्ठ यदेतत् पृच्छसेऽद्य माम् ॥ ३

श्रीभगवान्—

गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा ।
किमवश्यं धरे कार्यं किं कृत्वा वा सुखं भवेत् ॥ ४

पृथिवी—

ऋषयः पितरो देवा मनुष्याश्चैव माधव ।
[1]पूज्याश्चैवार्चनीयाश्च यथा वैतन्निबोध मे ॥ ५

सदा यज्ञेन देवांश्च आतिथ्येन मानवान् ।

1. ख—पूज्या गृहस्थाश्रमिणा यथा

छन्दतस्तर्पणेनापि पितॄन् युञ्जन्ति नित्यशः ॥ ६
तेन ह्यृषिगणाः प्रीता ब्रह्मचर्येण चानघ ।
नित्यमग्निं परिचरेद् अभुक्त्वा बलिकर्म च ॥ ७
कुर्यात्तथैव देवान् वै प्रियं मे मधुसूदन ।
कुर्यादहरहश्श्राद्धम् अन्नाद्येनोदकेन वा ॥ ८
पयोमूलफलैर्वाऽपि पितॄणां प्रीतिमावहेत् ।
सिद्धस्य वैश्वदेवस्य कुर्यादग्नौ यथाविधि ॥ ९
[1]आग्नीषोमं वैश्वदेवं धान्वन्तर्यञ्च यद्धविः ।
प्रजानां पतये चैव पृथग्घोमो विधीयते ॥ १०
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् ।
दक्षिणायां यमायेह प्रतीच्यां वरुणाय च ॥ ११
सोमाय चाप्युदीच्यां वै वास्तुमध्ये द्विजातये ।
धन्वन्तरेः प्रागुदीच्यां [2]प्राच्यां शक्राय माधव ॥ १२
मनुष्य इति च प्राहुर् बलिं द्वारे गृहस्य वै ।
[3]मरुद्भ्यो दैवतेभ्यश्च बलिमन्तर्गृहे हरेत् ॥ १३
तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत् ।
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं तथा हरेत् ॥ १४

1. ख—अग्निष्टोमं + धन्वन्तरमनन्तरम्
2. ख—इतः पादद्वयं नास्ति
3. क-ख-घ—ग्रहेभ्यो देवताभ्यश्च

एवं कृत्वा बलिं सम्यग् द[1]द्याद्भिक्षाद्वयं तथा ।
अलाभे ब्राह्मणस्या[2]ग्नावग्रमन्नं समुत्क्षिपेत् ॥ १५

यदा श्राद्धं पितृभ्यश्च दातुमिच्छेत मानवः ।
तदा पश्चात् प्रकुर्वीत निवृत्ते श्राद्धकर्मणि ॥ १६

पितॄन् सन्तर्पयित्वा तु बलिं कुर्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात् पश्चाद्ब्राह्मणभोजनम् ॥ १७

ततोऽन्नेनावशेषेण भोजयेदतिथीनपि ।
अर्घ्यपूर्वं महाराज ततः प्रीणाति मानुषान् ॥ १८

अनित्यं हि स्थितो यस्मात् तस्मादतिथिरुच्यते ॥ १८॥

आचार्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः ।
[3]इदमस्ति गृहे नित्यम् इति मेध्यं निवेदयेत् ॥ १९॥

ते यद्वदेयुस्तत् कुर्याद् इति धर्मो विधीयते ।
गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत् ॥ २०॥

राजर्त्विजौ स्नातकं च गुरुं श्वशुरमेव च ।
अर्चयेन्मधुपर्केण परिसंवत्सरोषितान् ॥ २१॥

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ २२

1. अ-क-घ—दद्याद्भिक्षाद्वयं तथा
2. क-घ—ग्नौ बलिमन्नं समुत्क्षिपेत्
3. ख—इदमस्मिन् गृहे द्रव्यमिति नित्यं
   घ—इदमस्ति गृहे मह्यमिति नित्यं

वैश्वदेवं हि नामैतत् सायं प्रातर्विधीयते ॥ २२॥

एतांस्तु धर्मान् गार्हस्थ्ये यः कुर्यादनसूयकः ।
[1]स इहर्द्धिं परां प्राप्य [2]स्वर्गलोके महीयते ॥ २३॥

भीष्मः—

इति भूमेर्वचश्श्रुत्वा वासुदेवः प्रतापवान् ।
तथा चकार सततं त्वमप्येवं समाचर ॥ २४॥

एतद् गृहस्थधर्मं तु चिन्तयानो जनाधिप ।
इह लोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]

---

1. ख—इहार्थान् पुरुषः प्राप्य ब्रह्मलोके
2. क-घ—इतः अर्धचतुष्टयं नास्ति

## ॥ अष्टाशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पुष्पधूपदीपदानादिप्रशंसापरबलिशुक्रसंवादानुवादः ॥

युधिष्ठिरः—

आलोकदानं नामैतत् कीदृशं भरतर्षभ ।
कथमेतत् समुत्पन्नं फलं चात्र ब्रवीहि मे ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं सुवर्णस्य च भारत ॥ २

तपस्वी कश्चिदभवत् सुवर्णो नाम नामतः ।
वर्णतो हेमवर्णस्स सुवर्ण इति [1]विश्रुतः ॥ ३

[2]वृत्तशीलगुणोपेतस् स्वाध्यायोपरमं गतः ।
बहून् स्ववंशप्रभवान् समतीतस्स्वकैर्गुणैः ॥ ४

स कदाचिन्मनुं विप्रो ददर्शोपससर्प च ।
कुशलप्रश्नमन्योन्यं तौ च तत्र प्रचक्रतुः ॥ ५

ततस्तौ सिद्धसङ्कल्पौ मेरौ काञ्चनपर्वते ।

1. ख—तं विदुः
2. क-घ—गुणशील + यपरमङ्गतः ख—कुल + येपरमं

देवर्षिभिस्सदा जुष्टे सहितौ संन्यषीदताम् ॥ ६

कथयामासतुस्तत्र कथां नानाविधाश्रयाम् ।
ब्रह्मदेवर्षिदैत्यानां पुराणानां महात्मनाम् ॥ ७

सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायम्भुवं प्रभुम् ॥ ७॥

सुवर्णः—

हितार्थं सर्वभूतानां [1]प्रश्नं मे वक्तुमर्हसि ॥ ८

सुमनो[2]गन्धधूपाद्यैर् इज्यन्ते दैवतानि च ।
किमेतत् फलमुत्पन्नं फलं योगं च शंस मे ॥ ९

मनुः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
शुक्रस्य च बलेश्चैव संवादं वै समागमे ॥ १०

बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः ।
समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ॥ ११

तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः ।
निषसादासने पश्चाद् विधिवद्भूरिदक्षिणः ॥ १२

कथेयमभवत् तत्र त्वया या परिकीर्तिता ।
सुमनोधूपदीपानां सम्प्रदाने फलं प्रति ॥ १३

ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम् ॥ १३॥

1. ख—धम 2. ख—धूमदीपा + नियत्

बलिः—

सुमनोधूपदीपानां किं फलं ब्रह्मवित्तम ।
प्रदानस्य द्विजश्रेष्ठ तद्भवान् वक्तुमर्हति ॥ १४॥

शुक्रः—

अग्नीषोमादिसृष्टौ तु विष्णोस्सर्वात्मनः प्रभोः ।
तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम् ॥ १५॥

एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च ।
सोमस्यात्मा च बहुधा सम्भूतः पृथिवीतले ॥ १६॥

अमृतं च विषं चैव याश्चान्यास्तुल्यजातयः ॥ १७

अमृतं मनसः प्रीतिं रक्षां पुष्टिं तथैव च ।
मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः ॥ १८

अमृतं मङ्गलं विद्धि महद्विषममङ्गलम् ।
ओषध्यो ह्यमृतं सर्वं विषं[1] तेजोग्निसम्भवम् ॥ १९

अमृतं मनो ह्लादयति श्रियं चैव ददाति च ।
तस्मात् सुमनसः प्रोक्ता नरैस्सुकृतकर्मभिः ॥ २०

दैवतेभ्यस्सुमनसो यो ददाति नरश्शुचिः ।
तस्मै सुमनसो देवास् तस्मात् सुमनसस्मृताः ॥ २१

यं समुद्दिश्य दीयेरन् देवं सुमनसः प्रभो ।

---

1. ब—ख—तोयाग्नि

मङ्गलार्थं स तेनैव प्रीतो भवति वै नृप ॥ २२

ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च याः पृथक् ।
ओषध्यो बहुवीर्याश्च बहुरूपास्तथैव च ॥ २३

याज्ञियानां च वृक्षाणां याज्ञीयाः कुसुमोच्चयाः ।
[1]आसुराणि च माल्यानि दैवतेभ्यो हितानि च ॥ २४

राक्षसानां सुराणां च यक्षाणां च तथा प्रियाः ।
पितॄणां मानुषानां च [2]कान्ता यास्त्वनुपूर्वशः ॥ २५

वन्या ग्राम्याश्च हि तथा कृष्टोप्ताः पर्वताश्रयाः ।
अकण्टकाः कण्टकिन्यो गन्धरूपरसान्विताः ॥ २६

विविधा हि स्मृता गन्धा इष्टाऽनिष्टाश्च पुष्पजाः ।
इष्टगन्धानि देवानां पुष्पाणीति विभावयेत् ॥ २७

अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः ।
तेषां पुष्पाणि देवानाम् इष्टानि सततं विभो ॥ २८

पद्मं च तुलसी जातिर् अपि सर्वेषु पूजिता ।
जलजानि च माल्यानि पद्मादीनीह यानि च ॥ २९

गन्धर्वनागयक्षेभ्यस् तानि दद्याद्विचक्षणः ॥ २९॥

ओषध्यो रक्तपुष्पास्तु [3]कर्कशाः कण्टकाङ्किताः ।

---

1. ख—अर्धचतुष्टयं नास्ति 2. क-घ—प्रब्रूम
3. क-घ—कटुकाः ख—करकाः कण्टकान्विताः

शत्रूणामभिचारार्थम् अथर्वसु निदर्शिताः ॥ ३०॥

तीक्ष्णवीर्यास्तु भूतानां दुरालम्भास्सकण्टकाः ।
रक्तभूयिष्ठवर्णाश्च कृष्णरक्षोगणेष्विह ॥ ३१॥

मनोहृदयनन्दिन्यो विमर्दे मधुराश्च याः ।
चारुरूपास्सुमनसो मनुष्याणां स्मृता विभो ॥ ३२॥

न तु श्मशानसम्भूता न देवायतनोद्भवाः ।
सन्नयेत् पुष्टिकार्येषु विवाहेषु रहस्सु च ॥ ३३॥

गिरिसानुरुहास्सौम्या देवानामुपधारयेत् ।
प्रोक्षिताभ्युक्षितास्सौम्य यथायोगं यथास्मृति ॥ ३४॥

गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः ।
नागास्समुपभोगेन त्रिभिरेतैस्तु मानुषाः ॥ ३५॥

सद्यः प्रीणाति देवान् वै ते प्रीत्या भावयन्त्युत ।
सङ्कल्पसिद्धि[1]र्मर्त्यानाम् ईप्सिताश्च मनोरथाः ॥ ३६॥

[2]देवाः प्रीणन्ति सततं मानिता मानयन्ति च ।
अवज्ञातावधूताश्च निर्दहन्त्यधमान् नरान् ॥ ३७॥

अत ऊर्ध्वं प्रवक्ष्यामि धूपदानविधौ फलम् ।
धूपांश्च विविधान् साधून् असाधूंश्च निबोध मे ॥ ३८॥

---

यं समु[ ]द्दार्ना पष्पैर्लभ्या सुरैः कृता
[ ]न पितरो मानिता

1. ब—ख—तोयार्

निर्यासास्सरलाश्चैव कृत्रिमाश्चैव ते त्रयः ।
इष्टोऽनिष्टो भवेद्गन्धस्तन्मे विस्तरतश्शृणु ॥ ३९॥

निर्यासास्सल्लकीवर्ज्या देवानां दयितास्तु ते ।
गुग्गुलुः प्रवरस्तेषां घृतमिश्रोऽथ धूमकः ॥ ४०॥

अगुरुस्सर्वदा श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां सल्लकीजश्च काङ्क्षितो यश्च तद्विधः ॥ ४१॥

अथ सर्जरसाद्यैस्तु गन्धैः पार्थिवदारवैः ।
पानीयासवसंयुक्तो मनुष्याणां विधीयते ॥ ४२॥

देवदानवभूतानां सद्यस्तुष्टिकरस्स्मृतः ।
येऽन्ये वैहारिकास्ते तु मानुषाणामिति स्मृताः ॥ ४३॥

य एवोक्तास्सुमनसः प्रदाने गुणहेतवः ।
धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्धनाः ॥ ४४॥

दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेया यादृशाश्च ये ॥ ४५॥

ज्योतिस्तेजः प्रकाशश्चाऽप्यूर्ध्वगं चापि वर्धते ।
प्रदानं तेजसां तस्मात् प्रभावन्तः प्रकाशकाः ॥ ४६॥

[1]तमसां नाशकश्चेति तस्माद्दीपः प्रदीयते ॥ ४७

---

1. क-ख-घ—तामसा राक्षसाश्चेति

आलोकदानाच्चक्षुष्मान् प्रभायुक्तो भवेन्नरः ।
तं ततो नोपहिंसेत न हरेन्नापि नाशयेत् ॥ ४८

दीपहर्ता भवेदन्धस् तमोगतिरसुप्रभः ।
दीपप्रदस्स्वर्गलोके दीपमाली विराजते ॥ ४९

हविषा प्रथमः कल्पो द्वितीयस्त्वौषधीरसैः ।
मेदोवसास्थिनिर्यासैर् न कार्यः पुष्टिमिच्छता ॥ ५०

देवालये सभायां च गिरौ चैत्ये चतुष्पथे ।
गोब्राह्मणालये दुर्गे दीपो [1]भूतिप्रदश्शुचिः ॥ ५१

दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ॥ ५१॥

कुले द्योतति शुद्धात्मा प्रकाशत्वं च गच्छति ।
ज्योतिषां चैव सालोक्यं दीपदाता भवेन्नरः ॥ ५२॥

बलिकर्म च वक्ष्यामि गुणान् कर्मफलोदयान् ।
देवयक्षोरगनृणां भूतानामथ रक्षसाम् ॥ ५३॥

येषां नाग्रभुजो देवा न विप्रातिथिबालकाः ।
राक्षसानेव तान् विद्धि निर्वषट्कारमङ्गलान् ॥ ५४॥

तस्मादग्रं प्रयच्छेत देवेभ्यः प्रतिपूजितम् ।
शिरसा प्रणतश्चापि हरेद्बलिमतन्द्रितः ॥ ५५॥

---

1. ब—भूमि

गृहाधिदेवता नित्यं निवसन्ति गृहे बलिम् ।
बाह्याश्चागन्तवो ये च यक्षराक्षसपन्नगाः ॥ ५६॥

तत्र दत्तेन जीवन्ति देवताः पितरस्तथा ।
ते प्रीताः प्रीणयन्त्येनान् आयुषा यशसा [1]धनैः ॥ ५७॥

बलयस्सह पुष्पैस्तु देवानामुपहारयेत् ।
दधिद्रप्समयाः पुण्यास् सुगन्धाः प्रियदर्शनाः ॥ ५८॥

कार्या रुधिरमांसाढ्या बलयो यक्षरक्षसाम् ।
सुरासवपुरस्कारा लाजैर्लोहितभूषिताः ॥ ५९॥

नागानां दयिता नित्यं पद्मोत्पलविभूषिताः ।
तिलपिष्टं सु सम्पन्नं भूतानामुपहारयेत् ॥ ६०॥

अन्नदाताऽन्नभोगी स्याद् बलवर्णसमन्वितः ।
तस्मादन्नं प्रयच्छेत देवादिभ्यस्सुपूजितम् ॥ ६१॥

ज्वलन्त्यहरहो वेश्म यत्र स्युर्गृहदेवताः ।
ताः पूज्या भूतिकामेन प्रसृताग्रप्रदायिना ॥ ६२॥

भीष्मः—

इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः ।
सुवर्णाय मनुः प्राह [2]सुवर्णो नारदाय च ॥ ६३॥

---

1. क-ख-ब—श्रिया
2. अ—अयं पादोऽनन्तरश्च नस्तः

नारदोऽपि मयि प्राह गुणानेतान् महामते ।
त्वमप्येतद्विदित्वैव सर्वमाचर पुत्रक ॥ ६४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
[ अस्मिन्नध्याये ६४॥ श्लोकाः ]

---

## ॥ एकोननवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति बलिदीपप्रदानकथनोपयोगितया नहुषचरितकथनारम्भः ॥ १ ॥ देवैर्वरदानपूर्वकमिन्द्रपदं प्रापितेन नहुषेण दर्पात्सप्तर्ष्यादिभिः पर्यायेण स्वयानवाहनम् ॥ २ ॥ अगस्त्यस्य तद्यानवहनपर्याये भृगुणाऽगस्त्यं प्रति स्वेन नहुषस्याधःपातनप्रतिज्ञानम् ॥ ३ ॥

---

युधिष्ठिरः—

श्रुतं मे भरतश्रेष्ठ पुष्पदीपप्रदायिनाम् ।
फलं बलिप्रदाने च तद्भूयो वक्तुमर्हसि ॥ १

धूपदानस्य च फलं प्रदीपस्य तथैव च ॥ १॥

बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः ॥ २

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।

नहुषं प्रति संवादम् अगस्त्यस्य भृगोस्तथा ॥ ३

नहुषस्तु महाराज राजर्षिस्सुसमाहितः ।
देवराज्यमनुप्राप्तस् सुकृतेनेह कर्मणा ॥ ४

तत्रापि प्रयतो राजन् नहुषस्त्रिदिवे वसन् ।
मानुषाश्चैव दिव्याश्च कुर्वाणो विविधाः क्रियाः ॥ ५

मानुषास्तत्र सर्वास्स्म क्रियास्तस्य महात्मनः ।
जपयज्ञं मनोयज्ञं त्रिदिवेऽपि चकार सः ॥ ६

देवता ह्यर्चयंश्चापि विधिवत् स सुरेश्वरः ।
सर्वाण्येव यथान्यायं यथापूर्वमरिन्दम ॥ ७

अथेन्द्रस्य भविष्यत्वाद् अहङ्कारस्तमाविशत् ।
सर्वाश्चैव क्रियास्तस्य पर्यहीयन्त भूपते ॥ ८

सप्तर्षीन् वाहयामास वरदानसमन्वितः ।
परिहीनक्रियश्चापि दुर्बलत्वमुपेयिवान् ॥ ९

तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान् ।
अहङ्काराभिभूतस्य सुमहानत्यवर्तत ॥ १०

अथ पर्यायत ऋषीन् वाहनाय प्रचक्रमे ।
पर्यायश्चाप्यगस्त्यस्य समपद्यत भारत ॥ ११

अथागम्य महातेजा भृगुर्ब्रह्मविदां वरः ।
अगस्त्यमाश्रमस्थं वै समुपेत्यैवमब्रवीत् ॥ १२

भृगुः—

एवं वयमसत्कारं देवेन्द्रस्य सुदुर्मतेः ।
नहुषस्य किमर्थं वै मर्षयामो महामुने ॥ १३

अगस्त्यः—

कथमेष मया शक्यश् शप्तुमद्य महामुने ।
वरदेन वरो दत्तो भवता विदितश्च सः ॥ १४

यो मे दृष्टिपथं गच्छेत् स मे वश्यो भवेदिति ।
इत्यनेन वरो देवाद् याचितो गच्छता दिवम् ॥ १५

एवं न दग्धस्स मया भवता च न संशयः ।
अन्येनाप्यृषिमुख्येन न [1]शप्तो विनिपातितः ॥ १६

अमृतं चैव पानाय दत्तमस्मै पुरा प्रभो ।
महात्मने तदर्थं च नास्माभिर्निपात्यते ॥ १७

भृगुः—

सम्प्रायच्छद् वरं देवः प्रजानां दुःखकारकम् ।
द्विजेष्वधर्मयुक्तानि स करोति द्विजोत्तमः ॥ १८

अत्र यत् प्राप्तकालं तु तद्ब्रूहि वदतां वर ॥ १८॥

अगस्त्यः—

भवांश्चापि यथा ब्रूयात् तत् कुर्वीमहि तथा वयम् ॥ १९

भृगुः—

पितामहनियोगेन भवन्तमहमागतः ।

---

1. क-घ—शक्यो विनिपातितुम्

प्रतिकर्तुं बलवति नहुषे दर्पमास्थिते ॥ २०
अद्य हि त्वां सुदुर्बुद्धी रथे योक्ष्यति देवराट् ।
अद्यैनमहमुद्वृत्तं शपिष्ये पापमोहितम् ॥ २१
अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुम् ।
प्रचाल्य पापकर्माणम् इन्द्रस्थानात् सुदुर्मतिम् ॥ २२
अद्यैवासौ कुदेवेन्द्रस् त्वां पदा धर्षयिष्यति ।
दैवोपहतचित्तत्वाद् आत्मनाशाय दुर्मतिः ॥ २३
व्युत्क्रान्तधर्मं तमहं गर्हणामर्षितो भृशम् ।
अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्विषम् ॥ २४
तत एनं सुदुर्बुद्धिं धिक्शब्दाभिहतत्विषम् ।
धरण्यां पातयिष्यामि प्रेक्षतस्ते महामुने ॥ २५
नहुषं पापकर्माणम् ऐश्वर्यबलमोहितम् ।
यथा रोचयते तुभ्यं तथा कर्ता ह्यहं मुने ॥ २६

भीष्मः—

एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः ।
अगस्त्यः परमप्रीतो बभूव विगतज्वरः ॥ २७
तथा चकार तत् सर्वं पपात नहुषो यथा ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

## ॥ नवतितमोऽध्यायः ॥

नहुषेणागस्त्यस्य स्वयाने योजनम् ॥ १ ॥ तथा तेन सह श्रुतिप्रामाण्यविवादे स्वविरुद्धभाषिणोऽगस्त्यस्य मस्तके स्वपादेन ताडनम् ॥ २ ॥ तदा तज्जटान्तर्निगूढेन भृगुणा शापदानेन तस्याधः पातनम् ॥ ३ ॥ ततो देवैरिन्द्रस्य स्वपदेऽभिषेचनम् ॥ ४ ॥ नहुषस्य स्वकृतपूर्वबलिदीपदानादिजसुकृतमहिम्ना पुनः स्वर्गप्राप्तिः ॥ ५ ॥

युधिष्ठिरः—

कथं वै स विपन्नश्च कथं वा पातितो भुवि ।
कथं देवेन्द्रतां प्राप्तस् तद्भवान् वक्तुमर्हति ॥ १

भीष्मः—

एवं तयोस्संवदतोः क्रियास्तस्य महात्मनः ।
सर्वा एवाऽभ्यवर्तन्त या दिव्या याश्च मानुषाः ॥ २

तथैव दीपदानानि दैवताभ्यर्चनानि च ।
बलिकर्म च यच्चान्यद् उत्सेकाश्च पृथग्विधाः ॥ ३

सर्वास्तस्य समुत्पन्ना देवराज्ञो महात्मनः ।
देवलोके नृलोके च सदाचारपुरस्कृताः ॥ ४

ताश्चोद्भवन्ति राजेन्द्र समृद्ध्यै गृहमेधिनः ।
धूपप्रदानैर्दीपैश्च नमस्कारैस्तथैव च ॥ ५

यथा सिद्धस्य चान्नस्य गृह्य चाग्र्यं प्रदीयते ।

बलयश्च गृहोद्देशे ततः प्रीणन्ति देवताः ॥ ६

यथा च गृहिणस्तोष्या भवन्ति बलिकर्मणा ।
तथा शतगुणा प्रीतिर् देवतानां स जायते ॥ ७

एवं धूपप्रदानं वै दीपदानं च साधवः ।
प्रशंसन्ति नमस्कारैर् युक्तमात्महिताय वै ॥ ८

स्नानेनाद्भिश्च यत् कर्म क्रियते वै विपश्चिता ।
नमस्कारप्रयुक्तेन तेन प्रीणन्ति देवताः ॥ ९

गृह्याश्च देवतास्सर्वाः प्रीयन्ते विधिनाऽर्चिताः ॥ ९॥

इत्येवं विधिमास्थाय नहुषस्स नरेश्वरः ।
महेन्द्रत्वं महत् प्राप्य कृतवान् महदद्भुतम् ॥ १०॥

कस्य चित्त्वथ कालस्य भाग्यक्षय उपस्थिते ।
सर्वमेतदवज्ञाय न चकार यथाविधि ॥ ११॥

ततस्स परिहीणोऽभूत् सुरेन्द्रो बलिकर्मतः ।
धूपदीपोदकविधिं न यथावच्चकार सः ॥ १२॥

तथाऽस्य यज्ञविषयो रक्षोभिः परिबाध्यते ।
अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव सः ॥ १३॥

पूतं सरस्वतीतीरे स्मयन्निव महाबलः ।
[1]ततो भृगुर्महातेजा मैत्रावरुणिमब्रवीत् ॥ १४॥

---

1. क—अर्धचतुष्टयं नास्ति

निमीलयस्व नयने जटां यावद्विशाम्यहम् ।
सुरेन्द्रपतनायेति स च नेत्रे न्यमीलयत् ॥ १५॥
ततोऽगस्त्यस्याथ जटां दृष्ट्वा प्राविशदच्युतः ।
भृगुस्स सुमहातेजाः पातनाय नृपस्य च ॥ १६॥
ततस्स देवराट् प्राप्तस् तमृषिं वाहनाय वै ।
ततोऽगस्त्यस्सुरपतिं वाक्यमाह विशां पते ॥ १७॥

अगस्त्यः—

योजयस्वेन्द्र मां क्षिप्रं कं च देशमुपानये ।
यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप ॥ १८॥

भीष्मः—

इत्युक्तो नहुषस्तेन योजयामास तं मुनिम् ॥ १९
भृगुस्तस्य जटासंस्थो बभूव हृषितो भृशम् ।
न चापि दर्शनं तस्य चकार स भृगुस्तदा ॥ २०
वरदानप्रभावज्ञो नहुषस्य महात्मनः ॥ २०॥
न चुकोप तदाऽगस्त्यो नहुषायाल्पदर्शिने ।
तं तु राजा [1]प्रपादेन चालयामास भारत ॥ २१॥
श्रुतिस्स्मृतिः प्रमाणं वा [2]नेतिवातेस देवराट् ॥ २२
न चुकोप स धर्मात्मा ततः पादेन देवराट् ।

1. ख—प्रतोदेन ताडयामास  2. ख—इतः पादद्वयं नास्ति

अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः ॥ २३

तस्मिञ् शिरस्यभिहते तज्जटान्तर्गतो [1]मुनिः ।
शशाप [2]बलवत् क्रुद्धो नहुषं पापचेतसम् ॥ २४

भृगुः—

यस्मात् पदाऽवधीः क्रोधाच् छिरसीमं महामुनिम् ।
तस्मादाशु महीं गच्छ सर्पो भूत्वा तमोधिकः ॥ २५

भीष्मः—

स तदा तेन शप्तोऽथ सर्पो भूत्वा महामते ।
अदृष्टेनाथ भृगुणा भूतले स पपात ह ॥ २६

भृगुं हि यदि सोऽद्राक्षीन्नहुषः पृथिवीपते ।
स शक्तो नाभविष्यद्वै पातने तस्य तेजसा ॥ २७

स तु तैस्तैः [3]प्रदानैस्तु तपोभिर्नियमैस्तथा ।
पतितोऽपि महाराज भूतले स्मृतिमानभूत् ॥ २८

प्रसादयामास भृगुं शापान्तो मे भवेदिति ।
ततोऽगस्त्यः कृपाविष्टः प्रसादयति तं [4]भृगुम् ॥ २९

शापान्तार्थं महाराज वरं प्रादात् कृपान्वितः ॥ २९॥

---

1. अ—भृगुः
2. क-ख—बलवान्; ख—भगवान्
3. क—प्रदातव्यैः
4. ख—भृशम्

राजा युधिष्ठिरो नाम भविष्यति कुरूद्वहः ।
स त्वां मोक्षयिता शापाद् इत्युक्त्वाऽन्तरधीयत ॥ ३०॥

अगस्त्योऽपि महातेजाः पूज्यमानो [1]द्विजातिभिः ।
स्वमाश्रमपदं प्रायात् कृत्वा कार्यं शतक्रतोः ॥ ३१॥

नहुषोऽपि त्वया राजंस् तस्माच्छापात् समुद्धृतः ।
जगाम ब्रह्म[2]भवनं तेन पुण्येन कर्मणा ॥ ३२॥

तदा तु पातयित्वा तं नहुषं भूतले भृगुः ।
जगाम ब्रह्मसदनं ब्रह्मणे च न्यवेदयत् ॥ ३३॥

ततश्शक्रं समानाय्य देवानाह पितामहः ॥ ३४

ब्रह्मा—

वरदानान्मम सुरा नहुषो राज्यमाप्तवान् ॥ ३४॥

स चागस्त्येन क्रुद्धेन भ्रंशितो भूतलं गतः ॥ ३५

न च शक्यं विना राज्ञा सुखं वर्तयितुं क्वचित् ।
तस्मादयं पुनश्शक्रो देवराज्येऽभिषिच्यताम् ॥ ३६

भीष्मः—

एवं सम्भाषमाणे तु देवाः पार्थ पितामहे ।
एवमस्त्विति संहृष्टाः प्रत्यूचुस्ते पितामहम् ॥ ३७

1. ख—महर्षिभिः
2. क-घ—सदनं ;  ख—सदनं स्वेन पुण्येन

सोऽभिषिक्तो विशुद्धात्मा देवराज्ये तु वासवः ।
ब्रह्मणा राजशार्दूल यथापूर्वं व्यरोचत ॥ ३८

एवमेतत्तु वृत्तान्तं नहुषस्य व्यतिक्रमात् ।
स च तैरेव संसिद्धो नहुषः कर्मभिः पुनः ॥ ३९

तस्माद्दीपाः प्रदातव्यास् सायं वै गृहमेधिभिः ।
दिव्यं चक्षुरवाप्नोति प्रेत्य दीपप्रदायकः ॥ ४०

पूर्णचन्द्रप्रतीकाशा दीपदास्तु भवन्त्युत ॥ ४०॥

यावदक्षिनिमेषाणि ज्वलन्ते तावतीस्समाः ।
रूपवान् धर्मवांश्चापि नरो भवति दीपदः ॥ ४१॥

[1]य इदं शृणुयाच्चपि पठते यो द्विजोत्तमः ।
ब्रह्मलोकमवाप्नोति स च वै नात्र संशयः ॥ ४२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
[ अस्मिन्नध्याये ४२॥ श्लोकाः ]

---

1. क-ख-व—इदमर्धद्वयं नास्ति

## ॥ एकनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्रह्मस्वापहारस्यानर्थहेतुताया प्रमाणतया नृपचण्डालसंवादानुवादः ॥

युधिष्ठिरः—

ब्राह्मणस्वं हि ये मन्दा हरन्ति भरतर्षभ ।
नृशंसकारिणो योनिं कां ते गच्छन्ति मानवाः ॥ १

भीष्मः—

पातकानां परं ह्येतद् ब्रह्मस्वहरणं बलात् ।
सान्वयास्ते विनश्यन्ति चण्डालाः प्रेत्य चेह च ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
चण्डालस्य च संवादं क्षत्रबन्धोश्च भारत ॥ ३

राजा—

वृद्धरूपोऽसि चण्डाल बालवत् त्वं विचेष्टसे ।
श्वखराणां रजस्सेवी कस्मादुद्विजसे गवाम् ॥ ४

साधुभिर्गर्हितं कर्म चण्डालस्य विधीयते ।
कस्माद्गोरजसा ध्वस्तम् अङ्गं तोयेन सिञ्चसि ॥ ५

चण्डालः—

ब्राह्मणस्य गवां राजन् प्रयान्तीनां रजः पुरा ।

सोममुद्ध्वंसयामास तं सोममपिबन् द्विजाः ॥ ६
भृत्या[1]नामपि राज्ञां तु रजसा ध्वंसितं मखे ।
तत्पानाच्च द्विजास्सर्वे क्षिप्रं नरकमाविशन् ॥ ७
[2]दीक्षितश्च स राजाऽपि क्षिप्रं नरकमाविशत् ।
सह तैर्याजकैस्सर्वैर् ब्रह्मस्वमुपजीव्य तत् ॥ ८
येऽपि तत्रापिबन् क्षीरं घृतं दधि च मानवाः ।
ब्राह्मणास्सहराजन्यास् सर्वे नरकमाविशन् ॥ ९
जग्मुस्तत् पयसा पुत्रांस् तथा पौत्रान् विधूय तान् ।
पशूनवेक्षमाणानां साधुवृत्तेन दम्पती ॥ १०
अहं तत्रावसं राजन् ब्रह्मचारी जितेन्द्रियः ।
तासां मे रजसा ध्वस्तं [3]भैक्ष्यमासीन्नराधिप ॥ ११
चण्डालो हि ततो राजन् भुक्त्वा तदभवं मृतः ।
ब्रह्मस्वहारी च नृपस् सोऽप्रतिष्ठां गतिं ययौ ॥ १२
तस्माद्धरेन्न विप्रस्य कदाचिदपि किञ्चन ।
न पश्येन्नानुमोदेच्च न हर्तुं किञ्चिदाचरेत् ॥ १३
ब्रह्मणो रजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम् ।
ततस्सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता ॥ १४

1. ख—नामपराधात्तु
2. क-व—अर्धचतुष्टयं नास्ति
3. ख—इतः दश पादा न सन्ति

एतद्धि धनमुत्कृष्टं द्विजानामविशेषतः ।
विक्रयं हीह सोमस्य गर्हयन्ति मनीषिणः ॥ १५

ये चैनं क्रीणते राजन् ये च विक्रीणते [1]जनाः ।
इतो वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः ॥ १६

सोमं तु रजसा ध्वस्तं विक्रीणन् बुद्धिपूर्वकम् ।
श्रोत्रियो वार्धुषिर्भूत्वा [2]चिररात्राय गच्छति ॥ १७

अकीर्तिमिह सम्प्राप्य श्वविष्ठामुपजीवति ।
ब्रह्मस्वहारी नरकान् यातनाश्चानुभूय तु ॥ १८

मलेषु च कृमिर्भूत्वा श्वविष्ठामुपजीवति ॥ १८॥

श्वचर्यामतिमानं च स्वस्वदारेषु विप्लवम् ।
तुलयाऽधारयद्धर्मो ह्यतिमानोऽतिरिच्यते ॥ १९॥

[3]म्लानं मां विकलं पश्य विवर्णं हरिणं कृशम् ।
अतिमानेन मां पश्य पापां गतिमुपागतम् ॥ २०॥

अहं वै विपुले जातः कुले धनसमन्विते ।
पौराणे जन्मनि विभो ज्ञानविज्ञानपारगः ॥ २१॥

अभजं जानमानो हि दोषानेतानहं सदा ।
संरब्ध एव भूतानां पृष्ठमांसान्यभक्षयम् ॥ २२॥

1. क-घ—द्विजाः  2. ख—रौरवं स विगच्छति

3. क-घ—ग्लानं

सोऽहं वो विदितस्सर्वैर् दूरगो मलिनो वने ।
साधूनां परिभावेप्सुर् विप्राणां गर्वितो धनैः ॥ २३॥
इमामवस्थां सम्प्राप्तः पश्य कालस्य पर्ययम् ॥ २४
[1]आदीपितमिवालातं भ्रमरैरिव चार्दितम् ।
धावमानं सुसंरब्धं पश्य मां रजसाऽन्वितम् ॥ २५
स्वाध्यायैस्तु महात्मानस् तरन्ति गृहमेधिनः ।
दानैः पृथग्विधैश्चैव विप्रजात्यां मनीषिणः ॥ २६
तथा पापकृतं विप्रम् आश्रमस्थं महीपते ।
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्ति तम् ॥ २७
अहं तु पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ।
निश्चयं नाधिगच्छामि कथं मुच्येयमापदः ॥ २८
जातिस्मरत्वं हि मम केन पूर्वेण कर्मणा ।
शुभेन येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप ॥ २९
त्वं ममेह प्रपन्नस्य संशयं ब्रूहि पृच्छतः ।
चण्डालत्वात् कथमहं मुच्येयमिति सत्तम ॥ ३०

राजा—

चण्डालवृत्तात्तप्तस्त्वं येन मोक्षमवाप्स्यसि ।
दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुके ॥ ३१

1. ख—अदीप्तमिव तैलार्क्तं

हित्वा प्राणान् प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥ ३१॥

भीष्मः—

इत्युक्तस्स तदा राजन् ब्रह्मस्वार्थे परन्तप ।
हित्वा रणमुखे प्राणान् गतिमिष्टामवाप्तवान् ॥ ३२॥

तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ ।
[1]यदीच्छसि महाबाहो शाश्वतीं गतिमुत्तमाम् ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
[ अस्मिन्नध्याये ३३॥ श्लोकाः ]

---

1. घ—इदमर्धं नास्ति

## ॥ द्विनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पुण्यपापकर्मफलभेदस्य पुण्यकर्मणां च तरतमभावस्य च बोधनाय तादृशकर्मविशेषसाध्यफलविशेषप्रतिपादकशक्रगौतमसंवादानुवादः ॥

युधिष्ठिरः—

एको लोकस्सुकृतिनां स्वर्गे लोके पितामह ।
उत तत्रापि नानात्वं सर्वं ब्रूहि [1]कुरूद्वह ॥ १

भीष्मः—

कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः ।
पुण्यान् पुण्यकृतो यान्ति पापान् पापकृतो जनाः ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गौतमस्य मुनेस्तात संवादं वै शतक्रतोः ॥ ३

गौतमो ब्राह्मणः कश्चिन्मृदुर्दान्तो जितेन्द्रियः ।
महावने हस्तिशिशुं परिद्यूनममातृकम् ॥ ४

तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः ।
सोऽथ दीर्घेण कालेन बभूवातिबलो महान् ॥ ५

तं प्रभिन्नं महादीर्घं प्रसूतं सर्वतो मदम् ।
धृतराष्ट्रस्वरूपेण शक्रो जग्राह हस्तिनम् ॥ ६

1. ख-ब—पितामह

ह्रियमाणं तु तं दृष्ट्वा गौतमस्संशितव्रतः ।
अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ॥ ७

गौतमः—

[1]मा मा हार्षीर्हस्तिनं पुत्रमेनं
दुःखात् पुष्टं धृतराष्ट्रः कृतज्ञः ।
मैत्रं सतां सप्तपदं वदन्ति
मित्रद्रोहो नेह राजन् स्पृशेत् त्वाम् ॥ ८

इध्मोदकप्रदातारं शून्यपालकमाश्रमे ।
विनीतमाचार्यकुले सुयुक्तं गुरुकर्मणि ॥ ९

शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम ।
त्वं मे विक्रोशतो राजन् हर्तुं नार्हसि कुञ्जरम् ॥ १०

धृतराष्ट्रः—

गवां सहस्रं भवतो ददानि
शतानि निष्कस्य ददानि पञ्च ।

---

1. क—महर्षिर्हस्तिनं पुत्रं धृतराष्ट्रकृताज्ञया [पाठान्तरम्]
ख—त्वं मा हार्षीर्हस्तिनं पुत्र मेनं
... धृतराष्ट्रकृताज्ञया ।
मित्रं सदा हस्तिकृतं वदन्ति
मित्रद्रोहो नैव राजन् स्पृशेत्त्वाम् ॥ [पाठान्तरम्]

अन्यच्च वित्तं [1]विधिवन्महर्षे
किं ब्राह्मणस्येह गजेन कृत्यम् ॥ ११

गौतमः—

[2]त्वामेव गावो विविधा भजन्तु
दास्यश्च निष्का विविधं च रत्नम् ।
अन्यच्च वित्तं विविधं नरेन्द्र
न ब्राह्मणस्येह धनेन कृत्यम् ॥ १२

धृतराष्ट्रः—

ब्राह्मणानां हस्तिनां नास्ति कृत्यं
राजन्यानां हस्तिकुलानि विप्र ।
स्ववाहनं नयतो नास्त्यधर्मो
नागश्रेष्ठाद् गौतमास्मान्निवर्त ॥ १३

गौतमः—

यत्र प्रेतो नन्दति पुण्यकर्मा
यत्र प्रेतश्शोचति पापकर्मा ।
वैवस्वतस्य सदने महात्मनस्
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ १४

1. ख—भवतो ददामि न ब्रा
2. ख—अर्धद्वयं नास्ति

धृतराष्ट्रः—

ये नास्तिका निष्क्रियाश्श्रद्दधानाः
पापात्मानश्चेन्द्रियार्थे निसृष्टाः ।
यमस्य ते यातनां प्राप्नुवन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ १५

गौतमः—

[1]वैवस्वती संयमनं च नाम
यत्रानृतं प्रोच्यते यत्र सत्यम् ।
यत्राबलान् बलिनो घातयन्ति
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ १६

धृतराष्ट्रः—

ज्येष्ठां स्वसारं पितरं मातरं च
गुरून् यथाऽमानयन्तश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १७

गौतमः—

मन्दाकिनी वैश्रवणस्य राज्ञो
महाभोगा भोगिनश्च प्रवेश्या ।

---

1. ख—अर्धचतुष्टयं नास्ति

गन्धर्वयक्षैरप्सरोभिश्च जुष्टा
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ १८

धृतराष्ट्रः—

अतिथिव्रतास्सुव्रता ये जना वै
प्रतिश्रयं ये ददति द्विजेभ्यः ।
शिष्टाशिनस्संविभज्याश्रितेभ्यो
मन्दाकिनीं तेऽपि हि भूषयन्ति ॥ १९

गौतमः—

मेरौ नगे यद्वनं चातिरम्यं
सुपुष्पितं किन्नरीगीतजुष्टम् ।
सुदर्शना यत्र जम्बूर्विशाला
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ २०

धृतराष्ट्रः—

ये ब्राह्मणा मृदवस्सत्यशीला
बहुश्रुतास्सर्वभूताभिरामाः ।
येऽधीयते सेतिहासं पुराणं
मध्वाहुत्या जुह्वति च द्विजेभ्यः ॥ २१

तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ।

यदन्यत्ते विविधं स्थानमस्ति
तद्ब्रूहि त्वं त्वरितो ह्येष यामि ॥ २२

गौतमः—

सुपुष्पितं किन्नरराजजुष्टं
प्रियं [1]वनं नन्दनं नारदस्य ।
गन्धर्वाणामप्सरसां च सद्म
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ २३

धृतराष्ट्रः—

ये नृत्यगीते कुशला जनास्सदा
देवात्मनां प्रियकामाश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ २४

गौतमः—

यत्रोत्तराः कुरवो यान्ति रम्या
देवैस्सार्धं मोदमाना नरेन्द्र ।
यत्राग्नयो ये निवसन्ति विप्रा
ह्ययोनयः पर्वतयोनयश्च ॥ २५

यतश्शक्रो वर्षति सर्वकामान्
यत्र स्थिताः कामचाराश्चरन्ति ।

---

1. क-ब—पदं

यत्र चेर्ष्या नास्ति नारीनराणां
तत्र त्वाऽहं हस्तिनं याचयिष्यते ॥ २६

धृतराष्ट्रः—

ये सर्वभूतेषु निवृत्तकामा
ह्यमांसादा न्यस्तदण्डाश्चरन्ति ।
न हिंसन्ति स्थावरजङ्गमानि
भूतानां ये सर्वभूतात्मभूताः ॥ २७

निराशिषो निर्ममा वीतरागा
लाभालाभे तुल्यनिन्दाप्रशंसाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ २८

गौतमः—

[1]ततः परं भान्ति लोकास्सनातनास्
सुपुण्यगन्धा निर्मला वीतशोकाः ।
सोमस्य राज्ञस्सदने महात्मनस्
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ २९

धृतराष्ट्रः—

ये दानशीला न प्रतिगृह्णन्ति नित्यं
न चाप्यर्थानाहरन्ते परेषाम् ।

1. अ—श्लोकत्रयं नास्ति

येषामदेयमर्हते नास्ति किञ्चित्
सर्वातिथ्यास्सुप्रजाता जनास्ते ॥ ३०

ये क्षन्तारो नाभिजल्पन्ति चान्याञ्
शक्ता भूत्वा सततं पुण्यशीलाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३१

गौतमः—
ततः परं भान्ति लोकास्सनातना
विरजस्का वितमस्का विशोकाः ।
आदित्यस्य सुराणामर्हयन्तो हि राजंस्
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ ३२

धृतराष्ट्रः—
स्वाध्यायशीला गुरुशुश्रूषकाश्च
तपस्विनस्सत्यसन्धा नरा ये ।
आचार्याणामप्रतिकूलभाषिणो
नित्यं स्थिता गुरुकर्मस्वचोद्याः ॥ ३३

तथाविधानामेष लोको महर्षे
विशुद्धानां भावितवाङ्मतीनाम् ।
सत्ये स्थितानां वेदविदां महात्मनां
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३४

गौतमः—

तत: परं भान्ति लोकास्सनातनास्
सुपुण्यगन्धा ह्यरजसो वीतशोकाः ।
वरुणस्य राज्ञस्सदने महात्मनस्
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ ३५

धृतराष्ट्रः—

चातुर्मास्यैर्ये यजन्ते जनास्सदा
तथेष्टीनां दशशतं प्राप्नुवन्ति ।
ये चाग्निहोत्रं जुह्वति श्रद्दधाना
यथान्यायं त्रीणि वर्षाणि विप्राः ॥ ३६
स्वदारगाणां धर्मकृतां महात्मनां
यथोचिते वर्त्मनि सुस्थितानाम् ।
धर्मात्मनामुद्वहतां गतिं सदा
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३७

गौतमः—

इन्द्रस्य लोका अमरा वीतशोका
दुरत्यया: काङ्क्षिता मानवानाम् ।
तत्राहं ते भवतो भूरितेजसा
[1]राजन्निमं हस्तिनं याचयिष्ये ॥ ३८

1. ख—इतः षट्पादा न सन्ति

धृतराष्ट्रः—

शतवर्षजीवी यश्च शूरो मनुष्यो
वेदाध्यायी यश्च यज्वाऽप्रमत्तः ।
एते सर्वे शक्रलोकं भजन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ ३९

गौतमः—

प्राजापत्यास्सन्ति लोका महान्तो
नाकस्य पृष्ठे पुष्कला वीतशोकाः ।
मनीषिणां सर्वलोकाभयानां
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ ४०

धृतराष्ट्रः—

ये राजानो राजसूयेऽभिषिक्ता
धर्मात्मानो रक्षितारः प्रजानाम् ।
ये चाश्वमेधावभृथाप्लुताङ्गास्
तेषां लोका धृतराष्ट्रो न तत्र ॥ ४१

गौतमः—

ततः परं सन्ति लोकास्सनातनास्
सुपुण्यगन्धा विरजश्शोकमोहाः ।
तस्मिन्नहं दुर्लभे त्वप्रधृष्ये
गवां लोके हस्तिनं याचयिष्ये ॥ ४२

धृतराष्ट्रः—

यो गोसहस्री शतदो महात्मा
यो गोशती दश दद्याच्च शक्त्या ।
तथा दशभ्यो यश्च दद्यादिहैकां
[1]पञ्चभ्यो वा दानशीलस्तथैकाम् ॥ ४३

ये जीर्यन्ते ब्रह्मचर्येण विप्राः
ब्राह्मीं वाचं परिरक्षन्ति चैव ।
मनस्विनस्तीर्थयात्रापरा ये
[2]ते तत्र मोदन्ति ततो विमानैः ॥ ४४

प्रभासं मानसं पुण्यं पुष्कराणि महत् सरः ।
पुण्यं च नैमिशं तीर्थं [3]बाहुदां करतोयिनीम् ॥ ४५

गयां हयशिरश्चैव विपाशां स्थलवालुकाम् ।
कृष्णां गङ्गां वृद्धगङ्गां महाह्रदमथापि च ॥ ४६

गोमतीं कौशिकीं पम्पां महात्मानो धृतव्रताः ।
सरस्वतीदृषद्वत्यौ यमुनां ये प्रयान्ति च ॥ ४७

तत्र ते दिव्यसंस्थाना दिव्यमाल्यधराश्शिवाः ।
प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ॥ ४८

1. क-ख—अयं पादो नास्ति
2. ख—अयं पादो नास्ति
3. क-ख—इतः अष्टौ पादा न सन्ति

गौतमः—

यत्र शीतभयं नास्ति न चोष्णभयमण्वपि ।
क्षुत्पिपासे न च ग्लानिर् न दुःखं न सुखं तथा ॥ ४९

न द्वेष्यो न प्रियः कश्चिन्न वन्धुर्न रिपुस्तथा ।
न जरामरणं तत्र न पुण्यं न च पातकम् ॥ ५०

तस्मिन् विरजसि स्फीते प्राज्ञसत्त्वव्यवस्थिते ।
स्वयम्भुभवने पुण्ये हस्तिनं याचयिष्यति ॥ ५१

धृतराष्ट्रः—

[1]विमुक्तास्सर्वसङ्गेषु कृतात्मानो यतव्रताः ।
अध्यात्मयोग[2]युक्ता ये युक्तास्स्वर्गगतिं गताः ॥ ५२

ते ब्रह्मभवनं पुण्यं प्राप्नुवन्ति हि सात्त्विकाः ।
न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ॥ ५३

गौतमः—

रथन्तरं यच्च बृहच्च गीयते
यत्र वेदिः पुण्यजनैर्वृता च ।
यत्रोपयाति हरिभिस्सोमपीथी
तत्र त्वाऽहं हस्तिनं याचयिष्ये ॥ ५४

1. ख—अर्धषट्कं नास्ति
2. क-घ—संस्थाये युक्तास्सर्वे

बुध्यामि त्वां वृत्रहण[1]मभिष्टुतं
व्यतिक्रमन्तं भुवनानि विश्वा ।
कच्चिन्न वाचा वृजिनं कदाचिद्
अकारिषं मनसोऽभिषङ्गात् ॥ ५५

शक्रः—
यस्मादिमं लोकपथं प्रजानाम्
अन्वागमं पदवादे गजस्य ।
तस्माद्भवान् प्रणतं माऽनुशास्तु
ब्रवीषि यत् करवाणीह सर्वम् ॥ ५६

गौतमः—
श्वेतं करेणुं मम पुत्रं तु नागं
प्रियं तु मे षष्टिवर्षं च बालम् ।
यो मे वने वसतोऽभूद्द्वितीयस्
तमेव मे देहि सुरेन्द्र नागम् ॥ ५७

शक्रः—
अयं सुतस्ते द्विजमुख्यनाग[2]श्
चाघ्रायते त्वामभिवीक्षमाणः ।
पादौ च ते नासिकयोपजिघ्रते
श्रेयो मम ध्याहि नमश्च तेऽस्तु ॥ ५८

1. क-घ—न्त्वभि; ख—मृषिष्टुतं 2. क-घ—गः पलायते

गौतमः—

शिवं सदैवेह सुरेन्द्र तुभ्यं
ध्यायामि पूजां च सदा प्रयुञ्जे ।
ममापि त्वं शक्र [1]शिवं ददस्व
त्वया दत्तं प्रतिगृह्णामि नागम् ॥ ५९

शक्रः—

येषां वेदा निहिता वै गुहायां
मनीषिणां सत्त्ववतां महात्मनाम् ।
तेषां त्वयैकेन महात्मनाऽस्मि
बुद्धस्तस्मात् प्रीतिमांस्तेऽहमद्य ॥ ६०

हन्तैहि ब्राह्मण क्षिप्रं सह पुत्रेण हस्तिना ।
प्राप्नुहि त्वं शुभाँल्लोकान् अह्नाय च चिराय च ॥ ६१

भीष्मः—

स गौतमं पुरस्कृत्य सह पुत्रेण हस्तिना ।
दिवमाचक्रमे वज्री सद्भिस्सह दुरासदम् ॥ ६२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
॥ ७९ ॥ आनुशासनिकपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
[अस्मिन्नध्याये ६२ श्लोकाः]

---

1. ख—गजं ददस्व

## ॥ त्रिनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विप्रवचनस्यैहिकपारलिकश्रेयस्साधनत्व-कथनम् ॥ १ ॥ तथाऽनशनस्य महातपस्त्वकथनम् ॥ २ ॥

युधिष्ठिरः—

दानं बहुविधाकारं शान्तिस्सत्यमहिंसता ।
स्वदारतुष्टिश्चोक्ता ते फलं दानस्य चापि यत् ॥ १

पितामहस्य विदितं किमन्यत्र तपोबलात् ।
तपसो यत् परं त्वद्य तन्मे व्याख्यातुमर्हसि ॥ २

भीष्मः—

तपसः प्रक्षयो यावत् तावल्लोको युधिष्ठिर ।
मतं मम तु कौन्तेय तपो नानशनात् परम् ॥ ३

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
भगीरथस्य संवादं ब्रह्मणश्च महात्मनः ॥ ४

अतीत्यामरलोकं च गवां लोकं च भारत ।
ऋषिलोकं च सोऽगच्छद् भगीरथ इति श्रुतिः ॥ ५

तं दृष्ट्वा तु वचः प्राह ब्रह्मा राजन् भगीरथम् ॥ ५॥

ब्रह्मा:—

कथं भगीरथाऽऽगास्त्वम् इमं देशं दुरासदम् ।

न हि देवा न गन्धर्वा न मनुष्या भगीरथ ॥ ६॥
आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ॥ ७

भगीरथः—

निश्शङ्कमन्नमददां ब्राह्मणेभ्यश्
शतं सहस्राणि सदैवतानाम् ।
[1]ब्रह्मन् व्रतं नित्यमास्थाय विद्धि
न त्वेवाहं तस्य फलादिहागतः ॥ ८
दशैकरात्रान् दशपञ्चरात्रान्
एकादशैकादशकांस्तथैव ।
ज्योतिष्टोमानां च शतं यदिष्टवान्
फलेन तेनापि न चागतोऽहम् ॥ ९
यच्चावसं जाह्नवीतीरनित्यश्
शतं समास्तप्यमानस्तपोऽहम् ।
अदां च तत्राश्वतरीसहस्रं
गाः कन्यका न च तेनागतोऽहम् ॥ १०
दशायुतानि चाश्वानाम् अयुतानि च विंशतिम् ।
पुष्करेषु द्विजातिभ्यः प्रादां गाश्च सहस्रशः ॥ ११
सुवर्णचन्द्रोडुपधारिणीनां
कन्योत्तमानामददां स्रग्विणीनाम् ।

1. क—देवादहं तस्य ;   ख—दैवादहंतस्य

षष्टिं सहस्राणि च भूषितानां
जाम्बूनदैराभरणैर्न तेन ॥ १२

दशार्बुदान्यददं गोसवेज्यास्
त्वेकैकशो गा दश लोकनाथ ।
समानवत्साः पयसा समन्वितास्
[1]सुवर्णकांस्योपदुहा न तेन ॥ १३

अप्तोर्यामेषु सततम् एकैकस्मिन् दशाददम् ।
गृष्टीनां क्षीरदोग्ध्रीणां रोहिणीनां शतानि च ॥ १४

सुदोग्ध्रीणां गवां चैव प्रयुतानि दशैव तु ।
प्रादां दशगुणं ब्रह्मन् न च तेनाहमागतः ॥ १५

वाजिनां बाह्लिजातानाम् अयुतानामदां दश ।
[2]पीतानां हेममालानां न च तेनाहमागतः ॥ १६

कोटीश्च गाश्चतस्रोऽष्टौ प्रादां ब्रह्मन् दशत्वहम् ।
एकैकस्मिन् क्रतौ तेन फलेनापि न चागतः ॥ १७

वाजिनां श्यामवर्णानां हरितानां पितामह ।
प्रादां हेमस्रजां ब्रह्मन् कोटीर्दश च [3]सप्त च ॥ १८

ईषादन्तान् महाकायान् काञ्चनस्रग्विभूषितान् ।

---

1. क-ख—सुवर्णवर्णाः कामदुघा न तेन
2. क-ख—सितानां
3. क-ख—सत्तम

[1]पद्मिनां वै सहस्राणि प्रायच्छं दश सप्त च ॥ १९

अलङ्कृतानां देवेश दिव्यैः कनकभूषणैः ।
रथानां काञ्चनाङ्गानां सहस्रा[2]ण्यददं दश ॥ २०

सप्त चान्यानि युक्तानि वाजिभिस्समलङ्कृतैः ।
दक्षिणावयवाः केचिद् वेदैर्ये सम्प्रकीर्तिताः ॥ २१

वाजपेयेषु दशसु प्रादां तेन न चाप्यहम् ।
शक्रतुल्यप्रभावाणाम् इज्यया विक्रमेण च ॥ २२

सहस्रं निष्ककण्ठानाम् अददं दक्षिणामहम् ।
विजित्य नृपतीन् सर्वान् मखैरिष्ट्वा पितामह ॥ २३

अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः ॥ २३॥

स्रोतश्च यावद्गङ्गायाश् छन्नमासीज्जगत्पते ।
दक्षिणाभिः प्रवृत्ताभिर् मम नागां च तत् कृते ॥ २४॥

वाजिनां च सहस्रे द्वे सुवर्णशतभूषिते ।
वनं ग्रामशतं चाहम् एकैकस्यां तिथावदाम् ॥ २५॥

तपस्वी नियताहारश् शममास्थाय वाग्यतः ।
दीर्घकालं हिमवति गङ्गार्थमचरं तपः ॥ २६॥

---

1. क-घ—पद्मानि;　ख—दन्तिनां वै
2. क—ण्ययुतं दश;　ख—णामयुतं दश

[1]मूर्ध्ना हरं महादेवं प्रणम्याभ्यर्चयन्नृपः ।
न तेनाप्यहमागच्छं फलेनेह पितामह ॥ २७॥

[2]शम्याक्षेपैरयजं यच्च देवाञ्
शतैः क्रतूनामयुतैश्चापि यच्च ।
त्रयोदशद्वादशाहैश्च देव
सपौण्डरीकैर्न च तेषां फलेन ॥ २८॥

अष्टौ सहस्राणि ककुद्मिनामहं
शुक्लर्षभाणामददं ब्राह्मणेभ्यः ।
एकैकं वा काञ्चनं शृङ्गमेभ्यः
पत्नीश्चैषामददं निष्ककण्ठीः ॥ २९॥

हिरण्यरत्नरचितान् अददं रत्नपर्वतान् ।
धनधान्यसमृद्धांश्च ग्रामाञ् शतसहस्रशः ॥ ३०॥

शतं शतनां षष्टीनाम् अददं चाप्यतन्द्रितः ।
इष्ट्वाऽनेकैर्महायज्ञैर् ब्राह्मणेभ्यो न तेन च ॥ ३१॥

एकादशाहैरयजं सदक्षिणैर्
द्वाशाहैरश्वमेधैश्च देवान् ।

1. क-घ—मृगनाभं महादेवं शिरसा यद्दधार सः ।
न तेनाप्यहमुद्गच्छं फलेनेह पितामह ॥ [ पाठान्तरम् ]

2. ख—पञ्च पादा न सन्ति

गवां धनैष्षोडशभिश्च ब्रह्मंस्
तेषां फलेनेह न चागतोऽस्मि ॥ ३२॥

निष्कैककण्ठीमददां गां जनाय
तथा विस्तीर्णं काञ्चनपादपानाम् ।
वनं चूतानां रत्नविभूषितानां
न चैव तेषामागतोऽहं फलेन ॥ ३३॥

[1]तुरायणं तु व्रतमप्यधृष्यम्
अक्रोधनोऽकरवं त्रिंशदब्दान् ।
शतं गवामष्टशतानि चैव
दिने दिने ह्यददं ब्राह्मणेभ्यः ॥ ३४॥

पयस्विनीनामथ रोहिणीनां
तथैव चाप्यनडुहां लोकनाथ ।
प्रादां नित्यं ब्राह्मणेभ्यः पुराऽथ
नेहागतस्तेन फलेन चाहम् ॥ ३५॥

शम्याक्षेपेण पृथिवीं त्रिधा पर्यचरं यजन् ।
त्रिंशदग्नीनहं ब्रह्मन्नयजं यच्च नित्यदा ॥ ३६॥

अष्टभिस्सर्वमेधैश्च नृमेधैर्द्विगुणैस्तथा ।
दशभिश्चाश्वमेधैश्च स्तोमैरष्टादशोत्तरैः ॥ ३७॥

---

1. ख—चान्द्रायणं तु ;　घ—तुरायणानु

न चैव तेषां देवेश फलेनाहमिहागतः ॥ ३८

सरय्वां बाहुदायां च गङ्गायामथ नैमिशे ।
गवां शतानामयुतम् अददं न च तेन वै ॥ ३९

इन्द्रेण गुह्यं निहितं गुहायां
यद्भवता तपसा न ह्यविन्दत ।
जाज्वल्यमानमुशनस्तेजसैव
तत् साधयामास महद्वरेण्यम् ॥ ४०

ब्राह्मणार्थाय कर्माणि रणं चैव करोमि यत् ।
ततो मे ब्राह्मणास्तुष्टास् तस्मिन् कर्मणि साधिते ॥ ४१

पूजितैर्ब्राह्मणैर्नित्यं न च तेनाहमागतः ॥ ४१॥

सहस्रमृषयश्चासन् सत्रे तत्र समागताः ।
उक्तस्तैरस्मि गच्छ त्वं ब्रह्मलोकमिति प्रभो ॥ ४२॥

प्रीतेनोक्तस्सहस्रेण ब्राह्मणानामहं प्रभो ।
इमं लोकमनुप्राप्तो मा भूत् तत्र विचारणा ॥ ४३॥

कामं यथावद्विहितं विधात्रा
पृष्टेन वाच्यं तु मया यथावत् ।
तपो नान्यच्चानशनान्मतं मे
नमोऽस्तु ते देववर प्रसीद ॥ ४४॥

भीष्मः—

इत्युक्तवन्तं तं ब्रह्मा राजानं स्म भगीरथम् ।
पूजयामास पूजार्हं विधिदृष्टेन कर्मणा ॥ ४५॥

तस्मादनशनैर्युक्तो विप्रान् पूजय नित्यदा ।
विप्राणां वचनात् सर्वं परत्रेह च सिध्यति ॥ ४६॥

वासोभिरन्नैर्गोभिश्च शुभैर्नैवेशिकैरपि ।
शुभैस्सुरक्षणैश्चापि तोष्या एव द्विजास्त्वया ॥ ४७॥

एतदेव परं गुह्यम् अलोभेन समाचर ॥ ४८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
[ अस्मिन्नध्याये ४८ श्लोकाः ]

---

## ॥ चतुर्णवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यायुष्यानायुष्यकारणशुभाशुभकर्मप्रतिपादनम् ॥

युधिष्ठिरः—

शतायुरुक्तः पुरुषश् शतवीर्यश्च वैदिके ।
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ १

आयुष्मान् केन भवति स्वल्पायुर्वाऽपि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ २

तपसा ब्रह्मचर्येण जपैर्होमैस्तथा परैः ।
जन्मना यदि वाऽचारात् तन्मे ब्रूहि पितामह ॥ ३

भीष्मः—

अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
अल्पायुर्येन भवति दीर्घायुर्येन मानवः ॥ ४

यथैव लभते कीर्तिं यथैव लभते श्रियम् ।
यथा च वर्तयन् पुरुषश् श्रेयसा सम्प्रयुज्यते ॥ ५

आचाराल्लभते चायुर् आचाराल्लभते श्रियम् ।
आचारात् कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ ६

दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
त्रसन्ति चास्य भूतानि तथा परिभवन्ति च ॥ ७

तस्मात् कुर्यादिहाचारं यदीच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य ह्याचारो हन्त्यलक्षणम् ॥ ८

आचारलक्षणो धर्मस् सन्तश्चाचारलक्षणाः ।
साधूनां च यथावृत्तम् एतदाचारलक्षणम् ॥ ९

अप्यदृष्टं श्रुतं वाऽपि पुरुषं धर्मचारिणम् ।
स्वानि कर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् ॥ १०

ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास् ते भवन्ति गतायुषः ॥ ११

[1]दुश्शीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ १२

सर्वलक्षणहीनोऽपि समुदाचारवान् नरः ।
श्रद्दधानोऽनसूयुश्च शतं वर्षाणि जीवति ॥ १३

अक्रोधनस्सत्यवादी भूतानामप्यहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ १४

लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टस्सूचकश्च नेहायुर्विन्दते महत् ॥ १५

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थावनुचिन्तयेत् ।
उत्थाय चोपतिष्ठेत पूर्वां सन्ध्यां कृताञ्जलिः ॥ १६

1. ख—अर्धद्वयं नास्ति

एवमेव परां सन्ध्यां समुपासीत वाग्यतः ।
[1]नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ॥ १७

ऋषयो दीर्घसन्ध्यत्वाद् दीर्घमायुरवाप्नुवन् ॥ १७॥

सदर्भपाणिस्तत्कुर्वन् वाग्यतस्तन्मनाश्शुचिः ।
तस्मात्तिष्ठेत् सदा पूर्वां पश्चिमां चैव वाग्यतः ॥ १८॥

ये न पूर्वामुपासन्ते द्विजास्सन्ध्यां न पश्चिमाम् ।
सर्वांस्तान् धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ १९॥

परदारा न गन्तव्यास् सर्ववर्णेषु कर्हिचित् ।
नहीदृशमनायुष्यं लोके किञ्चन विद्यते ॥ २०॥

यादृशं पुरुषस्येह परदारोपसेवनम् ।
[2]तादृशं पुरुषस्येह धनायुष्यहरं नृणाम् ॥ २१॥

मन्त्रं [3]प्रसाधनं स्नानम् अञ्जनं दन्तधावनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥ २२॥

पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत् कथञ्चन ।
उदक्यया च सम्भाषां न कुर्वीत कदाचन ॥ २३॥

नोत्सृजेत पुरीषं च क्षेत्रे मार्गस्य चान्तिके ।
उभे मूत्रपुरीषे तु [4]नाप्सु कुर्याद्विचक्षणः ॥ २४॥

---

1. क-घ—अर्धचतुष्टयं नास्ति
2. क—इदमर्धं नास्ति
3. ख—प्रसादनं
4. क-घ—अयं पादोऽनन्तरश्च नस्तः

देवालयेऽथ गोवृन्दे चैत्ये सस्येषु विश्रमे ॥ २५

[1]भक्ष्यान् भुक्त्वा क्षुतेऽध्वानं गत्वा मूत्रपरीषयोः ।
द्विराचामेद्यथान्यायं हृद्गतं तु पिबन्नपः ॥ २६

प्राङ्मुखो नित्यमश्नीयाद् वाग्यतोऽन्नमकुत्सयन् ।
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् ॥ २७

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
धन्यं पश्चान्मुखो भुङ्क्ते [2]मदं भुङ्क्त उदङ्मुखः ॥ २८

अग्रासनो जितक्रोधी बालपूर्वस्त्वलङ्कृतः ।
घृताहुति विशुद्धान्नं हुताग्नि[3]श्च क्षिपन् ग्रसेत् ॥ २९

नाधितिष्ठेत्तुषाञ् जातु केशभस्मकपालकान् ।
अन्यस्य चाप्युपस्थानं दूरतः परिवर्जयेत् ॥ ३०

शान्तिहोमं तु कुर्वीत पवित्राणि च कारयेत् ।
निषण्णश्चापि खादेत न तु गच्छन् कथञ्चन ॥ ३१

मूत्रं न तिष्ठता कार्यं न भस्मनि न गोव्रजे ।
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ॥ ३२

त्रीणि तेजांसि नोच्छिष्ट आलभेत कथञ्चन ।

---

1. क-घ—भोज्यान्;  ख—भोक्ष्यन्
2. ख-घ—ऋतं
3. ख—श्चाक्षि

अग्निं गां ब्राह्मणं चैव तथा स्वायुर्नरिष्यति ॥ ३३

त्रीणि ज्योतींषि नोच्छिष्ट उदीक्षेत कथञ्चन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ॥ ३४

ऊर्ध्वं प्राणा व्युत्क्रमन्ति यूनस्स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ ३५

अभिवादयेच्च वृद्धानाम् आसनं चैव दापयेत् ।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ ३६

[1]न चासीतासने भिन्ने भिन्नकांस्यं च वर्जयेत् ।
[2]नैकवस्त्रेण भोक्तव्यं न नग्नस्स्नातुमर्हति ॥ ३७

स्वप्तव्यं नैव नग्नेन न चोच्छिष्टोऽपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ ३८

केशग्रहान् प्रहारांश्च शिरस्येतान् विवर्जयेत् ।
न पाणिभ्यामुभाभ्यां च कण्डूयेज्जातु वै शिरः ॥ ३९

न चाभीक्ष्णं शिरस्स्नायाद् आयुस्तस्य न [3]रिष्यते ॥ ३९॥

शिरोभ्यक्तेन तैलेन नाङ्गं किञ्चिद् उपस्पृशेत् ।
तिलपिष्टं न चाश्नीयाद् गतसर्वरसं तथा ॥ ४०॥

नाध्यापयेत चोच्छिष्टो नाधीयीत कथञ्चन ।

---

1. ख—नचाश्नीता
2. क-घ—अर्धचतुष्टयं नास्ति
3. क-घ—जीर्यते

वाते च पूतिगन्धे च मनसा च न चिन्तयेत् ॥ ४१॥

अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ॥ ४२

यमः—

आयुरस्य निकृन्तामि प्रज्ञामस्याददेऽथ वा ।
य उच्छिष्टः प्रवदति स्वाध्यायं वाऽधिगच्छति ॥ ४३

यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः ॥ ४३॥

भीष्मः—

तस्माद्युक्तोऽप्यनध्याये नाधीयीत कदाचन ॥ ४४

प्रत्यादित्यं [1]प्रत्यनिलं प्रतिगां प्रति च द्विजान् ।
मेहयन्ति च पन्थानं ते भवन्ति गतायुषः ॥ ४५

उभे मूत्रपुरीषे वै दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ तदाऽस्यायुर्नरिष्यति ॥ ४६

त्रीन् सदा नावजानीयाद् दीर्घमायुर्जिजीविषुः ।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ ४७

दहत्याशीविषः क्रुद्धो यावत् [2]स्पृशति चक्षुषा ।
क्षत्रियोऽपि दहेत् क्रुद्धो यावत् स्पृशति तेजसा ॥ ४८

ब्राह्मणस्तु कुलं हन्याद् ध्यानेनावेक्षणेन च ।
तस्मादेतत् त्रयं नित्यं नावमन्येत पण्डितः ॥ ४९

---

1. घ—प्रत्यनलं   2. घ—दहति

गुरुणा वैरनिर्बन्धो न कर्तव्यः कथञ्चन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युधिष्ठिर ॥ ५०

सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह ।
गुरुनिन्दा दहत्यायुर् मनुष्याणां न संशयः ॥ ५१

दूरादावसथान्मूत्रं दूरात् पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ ५२

नातिसायं नातिकल्यं न च मध्यन्दिने स्थिते ।
नाज्ञातैस्सह गच्छेत नैको न वृषलैस्सह ॥ ५३

पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारश्रान्ताय गर्भिण्यै दुर्बलाय च ॥ ५४

प्रदक्षिणं च कुर्वीत परिज्ञातान् वनस्पतीन् ।
चतुष्पथान् मङ्गलांश्च मान्यान् वृद्धान् द्विजानपि ॥ ५५

मध्यन्दिने निशाकाले मध्यरात्रे च सर्वदा ।
चतुष्पथान् न सेवेत उभे सन्ध्ये तथैव च ॥ ५६

[1]उपानहौ च छत्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात् पादं पादेन नाक्रमेत् ॥ ५७

अमायां पौर्णमास्यां च चतुर्दश्यां च जन्मनि ।
अष्टम्यामथ द्वादश्यां ब्रह्मचारी सदा भवेत् ॥ ५८

1. क-ख—अर्धपञ्चकं नास्ति

वृथा मांसं न खादेत पृष्ठमांसं तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥ ५९

नारुन्तुदस्स्यान्न नृशंसवादी
[1]न हीनतो धनमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ ६०

अतिवादवाणा मुखतो निस्सरन्ति
यैराहतश्शोचति रात्र्यहानि ।
परस्य वा मर्मसु ये पतन्ति
तान् पण्डितो नावसृजेत् परेषु ॥ ६१

संरोहत्यग्निना दग्धं वनं परशुना [2]क्षतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ६२

हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोधिकान् ।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ ६३

नास्तिक्यं वेदनिन्दां च परनिन्दां च कुत्सनम् ।
द्वेषस्तम्भातिमानांश्च तैक्ष्ण्यं च परिवर्जयेत् ॥ ६४

परस्य दण्डं नोद्यच्छेत् क्रुद्धो नैव निपातयेत् ।

---

1. क-घ—न दीनतो वर   ख—न हीनतो वाऽऽचारमभ्याददीत
2. घ—हतम्

अन्यत्र पुत्राच्छिष्याच्च शिक्षार्थं ताडनं स्मृतम् ॥ ६५

न ब्राह्मणान् परिवदेन्नक्षत्राणि न निर्दिशेत् ।
तिथीन् परस्य न ब्रूयात् तस्य चायुर्नरिष्यति ॥ ६६

अमावास्यामृते नित्यं दन्तधावनमाचरेत् ।
इतिहासपुराणानि दानं वेदं च नित्यशः ॥ ६७

गायत्रीमननं नित्यं कुर्यात् सन्ध्यां समाहितः ॥ ६७॥

कृत्वा मूत्रपुरीषे तु रथ्या[1]माक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात् स्वाध्याये भोजने तथा ॥ ६८॥

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
[2]अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥ ६९॥

यावकं कृसरं मांसं शष्कुलीं पायसं तथा ।
आत्मार्थं न प्रकर्तव्यं देवतार्थं प्रकल्पयेत् ॥ ७०॥

नित्यमग्निं परिचरेद् भिक्षां दद्याच्च [3]भिक्षितः ।
दन्तकाष्ठे च सन्ध्यायां मलोत्सर्गे च मौनगः ॥ ७१॥

न सन्ध्यायां स्वपेन्नित्यं स्नायाच्छुद्धस्सदा भवेत् ।
प्रातःपितरमुत्थाय पूर्वमेवाभिवादयेत् ॥ ७२॥

आचार्यमथ विप्रांश्च तथाऽऽयुर्विन्दते महत् ॥ ७३

1. ख—मावृत्य 2. अ—अर्धत्रयं नास्ति
3. क-ख—भक्तितः; ख—शक्तितः

वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि च वर्जयेत् ॥ ७४

उदङ्मुखश्च सततं शौचं कुर्यात् समाहितः ॥ ७४॥

अकृत्वा देवतापूजां नान्यं गच्छेत् कथञ्चन ।
अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम् ॥ ७५॥

अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ।
न चाज्ञातां स्त्रियं गच्छेद् गर्भिणीं वा कदाचन ॥ ७६॥

दारसङ्ग्रहणात् पूर्वं नाचरेन्मैथुनं बुधः ।
अन्यथा त्ववकीर्णस्स्यात् प्रायश्चित्तं समाचरेत् ॥ ७७॥

नोदीक्षेत् परदारांश्च रहस्येकासनो भवेत् ।
इन्द्रियाणि सदा यच्छेत् स्वप्ने शुद्धमना भवेत् ॥ ७८॥

उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा नरः ।
प्राक्शिरास्तु स्वपेद्विद्वांस् तथा वै दक्षिणाशिराः ॥ ७९॥

न भग्ने वा न शीर्णे वा शयने प्रस्वपीत ह ।
तिर्यङ्न च शयेन्नित्यं नान्तर्धानेन संयुतः॥ ८०॥

न निशायां पुनस्स्नयाद् आपद्यग्निद्विजान्तिके ॥ ८१

रक्तमाल्यं न धार्यं च शुक्लं धार्यं तु पण्डितैः ।
वर्जयित्वा तु कमलं तथा कुवलयं विभो ॥ ८२

रक्तं शिरसि धार्यं तु तथा नाग्नेयमित्यपि ।
काञ्चनी चाऽपि माला या न सा दुष्यति कर्हिचित् ॥ ८३

स्नाने निर्माल्यकं वर्जेत् स्नात्वा [1]नाङ्गानि मार्जयेत् ।
न चानुलिम्पेदस्नात्वा वासश्चापि न निर्धुनेत् ॥ ८४

आर्द्र एव तु वासांसि नित्यं सेवेत मानवः ।
स्रजश्च नापकर्षेत न बहिर्धारयेत च ॥ ८५

स्नातस्तु वर्णकं नित्यम् [2]आर्द्रं दद्याद्विशां पते ॥ ८५॥

[3]विपर्ययं न कुर्वीत वाससो बुद्धिमान् नरः ।
तथा नान्यधृतं ग्राह्यं न चातिविकृतं तथा ॥ ८६॥

अन्यदेव भवेद्वासश् शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानाम् अर्चायामन्यदेव तु ॥ ८७॥

प्रियङ्गुचन्दनाभ्यां च लिम्पेत स्थगरेण च ।
पृथगेवानुलिम्पेत केसरेण च बुद्धिमान् ॥ ८८॥

उपवासं च कुर्वीत स्नातश्शुचिरलङ्कृतः ।
नोपवासं वृथा कुर्याद् धनं नापहरेदिह ॥ ८९॥

नावलीढमवज्ञातम् आघ्रातं भक्षयेदपि ।
तथा नोद्धृतसाराणि प्रेक्षतामप्रदाय च ॥ ९०॥

1. क-घ—चाङ्गानि 2. क—मालां
3. क—अर्धपञ्चकं नास्ति

[1]नासन्निविष्टो मेधावी नाशुचिर्न च सत्सु च ।
प्रतिषिद्धं न धर्मेषु भक्ष्यं भुञ्जीत [2]पर्वतः ॥ ११॥

पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुम्बरं न खादेच्च [3]भव्यार्थी पुरुषो नृप ॥ १२॥

आजं गव्यं च यन्मांसं मायूरं चैव वर्जयेत् ।
वर्जयेच्छुष्कमांसानि तथा पर्युषितं च यत् ॥ १३॥

न पाणौ लवणं विद्वान् प्राश्नीयान्न च रात्रिषु ।
दधिसक्तु न दोषायां पिबेन्मधु च नित्यशः ॥ १४॥

बालेन न तु भुञ्जीत द्विपदन्नं च सर्वशः ।
सायं प्रातस्तु भुञ्जीत न तु भूमौ कदाचन ॥ १५॥

वाग्यतो नैकवस्त्रश्च मासंविष्टः कदाचन ।
भूमौ सदैव नाश्नीयान्नाशौचे न च शब्दवत् ॥ १६॥

तोयपूर्वं प्रदायान्नम् अतिथिभ्यो विशां पते ।
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥ १७॥

समानमेकपङ्क्त्यां तु भुज्यमानं नरेश्वर ।
विषं हालहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ॥ १८॥

पानीयं पायसं सर्पिः दधि सक्तुमधून्यपि ।

---

1. ब—अर्धद्वयं नास्ति    2. क-ब—पृष्ठतः

3. ख—भावार्थी;    ब—पापार्थी

नरस्य शेषमेतेषां न प्रदेयं तु कस्यचित् ॥ ९९॥

भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ।
अविगम्योदपानं तु न कर्तव्यं भवार्थिना ॥ १००॥

आचम्य चैकहस्तेन परिस्राव्य तथोदकम् ।
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत् ॥ १०१॥

पाणिं मूर्ध्नि समानाय्य स्पृष्ट्वा चाग्निं समाहितः ।
ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः ॥ १०२॥

अद्भिः प्राणान् समालभ्य नाभिं पाणितलेन च ।
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ॥ १०३॥

अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्थं प्रचक्षते ।
कनिष्ठिकायाः पश्चात्तु दैवतीर्थमिहोच्यते ॥ १०४॥

अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत ।
तेन पित्र्याणि कुर्वीत स्पृष्ट्वाऽऽपो न्यायतस्तथा ॥ १०५॥

परापवादं न ब्रूयान्नाप्रियं च कदाचन ।
न मन्युः कश्चिदुत्पाद्यः पुरुषेण भवार्थिना ॥ १०६॥

पतितैश्च कथां नेच्छेद् दर्शनं चापि वर्जयेत् ।
संसर्गं च न गच्छेत तथाऽऽयुर्विन्दते महत् ॥ १०७॥

न दिवा मैथुनं गच्छेन्न कन्यां न च वर्धकीम् ।

न चास्नातां स्त्रियं गच्छेत् तथाऽऽयुर्विन्दते महत् ॥ १०८॥
स्वे स्वे तीर्थे तथाऽऽचम्य काल्ये समुपकल्पिते ।
त्रिः पीत्वा द्विः प्रमृज्यापः कृतशौचो भवेन्नरः ॥ १०९॥
इन्द्रियाणि सकृत् स्पृश्य त्रिरभ्युक्ष्य च मानवः ।
कुर्वीत पितृदैवं च वेददृष्टेन कर्मणा ॥ ११०॥
ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव ।
प्रवृत्तं चाहितं चोक्त्वा बहुभोजनवत्तदा ॥ १११॥
सर्वशौचेन ब्राह्मेण तीर्थेन समुपस्पृशेत् ।
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् ॥ ११२॥
निष्ठीवने मैथुने च क्षुते कक्ष्या[1]विमोचने ।
उदक्यादर्शने तद्वन्नस्याचमनं स्मृतम् ॥ ११३॥
स्पृशेत् कर्णं सप्रणवं सूर्यमीक्षेत् सदा तदा ॥ ११४
वृद्धो ज्ञातिस्सखा मित्रम् अनाथा च स्वसा गुरुः ।
कुलीनः पण्डित इति रक्ष्या निस्स्वास्स्वशक्तितः ॥ ११५
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च ॥ ११५॥
गृहे पारावता धार्याश् शुकाश्च सहशारिकाः ।
देवता प्रतिमाऽऽदर्शाश् चन्दनाः पुष्पवल्लिकाः ॥ ११६॥
शुद्धं जलं सुवर्णं च रजतं गृहमङ्गलम् ॥ ११७

1. क-व—वियोजने

गृहेषु च तथा पापा निविष्टास्तैलपायिकाः ।
[1]उपदीकाश्च गृध्राश्च कपोता भ्रमरास्तथा ॥ ११८
निविशेयुर्यदा तत्र शान्तिहोमं समाचरेत् ॥ ११८॥
अमङ्गल्यस्सतां शापस् तथाऽऽक्रोशो महात्मनाम् ।
महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित् ॥ ११९॥
[2]अगम्याश्च न गच्छेत राजपत्नीस्सखीस्तथा ॥ १२०
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर ।
बन्धूनां ब्राह्मणानां च तथा नागरिकस्य च ॥ १२१
सम्बन्धिनां च राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥ १२१॥
[3]ब्राह्मणस्थपतिभ्यां च निर्मितं यन्निवेशनम् ।
समावसेत् सदा प्राज्ञो भवार्थी मनुजेश्वर ॥ १२२॥
सन्ध्यायां न स्वपेद्राजन् विद्यां च न समाचरेत् ।
न भुञ्जीत च मेधावी तथाऽऽयुर्विन्दते महत् ॥ १२३॥
नक्तं न कुर्यात् पित्र्याणि नक्तं चैव प्रसाधनम् ।
पानीयस्य क्रियां नक्तं न कुर्याद् [4]भूतिमिच्छता ॥ १२४॥
वर्जनीयाश्च ते नित्यं सक्तवो निशि भारत ।
शेषाणि चावदातानि पानीयं चैव भोजने ॥ १२५॥

1. ख—इदमर्धं नास्ति 2. क-ख—अर्धद्वयं नास्ति
3. क-ख—अर्धचतुष्टयं नास्ति 4. ख—गति

सौहित्यं न च कर्तव्यं रात्रौ नैव समाचरेत् ।
[1]न भुक्त्वा मैथुनं गच्छेन्न धावेन्नातिहासकम् ॥ १२६॥

[2]द्विजोच्छेदं न कर्तव्यं भुक्त्वा [3]सह समाचरेत् ॥ १२७

महाकुलप्रसूतां च [4]समस्तैर्लक्षणैर्युताम् ।
वयसाऽवरां सुनक्षत्रां कन्यामुद्वोढुमर्हति ॥ १२८

अपत्यमुत्पाद्य ततः प्रतिष्ठितकुलस्तथा ।
पुत्राः प्रदेया [5]ज्ञानेषु कुलधर्मेषु भारत ॥ १२९

कन्याश्चोत्पाद्य दातव्याः कुलपुत्राय धीमते ।
पुत्रा निवेश्यास्स्वकुले भृत्या लभ्याश्च भारत ॥ १३०

शिरस्स्नातोऽथ कुर्वीत दैवं पित्र्यमथापि च ॥ १३०॥

तैलाभ्यञ्जनमष्टम्यां चतुर्दश्यां च पर्वसु ।
नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः ॥ १३१॥

न प्रोष्ठपदयोः कार्यं तथाऽऽग्नेये च भारत ॥ १३२

दारुणेषु च सर्वेषु प्रत्यहं च विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् ॥ १३३

---

1. क—इदमर्धद्वयं नास्ति; ख—नाभुक्ता + श्रधावेन्नाति
2. ख—द्विजाच्छेदं न कुर्वीत भुक्ता द्रोहः समाचरेत्। [पाठान्तरम्]
3. क-घ—न च
4. क-घ—प्रशस्तै
5. ख—जातेषु; घ—ज्ञातेषु

प्राङ्मुखश्श्मश्रुकर्माणि कारयेत समाहितः ।
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥ १३४

[1]सामुद्रेणाम्भसा स्नानं क्षौरं श्राद्धेषु भोजनम् ।
अन्तर्वत्नीपतिः कुर्वन्न पुत्रफलमश्नुते ॥ १३५

सतां गुरूणां वृद्धानां कुलस्त्रीणां विशेषतः ।
परिवादं च न ब्रूयात् परेषामात्मनस्सदा ॥ १३६

परिवादो न धर्माय प्रोच्यते भरतर्षभ ॥ १३६॥

वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम ।
[2]सामर्षां व्यङ्गिकां चैव मातुस्स्वकुलजां तथा ॥ १३७॥

वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम् ।
तथातिकृष्णवर्णां च वर्णोत्कृष्टां च वर्जयेत् ॥ १३८॥

[3]अयोनिं च वियोनिं च न गच्छेत विचक्षणः ।
पिङ्गलां [4]कुष्ठिकां नारीं न तामुद्वोढुमर्हति ॥ १३९॥

[5]अपस्मारकुले जातां निहीनां चापि वर्जयेत् ।
श्वित्र्याणां च कुले जातां त्रयाणां मनुजेश्वर ॥ १४०॥

[6]लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ।

---

1. क-घ—अर्धत्रयं नास्ति
2. अ—समार्षां
3. ख—अर्धत्रयं नास्ति
4. क-घ—कुत्सिनीं
5. अ—अर्धद्वयं नास्ति
6. अ—अर्धद्वयं नास्ति

मनोज्ञा दर्शनीया च स तां वोढुमर्हति ॥ १४१॥
महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ।
अवरा [1]पतिना चैव न ग्राह्या भूतिमिच्छता ॥ १४२॥
अग्नीनुत्पाद्य यत्नेन क्रियास्सुविहिताश्च याः ।
वेदेषु ब्राह्मणैः प्रोक्तास् ताश्च सर्वाश्च सङ्ग्रहेत् ॥ १४३॥
न चेर्ष्या स्त्रीषु कर्तव्या दारा रक्ष्याश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥ १४४॥
[2]अनायुष्यो दिवा स्वप्नस् तथाऽभ्युदितशायिता ।
प्रातर्निशायां च तथा ये चोच्छिष्टा भवन्ति च ॥ १४५॥
पारदार्यमनायुष्यं अपि चोच्छिष्टता तथा ।
यत्नतो नैव कर्तव्यम् अत्याशश्चैव भारत ॥ १४६॥
सन्ध्यां न भुञ्ज्यान्न स्नायान्न पुरीषं समुत्सृजेत् ।
प्रयतस्तु भवेत्तासु न किञ्चित् समुदाचरेत् ॥ १४७॥
ब्राह्मणान् पूजयेद्गच्छेत् तथा स्नात्वा नराधिप ।
देवांश्च प्रणमेत् स्नात्वा गुरूंश्चाप्यभिवादयेत् ॥ १४८॥
आमन्त्रितो न गच्छेत यज्ञं गच्छेत्तु दर्शकः ।
आमन्त्रितस्यानायुष्यं गमनं तत्र भारत ॥ १४९॥
न चैकेन पथि व्राज्यं न चैकेन पथा निशि ।

1. ख—पतिता　　2. ख—अर्धद्वयं नास्ति

[1-2]नानापदि परस्यान्नम् अनिमन्त्रितमाहरेत् ॥ १५०॥

एकोद्दिष्टं न भुञ्जीत प्रथमं तु विशेषतः ।
सपिण्डीकरणं वर्ज्यं सविधानं च मासिकम् ॥ १५१॥

अनागतायां सन्ध्यायां पश्चिमायां गृहे वसेत् ॥ १५२

मातुः पितुश्च पुत्राणां कार्यमेवानुशासनम् ।
हितं चाप्यहितं चापि न विचार्यं नरेश्वर ॥ १५३

क्षत्रियस्तु विशेषेण धनुर्वेदं समभ्यसेत् ।
धनुर्वेदे च वेदे च [3]यत्नः कार्यो नरेश्वर ॥ १५४

हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह ।
यत्नवान्भव राजेन्द्र यत्नवान्सुखमेधते ॥ १५५

अप्रधृष्यश्च शत्रूणां भृत्यानां स्वजनस्य च ।
प्रजापालनयुक्तश्च नारतिं लभते क्वचित् ॥ १५६

[4]युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ।
गान्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ॥ १५७

पुराणमितिहासञ्च तथाऽऽख्यानानि यानि च ।
[5]महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ १५८

---

1. क-घ—न पापान् प्रणमेत् स्नात्वा गुरूंश्चाप्यभिवादयेत् ।
[ अधिकः पाठः ]

2. क-घ—न चादद्यात्
3. क-घ—गुरुः का
4. क-घ—अर्थ
5. क-घ—धर्मात्मनां

[1]मान्यानां माननं कुर्यान्निन्द्यानां निन्दनं तथा ।
गोब्राह्मणार्थे युध्येत प्राणानपि परित्यजेत् ॥ १५९

न स्त्रीषु सज्जेद्दृष्टव्यं शक्त्या दानरुचिर्भवेत् ।
न ब्राह्मणान् परिभवेत् कार्पण्यं ब्राह्मणैर्वृतम् ॥ १६०

पतितान् नाभिभाषेत नाह्वयेत रजस्वलाम् ॥ १६०॥

पत्नीं रजस्वलां चैव नाभिगच्छेन्न चाह्वयेत् ।
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥ १६१॥

पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान् भवेत् ।
आषोडशादृतुर्मुख्यः पुत्रजन्मनि शब्दितः ॥ १६२॥

एतेन विधिना पत्नीम् उपगच्छेत पण्डितः ।
ज्ञातिसम्बन्धिमित्राणि पूजनीयानि नित्यशः ॥ १६३॥

यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ।
अत ऊर्ध्वमरण्यं च सेवितव्यं हि नित्यशः ॥ १६४॥

एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ।
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर ॥ १६५॥

आचारो भूतिजनन आचारः कीर्तिवर्धनः ।
आचाराद्वर्धते ह्यायुर् आचारो हन्त्यलक्षणम् ॥ १६६॥

आगमानां हि सर्वेषाम् आचारश्श्रेष्ठ उच्यते ।

---

1. क-ख—अर्धपञ्चकं नास्ति

आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥ १६७॥

एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्पा सर्ववर्णे ब्रह्मणा समुदाहृता ॥ १६८॥

[1]य इमं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
स शुभान् प्राप्नुते लोकान् सदाचारव्रतान् नृप ॥ १६९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुर्णवतितमोऽध्यायः ॥ ९४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुर्णवतितमोऽध्यायः ॥ ९४ ॥
[ अस्मिन्नध्याये १६९॥ श्लोकाः ]

---

## ॥ पञ्चनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ज्येष्ठकनिष्ठयोः परस्परस्मिन्वर्तनप्रकारादिकथनम् ॥

---

युधिष्ठिरः—

कथं ज्येष्ठः कनिष्ठेषु वर्तते भरतर्षभ ।
कनिष्ठाश्च यथा ज्येष्ठे वर्तन्ते तद्ब्रवीहि मे ॥ १

भीष्मः—

ज्येष्ठवत्तात वर्तस्व ज्येष्ठोऽसि हि तथा भवान् ।

1. अ-क-घ—अर्धद्वयं नास्ति

गुरोर्गरीयसी वृत्तिर्या चेच्छिष्यस्य भारत ॥ २

न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्तितुम् ।
गुरौ हि सदृशी वृत्तिर् यथा शिष्यस्य भारत ॥ ३

अन्धस्स्यादन्धवेलायां जडस्स्यादपि वा बुधः ।
परिहारेण तद्ब्रूयाद् यस्तेषां स्याद्व्यतिक्रमः ॥ ४

प्रत्यक्षं भवतामेतद् भेदयेयुर्यथाऽहिताः ।
श्रियाऽभितप्तास्तद्भेदान् न भिन्नास्स्युस्समाहिताः ॥ ५

श्रियाऽभितप्ताः कौन्तेय भेदकामास्तथाऽरयः ॥ ५॥

ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
हन्ति सर्वमपि ज्येष्ठः प्रायो दुर्विनयादिह ॥ ६॥

अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसि ।
अज्येष्ठस्स्यादभागश्च नियम्यो राजभिश्च सः ॥ ७॥

निकृतीभिर्नरो लोकान् पापान् गच्छत्यसंशयम् ।
विफलं तस्य पुत्रत्वं मोघं जनयितुस्स्मृतम् ॥ ८॥

पित्रोरनर्थाय कुले जायते पापपूरुषः ।
अकीर्तिं जनयत्येव कीर्तिमन्तर्दधाति च ॥ ९॥

सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः ।
ज्येष्ठोऽपि दुर्विनीतस्तु कनिष्ठस्तु विशेषतः ॥ १०॥

नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्वीत वेतनम् ॥ ११

अनुजस्य पितुर्दायो जङ्घाश्रयफलोऽध्वगः ।
[1]स्वयमीहेत लब्धं च नाकामो दातुमर्हति ॥ १२

भ्रातॄणामविभक्तानाम् उत्थानमपि चेत् सह ।
न पुत्रभागं विषमं विभजेद्वा कथञ्चन ॥ १३

[2]तज्ज्येष्ठो नावमन्तव्यो दुष्कृतस्सुकृतोऽपि वा ।
गुरूणामपराधो हि शक्यः क्षन्तव्य एव च ॥ १४

यदि स्त्री यद्यवरजश् श्रेयः पश्येत्तदाचरेत् ।
धर्मार्थौ श्रेय इत्याहुस् तयोर्ज्ञाता विधायकः ॥ १५

समे तु ज्येष्ठतन्त्रास्स्युः किञ्चिदूनेऽपि नित्यशः ।
उपाध्यायाद् दशाचार्य आचार्यात्तु पिता दश ॥ १६

दश चैव पितुर्माता सर्वां च पृथिवीमपि ।
गौरवेणाभिभवति नास्ति मातृसमो गुरुः ॥ १७

माता गरीयसी यच्च [3]तेनैतां मन्यते गुरुम् ।
ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ॥ १८

स चैषां वृत्तिदाता स्यात् स चैतान् परिपालयेत् ।
कनिष्ठास्तं नमस्येरन् सर्वे छन्दानुवर्तिनः ॥ १९

---

1. क-घ—अर्धत्रयं नास्ति 2. ख—न ज्येष्ठानवमन्यन्ते
3. क-घ—स्तन्यैस्तां

तमेव चोपजीवेरन् यथैव पितरं तथा ।
शरीरमेव सृजतः पिता माता च भारत ॥ २०

आचार्यशिष्टा या जातिस् सा दिव्या साऽजराऽमरा ।
ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ ॥ २१

भ्रातृभार्या च तद्वन् स्याद् यस्या बाल्ये स्तनं पिबेत् ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]

---

## ॥ षण्णवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पक्षमासोपवासफलप्रतिपादकाङ्गिरोवचनानुवादः ॥

---

युधिष्ठिरः—

सर्वेषामेव वर्णानां म्लेच्छानां च पितामह ।
उपवासे मतिरियं कारणं च न विद्महे ॥ १

ब्रह्मक्षत्रेण नियमाः कर्तव्या इति नश्श्रुतम् ।
उपवासे कथं तेषां कृतमस्ति पितामह ॥ २

नियमं चोपवासानां सर्वेषां ब्रूहि पार्थिव ।

अवाप्नोति गतिं कां च उपवासपरायणः ॥ ३

उपवासः परं पुण्यं पवित्रमपि चोत्तमम् ।
उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ॥ ४

अधर्मान्मुच्यते केन धर्ममाप्नोति वै कथम् ।
स्वर्गं पुण्यं च लभते कथं भरतसत्तम ॥ ५

उपोष्य वाऽपि किं तेन प्रयोज्यं स्यान्नराधिप ।
धर्मेण च सुखानर्थाँल्लभेद्येन ब्रवीहि मे ॥ ६

वैशम्पायनः—

एवं ब्रुवाणं कौन्तेयं धर्मज्ञं धर्मतत्त्ववित् ।
धर्मपुत्रमिदं वाक्यं भीष्मश्शान्तनवोऽब्रवीत् ॥ ७

भीष्मः—

इदं खलु महाराज श्रुतमासीत् पुरातनम् ।
उपवासविधौ श्रेष्ठा ये गुणा भरतर्षभ ॥ ८

प्राजापत्यमाङ्गिरसं पृष्टवानस्मि भारत ।
यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनम् ॥ ९

प्रश्नमेनं पुरा पृष्टो भगवानग्निसम्भवः ।
उपवासविधिं पुण्यम् [1]आचष्ट भरतर्षभ ॥ १०

---

1. क-घ—उवाच भर

अङ्गिराः—

ब्रह्मक्षत्रे त्रिरात्रं तु विहितं कुरुनन्दन ।
[1]द्विस्त्रिरात्रं तथा तत्र निर्दिष्टं नान्यवर्णगम् ॥ ११

वैश्याश्शूद्राश्च ये मोहाद् उपवासं प्रकुर्वते ।
त्रिरात्रं वा द्विरात्रं वा तयोर्व्युष्टिर्न विद्यते ॥ १२

चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते ।
त्रिरात्रं न तु धर्मज्ञैर् विहितं ब्रह्मवादिभिः ॥ १३

पञ्चम्यां चैव षष्ठ्यां च पौर्णमास्यां च भारत ।
उपोष्य एकभक्तेन नियतात्मा जितेन्द्रियः ॥ १४

क्षमावान् रूपसम्पन्नस् सुरभिश्चैव जायते ॥ १४॥

नानपत्यो भवेद्राजन् न दरिद्रः कदाचन ॥ १५

यजिष्णुः पञ्चमीं षष्ठीं क्षिपेद्यो भोजयेद्द्विजान् ।
अष्टमीमपि कौन्तेय [2]कृष्णपक्षचतुर्दशीम् ॥ १६

उपोष्य व्याधिरहितो वीर्यवानभिजायते ॥ १६॥

मार्गशीर्षं तु वै मासम् एकभक्तेन यः क्षिपेत् ।
[3]भोजयेच्च द्विजाञ् [4]शक्त्या स मुच्येद्व्याधिकिल्बिषैः ॥ १७॥

सर्वकल्याणसम्पूर्णस् सर्वौषधिसमन्वितः ।

1. क-ख—द्विरात्रं च    2. क—शुक्लपक्ष
3. अ—अर्धचतुष्टयं नास्ति    4. ख—भक्त्या

कृषिभागी बहुधनो बहु[1]धान्यश्च जायते ॥ १८॥
[2]पौषमासं तु कौन्तेय भक्तेनैकेन यः क्षिपेत् ।
[3]सुभगो दर्शनीयश्च यशोभागी च जायते ॥ १९॥
पितृभक्तो माघमासं यः क्षिपेदेकभोजनः ।
श्रीमत्कुले ज्ञातिमध्ये [4]सुभगत्वं प्रपद्यते ॥ २०॥
भगदैवं तु यो मासम् एकभक्तेन च क्षिपेत् ।
स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः ॥ २१॥
चैत्रं तु नियतो मासम् एकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते ॥ २२॥
निस्तरेदेकभक्तेन वैशाखं वै जितेन्द्रियः ।
[5]नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥ २३॥
ज्येष्ठामूलं तु वै मासम् एकभक्तेन यः क्षिपेत् ।
ऐश्वर्यमतुलं चैव पुमान् स्त्री वाऽभिपद्यते ॥ २४॥
आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते ॥ २५॥
श्रावणं मासमेकेन भक्तेन तु नरः क्षिपेत् ।

---

1. ख-घ—पुत्रश्च
2. ख-घ—पुष्य
3. ख—अर्धचतुष्टयं नास्ति
4. क-घ—सुमहत्त्वं
5 क-ख—अर्धसप्तकं नास्ति; ख—नरो वाऽपि दिवारात्रं

रूपद्रविणसम्पन्नस् सुखी भवति नित्यशः ॥ २६॥

बहुभार्यो बहुधनो बहुपुत्रश्च जायते ॥ २७

प्रौष्ठपादं तु यो मासम् [1]एकाहारो जितेन्द्रियः ।
धनाढ्यं स्फीतमतुलम् ऐश्वर्यं प्रतिपद्यते ॥ २८

तथैवाश्वयुजं मासम् एकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते ॥ २९

कार्तिकं तु नरो मासं यः कुर्यादेकभोजनम् ।
शूरश्च बहुभार्यश्च कीर्तिमांश्चैव जायते ॥ ३०

इति मासे नरव्यात्र क्षपास्ते परिकीर्तिताः ।
[2]तिथीनां नियमा ये तु शृणु तानपि पार्थिव ॥ ३१

पक्षे पक्षे गते यस्तु भक्तमश्नाति भारत ।
गवाढ्यो बहुपुत्रस्तु दीर्घायुर्वै स जायते ॥ ३२

मासि मासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश ।
गणाधिपत्यं प्राप्नोति निस्सपत्नमनाविलम् ॥ ३३

एते तु नियमास्सर्वे कर्तव्याश्शरदो दश ।
द्वे चान्ये भरतश्रेष्ठ प्रवृत्तिरनुकीर्तिता ॥ ३४

यस्तु प्रातस्तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ॥ ३५

---

1. क-ब—एकभक्तो  2. क-ब—कथिता

षड्भिर्वर्षैस्तु नृपते सिध्यते नात्र संशयः ॥ ३५॥
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३६

अधिवासं चाप्सरसां नृत्यगीतविनादितम् ।
तप्तकाञ्चनवर्णाभं विमानमधिरोहति ॥ ३७

पूर्णं वर्षसहस्रं तु ब्रह्मलोके महीयते ।
तत्क्षयादिह वाऽऽगत्य माहात्म्यं प्रतिपद्यते ॥ ३८

[1]यस्तु संवत्सरं पूर्णम् एकाहारो भवेन्नरः ।
अतिरात्रस्य यज्ञस्य स फलं प्राप्नुयान्नरः ॥ ३९

त्रिंशद्वर्षसहस्राणि स्वर्गे च स महीयते ।
[2]तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ ४०

[3]यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।
अहिंसानिरतो नित्यं सत्यवाङ्नियतेन्द्रियः ॥ ४१

वाजपेयस्य यज्ञस्य फलं वै समुपाश्नुते ।
त्रिंशद्वर्षसहस्राणि स्वर्गे चैव महीयते ॥ ४२

षष्ठे काले तु कौन्तेय नरस्संवत्सरं क्षिपेत् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ४३

---

1. अ—अर्धत्रयं नास्ति
2. अ-क-घ—नास्तीदमर्धम्
3. क-घ-अर्धचतुष्टयं नास्ति

[1]चक्रवाकप्रयुक्तेन विमानेन स गच्छति ।
चत्वारिंशत् सहस्राणि वर्षाणि दिवि मोदते ॥ ४४

पक्षे पक्षे गतेराजन् योऽश्नीयाद्वर्षमेव तु ।
षण्मासानशनं तस्य भगवानङ्गिरा ब्रवीन् ॥ ४५

षष्टिं वर्षसहस्राणि दिवमावसते च सः ॥ ४५॥

वीणानां वल्लकीनां च वेणूनां च विशां पते ।
सुघोषैर्मधुरैश्शब्दैस् सुप्तस्स प्रतिबोध्यते ॥ ४६॥

संवत्सरमिहैकं तु मासि मासि क्षिपेत यः ।
फलं विश्वजितस्तात प्राप्नोति स नरो नृप ॥ ४७॥

सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति ।
सप्ततिं च सहस्राणि वर्षाणां दिवि मोदते ॥ ४८॥

मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ।
विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः ॥ ४९॥

अनार्तो व्याधिरहितो गच्छेदनशनं तु यः ।
पदे पदे यज्ञफलं स प्राप्नोति न संशयः ॥ ५०॥

त्रिदिवं हंसयुक्तेन विमानेन स गच्छति ।
शतं चाप्सरसः कन्या रमयन्त्यपि तं नरम् ॥ ५१॥

---

1. ख—हंसयुक्तेन यानेन स्वर्गलोकं स गच्छति ।
पञ्चाशतं सहस्राणां वर्षाणां दिवि मोदते ॥ [ पाठान्तरम् ]

आर्तो वा व्याधितो वाऽपि गच्छेदनशनं तु यः ।
शतं वर्षसहस्राणां मोदते दिवि स प्रभो ॥ ५२॥

काञ्चीनूपुरशब्देन शयितश्च प्रबुध्यते ॥ ५३

सहस्रहंससंयुक्ते विमाने सोमवर्चसि ।
स गत्वा स्त्रीशताकीर्णो रमते भरतर्षभ ॥ ५४

क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षाररोपणम् ।
व्याधितस्यौषधं पथ्यं क्रुद्धस्यैव प्रसादनम् ॥ ५५

दुःखितस्यार्तपूर्वस्य द्रव्याणां प्रतिपादनम् ।
न चैतद्रोचते तेषां ये धनै[1]स्सुखमेधिनः ॥ ५६

अतस्सत्कारसंयुक्ते विमाने हेमसन्निभे ।
रमते स्त्रीशताकीर्णे पुरुषोऽलङ्कृतश्शुभः ॥ ५७

स्वस्थस्सफलसङ्कल्पस् सुखी विगतकल्मषः ।
[2]अग्नौ च देहमुत्सृज्य फलं प्राप्नोति मानवः ॥ ५८

बालसूर्यप्रतीकाशे विमाने सोमवर्चसि ।
वैदूर्यमुक्तोपचिते वीणामुरवनादिते ॥ ५९

पताकादीपिकाकीर्णे दिव्यघण्टानिनादिते ।
[3]स्त्रीसहस्रानुचरिते स नरस्सुखमेधते ॥ ६०

1. क-ख—गृहमेधिनः

2. ख—अनिष्टदेह; घ—नानन्न 3. घ—नास्तीदमधर्मम्

यावन्ति रोमकूपाणि तस्य गात्रेषु पाण्डव ।
तावन्त्येव सहस्राणि [1]वर्षाणि दिवि मोदते ॥ ६१

नास्ति वेदात् परं शास्त्रं नास्ति मातृसमो गुरुः ।
न धर्मात् परमो लाभो न तपोऽनशनात् परम् ॥ ६२

ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च ।
उपवासैस्तथा तुल्यं तपःकर्म न विद्यते ॥ ६३

उपोष्य विधिवद्देवास् त्रिदिवं प्रतिपेदिरे ।
ऋषयश्च परां सिद्धिम् उपवासैरवाप्नुवन् ॥ ६४

दिव्यवर्षसहस्राणि विश्वामित्रेण धीमता ।
क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतम् ॥ ६५

च्यवनो जमदग्निश्च वसिष्ठो गौतमो भृगुः ।
एते सर्वे दिवं प्राप्ताः क्षमावन्तो महर्षयः ॥ ६६

भीष्मः—

इदमङ्गिरसा पूर्वं महर्षिभ्यः प्रदर्शितम् ।
यः प्रदर्शयते नित्यं न स दुःखमवाप्नुते ॥ ६७

इमं तु कौन्तेय यथाक्रमं विधिं
प्रवर्तितं ह्यङ्गिरसा महर्षिणा ।

---

1. क-ब—स नरो

पठेत वै यश्शृणुयाच्च नित्यदा
न विद्यते तस्य नरस्य किल्बिषम् ॥ ६८

विमुच्यते वाऽपि हि सर्वसङ्करैर्
न चाप्यधर्मैरभिभूयते मनः ।
वियोनिजानां च विजानते[1] हतं
ध्रुवां च कीर्तिं लभते नरोत्तमः ॥ ६९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥
[ अस्मिन्नध्याये ६९ श्लोकाः ]

---

## ॥ सप्तनवतितमोऽध्यायः ॥

युधिष्ठिरेण भीष्मं प्रति दरिद्राणां यज्ञस्य बहुद्रव्यसाध्यत्वेन दुष्करतया तत्फलप्राप्त्यै तत्प्रतिनिधिकथनप्रार्थना ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति एकैकदिनवृद्ध्या मासावध्युपवासस्य यज्ञप्रतिनिधित्वकथनम् ॥ २ ॥

---

युधिष्ठिरः—

पितामहेन विधिवद् यज्ञाः प्रोक्ता महात्मना ।
गुणाश्चैषां यथातत्त्वं प्रेत्य चेह च सर्वशः ॥ १

---

1. ख—श्रुतं ; घ—कृतं

न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह ।
बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥ २

पार्थिवै राजपुत्रैर्वा शक्याः प्राप्तुं पितामह ।
नार्थन्यूनैरवगुणैर् एकात्मभिरसंहतैः ॥ ३

यो दरिद्रैरपि विधिश् शक्यः प्राप्तुं सदा भवेत् ।
तुल्यो यज्ञफलैरेतैस् तन्मे ब्रूहि पितामह ॥ ४

भीष्मः—

इदमङ्गिरसा प्रोक्तम् उपवासफलात्मकम् ।
विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर ॥ ५

यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो राजञ् जुह्वानो जातवेदसम् ॥ ६

[1-2]षड्भिरेव स वर्षैस्तु सिध्यते नात्र संशयः ॥ ६॥

तप्तकाञ्चनवर्णं च विमानं लभते नरः ॥ ७

देवस्त्रीगणसंवासे नृत्तगीतनिनादिते ।
प्राजापत्ये वसेत् सद्मन्यग्निवर्णनिभे शुभे ॥ ८

---

1. अ—अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ।
मयूरहंससंयुक्तं विमानं लभते नरः ॥
सप्तर्षीणां तदा लोके सोऽप्सरोभिर्वसेत् सह ।
[ अधिकः पाठः ]

2. अ—अर्धषट्कं नास्ति

त्रीणि वर्षाणि यः प्राशेत् सततं त्वेकभोजनम् ।
धर्मपत्नीरतो नित्यम् अग्निष्टोमफलं लभेत् ॥ ९

[1]तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
राजन् द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ १०
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १०॥

मयूरहंससंयुक्तं विमानं लभते नरः ।
सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत् सह ॥ ११॥

यज्ञं बहुसुवर्णं यो वासवप्रियमाचरेत् ।
सत्यवान् दानशीलश्च ब्रह्मण्यश्चानसूयकः ॥ १२॥
क्षान्तो दान्तो जितक्रोधस् स गच्छेत् परमां गतिम् ॥ १३

पाण्डुराभ्रप्रतीकाशे विमाने हंसलक्षणे ।
द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत् सदा ॥ १४
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः ॥ १४॥

दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ १५॥

[2]अलुब्धस्संविभागी च ब्रह्मण्यश्चापि वाग्यतः ।
अनसूयुरवैक्लव्यो द्वादशाहफलं लभेत् ॥ १६॥

---

1. अ-क-ब—अर्धपञ्चकं नास्ति
2. अ—इतश्चतुस्त्रिंशदर्धानि न सन्ति

जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम् ।
सूर्यभासा समाभासम् आरोहेत् [1]पाण्डुरं गृहम् ॥ १७॥

आवर्तनानि चत्वारि पद्मानि निवसेन्नरः ।
शराग्निपरिमाणं च तत्रासौ लभते सुखम् ॥ १८॥

दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ १९॥

सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः ।
गवामयनयज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ २०॥

अग्निज्वालासमाभासं हंसबर्हिणसेवितम् ।
शातकुम्भसुनिर्यूहं साधयेद्यानमुत्तमम् ॥ २१॥

तासामप्सरसामङ्के प्रसुप्तः प्रतिबुध्यते ।
नूपुराणां निनादेन मेखलानां च निस्वनैः ॥ २२॥

तथा कोटिसहस्राणां दशकोटिशतानि च ।
पद्मान्यष्टादश तथा प्रयुते द्वे तथैव च ॥ २३॥

प्रयुतानां च पञ्चाशल्लक्षं पञ्चशतस्य च ।
लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते ॥ २४॥

दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ २५॥

1. ख—मण्डपं;　घ—मण्डलं

सरस्वतीं गोपयानो ब्रह्मचर्यं समाचरन् ।
सुमनोवर्णकं चैव मधु मांसं च वर्जयन् ॥ २६॥

पुरुषो मरुतां लोकम् इन्द्रलोकं च गच्छति ॥ २७
तत्र तत्र हि सिद्धार्थो देवकन्याभिरुह्यते ॥ २७॥

फलं बहुसुवर्णस्य यज्ञस्य च समश्नुते ।
सङ्ख्यामतिगुणां चापि तेषु लोकेषु मोदते ॥ २८॥

यस्तु संवत्सरं क्षान्तो भुङ्क्तेऽहन्यष्टमे नरः ।
देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ॥ २९॥
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ ३०
पद्मवर्णनिभं चैव विमानमधिरोहति ॥ ३०॥

मृष्टाः कनकगौर्यश्च नार्यश्श्यामास्तथा पराः ।
वरा रूपविलासिन्यो लभते नात्र संशयः ॥ ३१॥

यस्तु संवत्सरं भुङ्क्ते अष्टाहे वै गतागते ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ३२॥

अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३३
पुण्डरीकप्रकाशं तु विमानं लभते नरः ॥ ३३॥

दीप्तसूर्याग्नितेजोभिर् दिव्यमालाभिरेव च ।
नीयते रुद्रकन्याभिस् सोऽन्तरिक्षं सनातनम् ॥ ३४॥

अष्टादशसहस्राणि वर्षाणां कल्पमेव च ।

कोटीशतसहस्रं च तेपु सर्वेपु मोदते ॥ ३५॥

यस्तु संवत्सरं भुङ्क्ते [1]दशाहे वै गते गते ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ३६॥

ब्रह्मकन्यानिवेशे च सर्वभूतमनोहरे ।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥ ३७॥

रूपवत्यश्च ताः कन्या रमयन्ति सदा नरम् ॥ ३८

नीलोत्पलविनिर्भिन्नै रक्तोत्पलसुगन्धिभिः ।
विमानं मण्डलावर्तम् आवर्त[2]नशतैर्वृतम् ॥ ३९

सागरोर्मिप्रतीकाशं साधयेद्यानमुत्तमम् ॥ ३९॥

विचित्रमणिमालाभिर् नादितं शङ्ख[3]पुष्पकैः ।
स्फाटिकैर्वज्रसारैस्तु स्तम्भैश्च कृतवेदिकम् ॥ ४०॥

आरोहति महद्यानं हंससारसवाहनम् ॥ ४१

एकादशे तु दिवसे यः प्राप्ते प्राशते भुवि ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ४२

परस्त्रियो नाभिलषेद् वाचाऽथ मनसाऽपि वा ।
अनृतं न च भाषेत मातापित्रोः कृतेऽपि च ॥ ४३

---

1. क-ख-घ—नवाहे
2. क—गहनै; ख—वृत्तमावृत्तगहनै घ—गहने बहुभिर्वृतः
3. क-घ—पुष्करैः

अभिगच्छेन्महादेवं विमानस्थं महाबलम् ।
स्वयम्प्रभं प्रपश्येत विमानं समुपस्थितम् ॥ ४४

कुमार्यः काञ्चनाभासा रूपवत्यो नयन्ति तम् ।
रुद्राणां तमधीवासं दिवि दिव्यं मनोहरम् ॥ ४५

वर्षाण्यपरिमेयानि युगान्तमपि वा वसेत् ।
कोटीशतसहस्रं च शतकोटिशतानि च ॥ ४६

रुद्रं नित्यं प्रणमते देवदानवनिर्मितम् ।
स तस्मै दर्शनं प्राप्तो दिवसे दिवसे भवेत् ॥ ४७

दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः ।
सदा द्वादश मासान् वै जुह्वानो जातवेदसम् ॥ ४८

[1-2]नियमेन समायुक्तस् सर्वमेधफलं लभेत् ।
आदित्यैर्द्वादशैस्तस्य विमानं संविधीयते ॥ ४९

मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितम् ।

---

1. अ—अर्धदशकं नास्ति

2. क-घ—वज्रमुक्ताप्रवालैश्च महार्हैं रुपशोभितम् ।
पद्मैर्महद्भिस्संयुक्तं ब्रह्मलोके प्रतिष्ठितम् ॥
नित्यमासेवते राजन् नरनारीसमावृतम् ।
ऋषिरेव महाभागस् त्वङ्गिरा मुनिरब्रवीत् ॥
यस्तु त्रयोदशाहे वै सम्प्राप्ते प्राशते हविः ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥

[ पाठान्तरम् ]

हंसभासा परिक्षिप्तं नागवीथीसमाकुलम् ॥ ५०

मयूरैश्चक्रवाकैश्च कूजद्भिरुपशोभितम् ।
अट्टैर्महद्भिस्संयुक्तं ब्रह्मलोके प्रतिष्ठितम् ॥ ५१

नित्यमावसथं राजन् नरनारीसमावृतम् ॥ ५१॥

ऋषिरेवं महाभागस् त्वङ्गिराः प्राह धर्मवित् ॥ ५२

त्रयोदशे तु दिवसे प्राप्ते यः प्राशते हविः ।
सदा द्वादश मासान् वै देवसत्रफलं लभेत् ॥ ५३

रक्तपद्मोदयं नाम विमानं साधयेन्नरः ।
जातरूपसुरक्तं च रत्नसञ्चयभूषितम् ॥ ५४

[1]देवकन्याभिराकीर्णं दिव्यभूषणभूषितम् ।
पुण्यगन्धोदयं दिव्यं वादित्रैरुपशोभितम् ॥ ५५

तत्र शङ्कुपताकं च युगान्ते कल्पमेव च ।
अयुतं च तथा पद्मं समुद्रं च तथा[2]वसेत् ॥ ५६

गीतगन्धर्वघोषैश्च भेरीपटहनिस्स्वनैः ।
[3]सदा प्रमुदितस्ताभिर् देवकन्याभिरीड्यते ॥ ५७

चतुर्दशे तु दिवसे यः पूर्णे प्राशते हविः ।

1. घ—इदमर्धं नास्ति
2. क-घ—भवेत्　ख—लभेत्
3. घ—बोधितोऽपररात्रेषु

सदा द्वादश मासान् वै महामेधफलं भवेत् ॥ ५८

अनिर्देश्यवयोरूपा देवकन्यास्त्वलङ्कृताः ।
मृष्टतप्ताङ्गदधरा विमानैरनुयान्ति तम् ॥ ५९

काञ्चीनां ध्वनिभिर्युक्तो नूपुराणां च निस्वनैः ।
रशनानां समुत्कीर्णैस् तत्र तत्र प्रबोध्यते ॥ ६०

देवकन्यानिवासे च तस्मिन् वसति मानवः ।
जाह्नवीवालुकाकीर्णे ब्रह्मलोके महीयते ॥ ६१

यस्तु पक्षे गते भुङ्क्ते [1]एकभक्तो जितेन्द्रियः ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ६२

राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
यानमारोहते नित्यं हंसबर्हिणलक्षणम् ॥ ६३

मणिमङ्गलकैश्चित्रं [2]जातरूपसमाचितम् ।
दिव्याभरणशोभाभिर् वरस्त्रीभिरलङ्कृतम् ॥ ६४

एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलम् ।
वैजयन्तीसहस्रैश्च शोभितं गीतनिस्वनैः ॥ ६५

दिव्यं दिव्यगुणोपेतं विमानमधिरोहति ।

---

1. घ—क्षान्तात्मा विजितेन्द्रियः

2. घ—जातवेदसमोजसम्

मणिमुक्ताप्रवालैश्च [1]भूषितं वैद्युतप्रभम् ॥ ६६

वसेद्युगसहस्रं च खड्गकुञ्जरवाहनः ॥ ६६॥

षोडशे दिवसे यस्तु सम्प्राप्ते प्राशते हविः ।

सदा द्वादशमासान् वै सोमयज्ञफलं लभेत् ॥ ६७॥

सोमकन्यानिवासेषु सौम्यो वसति नित्यदा ।

सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् ॥ ६८॥

सुदर्शनाभिर्नारीभिर् मधुराभिस्तथैव च ।

विचाल्यते विमानस्थः कामभोगैश्च सेव्यते ॥ ६९॥

बलं सर्वाधिकं मुख्यं महाकल्पं दशाधिकम् ।

आवर्तनानि चत्वारि सागरे यात्यसौ नरः ॥ ७०॥

दिवसे सप्तदशके यः प्राप्ते प्राशते हविः ।

सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ७१॥

स्थानं सवारुणश्चैन्द्रं रौद्रं चैवाधिगच्छति ।

मारुतं शयनं चै व ब्रह्मलोकं स गच्छति ॥ ७२॥

[2]तत्र दैवतकन्याभिर् आसनेनोपचर्यते ।

भूर्भुवस्स्वश्च देवर्षिर् विश्वरूपमवेक्षते ॥ ७३॥

तत्र देवाधिदेवस्य कुमार्यो रमयन्ति तम् ।

1. घ—महार्हैरुपशोभितम्

2. घ—इदमर्धं नास्ति

मनोज्ञरूपधारिण्यो मधुरास्समलङ्कृताः ॥ ७४॥

चन्द्रादित्यावुभौ [1]यावद् गगने चरतः प्रभो ।
तावच्चरत्यसौ वीरस् सुधामृतरसाशनः ॥ ७५॥

अष्टादशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान् वै सप्त लोकान् स गच्छति ॥ ७६॥

रथैस्सैनिकघोषैश्च पृष्ठतस्सोऽनुगम्यते ।
देवकन्याधिरूढैश्च भ्राजमानैस्स्वलङ्कृतैः ॥ ७७॥

व्याघ्रसिंहप्रयुक्तं च मेघस्वनविनादितम् ।
विमानमुत्तमं दिव्यं [2]सुसुखं ह्यधिरोहति ॥ ७८॥

तत्र कल्पसहस्रं स कान्ताभिस्सह मोदते ।
सुधारसं च भुञ्जीत ह्यमृतोपममुत्तमम् ॥ ७९॥

एकोनविंशदिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ८०॥

उत्तमं लभते स्थानम् अप्सरोगणसेवितम् ।
गन्धर्वैरुपगीतं च विमानं सूर्यवर्चसम् ॥ ८१॥

तत्रामरवरस्त्रीभिर् मोदते विगतज्वरः ।
दिव्याम्बरधरश्श्रीमान् अयुतानां शतं समाः ॥ ८२॥

---

1. ध—यावद्भूर्भुवस्स्वस्तथैव च
2. ध—सशङ्खं

पूर्णेऽथ दिवसे विंशे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासांस्तु सत्यवादी धृतव्रतः ॥ ८३॥
अमांसाशी ब्रह्मचारी सर्वभूतहिते रतः ।
स लोकान् विपुलान् दिव्यान् आदित्यानामुपाश्नुते ॥ ८४॥
गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः ।
विमानैः काञ्चनैर्दिव्यैः पृष्ठतश्चानुगम्यते ॥ ८५॥
एकविंशे च दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ८६॥
लोकमौशनसं दीप्तं शक्रलोकं च गच्छति ॥ ८७
अश्विनोर्मरुतां चैव सुखेऽभिरमते नरः ।
अनभिज्ञश्च दुःखानां विमानवरमास्थितः ॥ ८८
[1]सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत् प्रभुः ॥ ८८॥
द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ ८९॥
अहिंसानिरतो धीमान् सत्यवागनसूयकः ।
लोकान् वसूनामाप्नोति दिवाकरसमप्रभः ॥ ९०॥
कामचारी सुधाहारो विमानवरमास्थितः ।
रमते देवकन्याभिर् दिव्याभरणभूषितः ॥ ९१॥

1. अ—अर्धषट्कं नास्ति

त्रयोविंशे तु दिवसे प्राशेद्यस्त्वेकभोजनम् ।
सदा द्वादशमासान् वै मिताहारो जितेन्द्रियः ॥ ९२॥
वायोरुशनसश्चापि रुद्रलोकं स गच्छति ॥ ९३
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ।
[1]अनेकयुगपर्यन्तं विमानवरमास्थितः ॥ ९४
रमते देवकन्याभिर् दिव्याभरणभूषितः ॥ ९४॥
चतुर्विंशे तु दिवसे [2]यः कुर्यादेकभोजनम् ।
सदा द्वादशमासन् वै जुह्वानो जातवेदसम् ॥ ९५॥
आदित्यानामधीवासे मोदमानो वसेच्चिरम् ॥ ९६
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
विमाने काञ्चने दिव्ये हंसयुक्ते मनोहरे ॥ ९७
रमते देवकन्यानां सहस्रैरयुतैस्तथा ॥ ९७॥
पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासान् वै पुष्कलं यानमारुहेत् ॥ ९८॥
सिंहव्याघ्रप्रयुक्तैश्च मेघस्वनविनादितैः ।
देवकन्यासमारूढै राजतैर्विमलैश्शुभैः ॥ ९९॥
विमानमुत्तमं दिव्यम् आस्थाय सुमनोहरम् ॥ १००

1. घ—इदमर्धं नास्ति
2. क-घ—यः प्राशेदेक

तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते ।
सुधारसं चोपजीवन्नमृतोपममुत्तमम् ॥ १०१

षड्विंशे दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु नियतो नियताशनः ॥ १०२

जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम् ।
स प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः ॥ १०३

[1]सप्तानां मरुतां लोकान् वसूनां चापि सोऽश्नुते ॥ १०३॥

विमाने स्फाटिके दिव्ये सर्वरत्नैरलङ्कृते ।
गन्धर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते ॥ १०४॥

द्वेऽर्बुदानां सहस्रे तु दिव्ये दिव्येन तेजसा ॥ १०५

सप्तविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासान् वै जुह्वानो जातवेदसम् ॥ १०६

फलं प्राप्नोति विमलं देवलोके प्रपूज्यते ॥ १०६॥

अमृताशी वसंस्तत्र स वितृप्तः प्रमोदते ॥ १०७

देवर्षिचरिताँल्लोकान् राजर्षिभिरनुष्ठितान् ।
अध्यावसति पुण्यात्मा विमानवरमास्थितः ॥ १०८

स्त्रीभिर्मनोभिरामाभी रममाणो मनोरमः ।
युगकल्पसहस्राणि त्रीण्यावसति वै सुखम् ॥ १०९

---

1. अ—अर्धत्रयं नास्ति

योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु विजितात्मा जितेन्द्रियः ॥ ११०
स्वर्गान् देवर्षिचरितान् विपुलान् समुपाश्नुते ॥ ११०॥
भोगवांस्तेजसा भाति सहस्रांशुरिवामलः ॥ १११
सुकुमार्यश्च नार्यस्तं रममाणास्सुवर्चसः ।
पीनस्तनोरुजघना दिव्याभरणभूषिताः ॥ ११२
रमयन्ति मनःकान्ता विमाने सूर्यसन्निभे ।
सर्वकामगमे दिव्ये कल्पायुतशतं समाः ॥ ११३
एकोनत्रिंशदिवसे यः क्षिपेदेकभोजनम् ।
सदा द्वादशमासांस्तु सत्यव्रतपरायणः ॥ ११४
तस्य लोकाश्शुभा दिव्या देवराजर्षिपूजिताः ॥ ११४॥
विमानं चन्द्रशुभ्राभं दिव्यं समधिगच्छति ।
जातरूपं सुनिर्युक्तं सर्वरत्नविभूषितम् ॥ ११५॥
अप्सरोगणसङ्कीर्णं गन्धर्वैरभिनन्दितम् ॥ ११६
तत्र चैनं शुभा नार्यो दिव्याभरणभूषिताः ।
मनोभिरामा मधुरा रमयन्ति मदोत्कटाः ॥ ११७
भोगवांस्तेजसा भाति वैश्वानरसमप्रभः ।
दिव्यो दिव्येन वपुषा भ्राजमान इवामरः ॥ ११८

वसूनां मरुतां चैव साध्यानामश्विनोस्तथा ।
[1]रुद्राणां च तथा लोकान् ब्रह्मलोकं च गच्छति ॥ ११९

यस्तु मासे गते भुङ्क्ते एकभक्तं समाहितः ।
सदा द्वादश मासान् वै ब्रह्मलोकगतिर्भवेत् ॥ १२०

सुधामृतकृताहारश् श्रीमान् सर्वमनोहरः ।
सुखैरभिरतो योगी योगीव निरतो भृशम् ॥ १२१

रुद्रदेवर्षिकन्याभिस् सुमनोभिरुपासितः ।
विमाने न गराकारे सूर्यवत् सूर्यसन्निभे ॥ १२२

यावद्वर्षसहस्रं तु जम्बूद्वीपे भविष्यति ।
तावद्ब्रह्मादिका लोका वर्षधाराप्रमाणतः ॥ १२३

यावत्संवत्सराः प्रोक्ता ब्रह्मलोकेऽस्य धीमतः ।
विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्स्थलात् ॥ १२४

वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः ॥ १२४॥

[2]वर्षोपवासैर्वर्षैस्तु तावद्भिस्स्वर्गमश्नुते ।
महर्षित्वमिहासाद्य सशरीरगतिर्भवेत् ॥ १२५॥

मुनिर्दान्तो जितक्रोधो जितशिश्नोदरस्तथा ।
जुह्वन्नग्नींस्तु नियतस् सन्ध्योपासनसेविता ॥ १२६॥

---

1. क-ब—अर्धनवकं नास्ति

2. ब—मासोपवासी वर्षं तु

वहुभिर्नियमैरेव मासादश्नाति यो नरः ॥ १२७

अत्युपवासशीलस्य तस्य वासो निरुच्यते ॥ १२७॥

दिवं गत्वा शरीरेण स्वेन राजन् यथाऽमरः ।

स्वर्गं पुण्यं यथाकामम् उपभुङ्क्ते यथाविधि ॥ १२८॥

एष ते भरतश्रेष्ठ यज्ञानां विधिरुत्तमः ।

व्याख्यातो ह्यानुपूर्व्येण उपवासफलात्मकः ॥ १२९॥

दरिद्रैर्मनुजैः पार्थ प्राप्यं यज्ञफलं यथा ।

उपवासमिमं कृत्वा गच्छेच्च परमां गतिम् ॥ १३०॥

देवद्विजातिपूजायां रक्तो भवति सन्ततम् ।

उपवासविधिस्त्वेष विस्तरेण प्रकीर्तितः ॥ १३१॥

नियतेष्वप्रमत्तेषु शौचवत्सु महात्मसु ।

दम्भदोषनिवृत्तेषु कृतबुद्धिष्वनाशिषु ॥ १३२॥

अचलेष्वविकम्प्येषु मा ते भूदत्र संशयः ॥ १३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
[अस्मिन्नध्याये १३३ श्लोकाः]

---

## ॥ अष्टनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तत्त्वसृष्टिप्रतिपादकरुद्रसनत्कुमारसंवादानुवादः ॥ १ ॥ रुद्रं प्रति सनत्कुमारेण तत्त्वलयक्रमाध्यात्मादिप्रतिपादनम् ॥ २ ॥ देहिदेहावयवाश्रितदेवताकथनपूर्वकं योगनिरूपणम् ॥ ३ ॥ अव्यक्तादितत्त्वानां तारतम्यकथनपूर्वकं तत्सृष्टिलयादिकथनम् ॥ ४ ॥ तथा एतज्ज्ञानस्य संसारतारकत्वोक्तिः ॥ ५ ॥ तथा प्राणिनां मरणसूचकदुर्निमित्तकथनपूर्वकं जिजीविषोस्तत्परिहारोपायकथनम् ॥ ६ ॥ तथाऽनिच्छोर्भगवद्ध्यानेन शरीरत्यागस्यपारत्रिकसुखसाधनत्वोक्तिः ॥ ७ ॥ तथा भगवज्ज्ञानशंसनपूर्वकं तदुपदेशपरम्पराकथनम् ॥ ८ ॥

युधिष्ठिरः—

पितामहेन कथिता दानधर्माश्रिताः कथाः ।
मया श्रुता ऋषीणां तु सन्निधौ केशवस्य च ॥ १

पुनः कौतूहलमभूत् तामेवाध्यात्मिकीं प्रति ।
कथां कथय राजेन्द्र त्वदन्यः क उदाहरेत् ॥ २

एष यादवदायादस् तथाऽनुज्ञातुमर्हति ।
ज्ञाते तु यस्मिञ् ज्ञातव्यं ज्ञातं भवति भारत ॥ ३

पश्चाच्छ्रोष्यामहे राज्ञां श्राव्यान् धर्मान् पितामह ।
कौतूहलमृषीणां तु च्छेत्तुमर्हसि साम्प्रतम् ॥ ४

भीष्मः—

अत ऊर्ध्वं महाराज साङ्ख्ययोगोभयशास्त्राधिगतया-
थात्म्यदर्शनसम्पन्नयोराचार्ययोः संवादमनुव्याख्यास्यामः ॥ ५

तद्यथा—भगवन्तं सनत्कुमारमासीनमङ्गुष्ठपर्वमात्रं
महति विमानवरे योजनसहस्रमण्डले तरुणभास्करप्रतीकाशे
शयनीये महति बद्धासनमनुध्यायन्तममृतमनावर्तकरममूर्तम-
क्षयजमथोपविष्टमुपससर्प भगवन्तमाचार्यं भगवानाचार्यो
रुद्रः ॥ ६

तं प्रोवाच—स्वागतं महेश्वर ब्रह्मसुत एतदासनमास्तां
भगवान् ॥ ७

इत्युक्ते चासीनो भगवाननन्तरूपो रुद्रस्तं प्रोवाच
भगवानपि [1]ध्यानमावर्तयति ॥ ८

इत्युक्ते चाह भगवान् सनत्कुमारस्तथेति ॥ ९

तथेत्युक्तश्च प्रोवाच भगवाञ् शङ्करस्तदा ।
परावरज्ञं सर्वस्य त्रैलोक्यस्य महामुनिम् ॥ १०

शङ्करः—

किं वा ध्यानेन द्रष्टव्यं यद्भवाननुपश्यति ।
यच्च ध्यात्वा न शोचन्ति यतयस्तत्त्वदर्शिनः ॥ ११

1. ख—किं ध्यान

कथय त्वमिमं देवं देहिनां यतिसत्तम ।
यच्च तत् पुरुषं शुद्धम् इत्युक्तं योगसाङ्ख्ययोः ॥ १२
किमध्यात्माधिभूतं च तथा वाऽप्यधिदैवतम् ।
कालसङ्ख्या च का देव द्रष्टव्या तस्य ब्रह्मणः ॥ १३
[1]सङ्ख्यासङ्ख्यादनस्यैव या प्रोक्ता परमर्षिभिः ।
शास्त्रदृष्टेन मार्गेण यथावद्यतिसत्तम ॥ १४
यच्च तत् पुरुषं शुद्धं प्रबुद्धमजरं ध्रुवम् ।
बुध्यमानप्रबुद्धाभ्यां विद्यावेद्यं तथैव च ॥ १५
विमोक्षं त्रिविधं चैव ब्रूहि मोक्षविदां वर ॥ १५॥
परिसङ्ख्या च साङ्ख्यानां ध्यानं योगेषु चार्थवत् ॥ १६
एकत्वदर्शनं चैव तथा नानात्वदर्शनम् ।
अरिष्टानि च तत्वेन तथैवोत्क्रमणानि च ॥ १७
दैवतानि च सर्वाणि निखिलेनानुपूर्वशः ।
यान्याश्रितानि देहेषु देहिनां यतिसत्तम ॥ १८
[2]सर्वमेतद्यथातत्त्वम् आख्याहि मुनिसत्तम ॥ १८॥
श्रेष्ठो भवान् हि सर्वेषां ब्रह्मज्ञानामनिन्दित ।
चतुर्थस्त्वं त्रयाणां तु ये गताः परमां गतिम् ॥ १९॥

---

1. ख—सांख्ये संख्यादयश्चैव याः
2. ख—इदमर्धं नास्ति

ज्ञानेन च [1]प्राकृतेन निर्मुक्तो मृत्युबन्धनात् ॥ २०

वयं तु वैकृतं मार्गम् आश्रिता वै क्षरं सदा ।
परमुत्सृज्य पन्थानम् अमृताक्षरमेव तु ॥ २१

न्यूने पथि निमग्नास्तु ऐश्वर्येऽष्टगुणे तथा ।
महिमानं प्रगृह्येमं विचरामो यथासुखम् ॥ २२

न चैतत् सुखमत्यन्तं न्यूनमेतदनन्तरम् ।
मूर्तिमत् परमेतत् स्यात्त्विदमेवं सुसत्तम ॥ २३

पुनः पुनश्च पतनं मूर्तिमत्युपदिश्यते ।
न पुनर्मृत्युमित्यन्यान्निर्मुक्तानां तु मूर्तितः ॥ २४

मृत्युदोषास्त्वनन्ता वै ह्युत्पद्यन्ते कृतात्मनाम् ।
मर्त्येषु नाकपृष्ठेषु निरयेषु महामुने ॥ २५

तत्र मज्जन्ति पुरुषास् सुखदुःखेन वेष्टिताः ॥ २५॥

सुखदुःखव्यपेतं च यदाहुरमृतं पदम् ।
तदहं श्रोतुमिच्छामि यथावच्छ्रुतिदर्शनात् ॥ २६॥

सनत्कुमारः—

[2]यदुक्तं भवता वाक्यं तत्त्वसंज्ञेति देहिनाम् ।
चतुर्विंशतिमेवात्र केचिदाहुर्मनीषिणः ॥ २७॥

1. क-ख—प्राक्तनेन

2 ख—अर्धद्वयं नास्ति

केचिदाहुस्त्रयोविंशं यथाश्रुतिनिदर्शनम् ।
वयं तु पञ्चविंशं वै तदधिष्ठानसंज्ञितम् ॥ २८॥

तत्त्वं समधिमन्यामस् सर्वतन्त्रप्रलापनात् ॥ २९

अव्ययश्चैव वै व्यक्तावुभावपि पिनाकधृक् ।
सह चैव विना चैव तावन्योन्यं प्रतिष्ठितौ ॥ ३०

हिरण्मयीं प्रविश्यैष मूर्तिं मूर्तिमतां वर ।
चकार पुरुषस्तात विकारपुरुषावुभौ ॥ ३१

अव्यक्तादेक एवैष महानात्मा प्रसूयते ।
अहङ्कारेण लोकांश्च व्याप्य चाहङ्कृतेन वै ॥ ३२

विना सर्वं तदव्यक्ताद् अभिमन्यस्व शूलधृक् ।
भूतसर्गमहङ्कारात् तृतीयं विद्धि वै क्रमात् ॥ ३३
अहङ्काराच्च भूतेषु चतुर्थं विद्धि वैकृतम् ॥ ३३॥

अहङ्काराच्च जातानि युगपद्विवुधेश्वर ।
[1]सविशेषाणि भूतानि पञ्च प्राहुर्मनीषिणः ॥ ३४॥

चतुर्विंशात्तु वै प्रोक्तात् पञ्चविंशोऽधितिष्ठति ॥ ३५

एते सर्गा मया प्रोक्ताश् चत्वारः प्राकृतास्त्विह ।
अहङ्काराच्च जातानि युगपद्विविधेश्वर ॥ ३६
अहङ्काराच्च भूतेषु विविधार्थो व्यजायत ॥ ३६॥

1. ख—अर्धचतुष्टयं नास्ति

इन्द्रियैर्युगपत् सर्वैस् सोऽनित्यश्च समीक्ष्यते ॥ ३७

[1]मरुत्त्वं सत्त्वसर्गश्च तुष्टिस्सिद्धिस्तथैव च ॥ ३७॥

वैकृतानि प्रवक्ष्यामि शृणु तानि महामते ॥ ३८

एषा तत्त्वचतुर्विंशन्मया शास्त्रानुमानतः ।
वर्णिता तव देवेश पञ्चविंशत्समन्विता ॥ ३९

पञ्चमोऽनुग्रहश्चैव नवैते प्राकृतैस्सह ।
ऐन्द्रेऽप्यहमथाप्यन्यन्ममात्मनि च भास्वरम् ॥ ४०

यच्च देहमयं किञ्चित् त्रिषु लोकेषु विद्यते ।
सर्वत्रैवाभिमन्तव्यं त्वया त्रिपुरसूदन ॥ ४१

अन्यथा ये तु पश्यन्ति ते न पश्यन्ति ब्रह्मज ।
एतदव्यक्तविषयं पञ्चविंशसमन्वितम् ॥ ४२

अनेन कारणेनैव तत्त्वमाहुर्मनीषिणः ।
विकारमात्रमेतं तु तत्त्वमाचक्षते परे ॥ ४३

निस्तत्त्वश्चैष देवेश बोद्धव्यं तु न बुध्यते ।
यदि बुध्येत् परं बुद्धं बुध्यमानस्सुरर्षभ ॥ ४४

प्रबुद्धो ह्यभिमन्येत योऽयं [2]नाहमिति प्रभो* ॥ ४४॥

1. क-ब—ममत्वं ख—उरुत्वं

2. क-ब—योहमिति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तत्त्वसङ्ख्या श्रुता चैषा येषां ब्रह्मविदां वर ।
सर्गसङ्ख्या मया प्रोक्ता नवानामनुपूर्वशः ॥ ४५॥

प्रवक्ष्यामि च तेऽध्यात्मम् अधिभूताधिदैवतम् ॥ ४६

नैतद्युक्तैर्वेदविद्भिर्गृहस्थैर्
मान्यैरेभिस्तपसा वाऽभिपन्नैः ।
यत्नेन दृष्टं परमात्मतत्त्वं
तत्त्वेन प्राप्यं तु यथोक्तमेतत् ॥ ४७

परं परेभ्यस्त्वमृतार्थतत्त्वं
स्वभावसत्त्वस्थमनीशमीशम् ।
कैवल्यतां प्राप्य महासुरोत्तम
तवैतदाख्यामि मुनीन्द्रवृत्त्या ॥ ४८

रहस्यमेवान्यदवाप्य दिव्यं
पवित्रपूतस्तव मृत्युजालम् ॥ ४८॥

पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्वपरीक्षिताय ।
नाश्रद्दधानाय न चान्यबुद्धेर्
नाज्ञानयुक्ताय न विस्मिताय ॥ ४९॥

स्वाध्याययुक्ताय गुणान्विताय
प्रदेयमेतन्नियतेन्द्रियाय ॥ ५०

सङ्क्षेपं चाप्यथैतेषां तत्त्वानां वृषभध्वज ।
अनुलोमानुजातानां प्रतिलोमं प्रमीयताम् ॥ ५१

प्रवक्ष्यामि तमध्यात्मं साधिभूताधिदैवतम् ॥ ५१॥
यथांशुजालमर्कस्य तथैतत् प्रवदन्ति वै ॥ ५२

सङ्क्षीणे ब्रह्मदिवसे जगज्जलधिमाविशेत् ।
प्रलीयते जले भूमिर् जलमग्नौ प्रलीयते ॥ ५३

लीयतेऽग्निस्तथा वायौ वायुराकाश एव तु ।
मनसि प्रलीयते खं तु मनोऽहङ्कार एव च ॥ ५४

अहङ्कारस्तथा तस्मिन् महति प्रविलीयते ।
महानव्यक्त इत्याहुस् तदेकत्वं प्रचक्षते ॥ ५५

अव्यक्तस्य महादेव प्रलयं विद्धि ब्रह्मणि ।
एवमस्यासकृत् क्रीडाम् आहुस्तत्त्वविदो जनाः ॥ ५६

अध्यात्ममधिभूतं च तथैवाप्यधिदैवतम् ।
[1]यथावदुदितं शास्त्रं योगे तु सुमहात्मभिः ॥ ५७

तथैव चेह साङ्ख्ये तु परिसङ्ख्यात्मचिन्तकैः ।
प्रपञ्चितार्थमेतावन्महादेव महात्मभिः ॥ ५८

1. ख-अर्धषट्कं नास्ति

ब्रह्मेति विद्यादध्यात्मं पुरुषं चाधिदैवतम् ।
प्रभवं सर्वभूतानां रक्षणं तत्र कर्म च ॥ ५९

अध्यात्मं प्राणमित्याहुः क्रतुमप्यधिदैवतम् ।
रथं च यज्ञवाहोऽत्र कर्माहङ्कार एव च ॥ ६०

अध्यात्मं तु मनो विद्याच् चन्द्रमाश्चाधिदैवतम् ।
दैवं च प्रभवश्चैव कर्म व्याहृतयस्तथा ॥ ६१

विद्यात्तु श्रोत्रमध्यात्मम् आकाशमधिदैवतम् ।
[1]सर्वभावाभिधानार्थं शब्दः कर्म सदा स्मृतम् ॥ ६२

त्वगध्यात्ममथो विद्याद् वायुरत्राधिदैवतम् ।
सन्निपाताय विज्ञानं सर्वकर्म च तत्र ह ॥ ६३

अध्यात्मं चक्षुरित्याहुर् भास्करोऽत्राधिदैवतम् ।
ज्ञापनं सर्ववर्णानां रूपं कर्म सदा स्मृतम् ॥ ६४

जिह्वेति विद्यादध्यात्मम् आपश्चात्राधिदैवतम् ।
पायुरध्यात्ममित्याहुर् यथावद्यतिसत्तमाः ॥ ६५

विसर्गमधिभूतं च मित्रं चाप्यधिदैवतम् ।
[2]उपस्थोऽध्यात्ममित्याहुर् देवदेव पिनाकधृक् ॥ ६६

अनुभावोऽधिभूतं तु दैवतं च प्रजापतिः ॥ ६६॥

---

1. अ—अर्धचतुष्टयं नास्ति

2. क-घ—अर्धचतुष्टयं नास्ति

पादावध्यात्ममित्याहुस् त्रिशूलाङ्क मनीषिणः ॥ ६७

गन्तव्यमधिभूतं तु विष्णुस्तत्राधिदैवतम् ।
वागध्यात्मं तथैवाहुः पिनाकिंस्तत्त्वदर्शिनः ॥ ६८

वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ ६८॥

[1]एतदध्यात्ममतुलं साधिभूताधिदैवतम् ।
मया तु वर्णितं सम्यग् देहिनाममरर्षभ ॥ ६९॥

एतत् कीटपतङ्गे च श्वपाके शुनि हस्तिनि ।
पुत्रिकादंशमशके ब्राह्मणे गवि पार्थिवे ॥ ७०॥

सर्वमेव हि द्रष्टव्यम् अन्यथा मा [2]विचिन्तय ॥ ७१
अतोऽन्यथा ये पश्यन्ति न सम्यक् तेषु दर्शनम् ॥ ७१॥

देवदानवगन्धर्वयक्षराक्षसकिन्नराः ।
यन्न जानन्ति को ह्येष कुतो [3]वा भगवानिति ॥ ७२॥

ओमित्येकाक्षरं ब्रह्म यत्तत् सदसतः परम् ।
अनादिमध्यपर्यन्तं कूटस्थमचलं ध्रुवम् ॥ ७३॥

योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
अनादिनिधनं देवं देवदेवं सनातनम् ॥ ७४॥

---

1. अ-ख—इदमर्धं नास्ति
2. ख—विचारय
3. क-ख—वाऽहं भवानिति

अप्रमेयमविज्ञेयं हरिं नारायणं प्रभुम् ।
कृताञ्जलिश्शुचिर्भूत्वा प्रणम्य प्रयतोऽर्चय ॥ ७५॥

अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकोऽयं वेद भगवांस् त्राता नारायणो हरिः ॥ ७६॥

नारायणादृषिगणास् ततस्सिद्धा महोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ ७७॥

यमाहुर्विजितक्लेशं यस्मिंश्च विहिताः प्रजाः ।
यस्मिँल्लोकास्स्फुरन्तीमे जाले शकुनयो यथा ॥ ७८॥

सप्तर्षयो मनस्सप्त साङ्ख्यास्तु मुनिदर्शनात् ।
सप्तर्षयश्चेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि च ॥ ७९॥

श्रोत्रयोश्च दिशः प्राहुर् मनसि त्वथ चन्द्रमाः ॥ ८०

मनष्षष्ठं बुद्धिस्सप्तमी ह्यात्मनि स्थापितानि शरीरेषु नात्मनि परमात्मनि तस्य हि कारणानि भवन्ति सर्वाण्यपि सर्वकर्मसु वा विषयेषु वा युञ्जन्ति यथात्मनि स्वानि कर्माणि प्रवृत्तानि सप्तस्वपि व्यापकानि ॥ ८१

विषयाणां व्यापकानि तान्येव स्वपतो भूतग्रामस्याजमात्मानं देवलोकस्थानसम्मितं देहान्तरगामिनं [1]मुमुक्षवोऽनुप्रविशन्ति सूक्ष्माणि प्रलीयन्ते वा ॥ ८२

---

1. ख—मुमुक्षुं वाऽनुप्र

मोक्षकाले तमेकं न कश्चिद्वेत्ति स्वापरम् ॥ ८३

एवं प्रविष्टेषु भूतेषु को जागर्तीत्युच्यते ॥ ८४

निद्राप्रसुप्तेषु [1]वाऽत्र जाग्रत्स्वप्नशीलोऽत्रसदनौ च देव-
द्योतनो भगवांश्चात्र क्षेत्रज्ञो बुद्धिर्वा ॥ ८५

स हि सुप्तस्यापि स्वप्नदर्शनानि पश्यति ॥ ८६

अप्रतिबुद्धेषु लोकेषु स एव प्रतिबुध्यते ॥ ८७

स एष प्राज्ञः ॥ ८८

अथ तैजसः कायाग्निस्स हि सुप्तस्यात्मा वा ॥ ८९

अविदुषो वाऽप्रतिबुध्यमानस्यान्नं पचतीत्यन्तेऽवतिष्ठते ॥ ९०

एतदात्मानमधिकृत्यानुज्ञातमिति* ॥ ९१

प्रभवश्चाप्ययस्तात वर्णितस्तेऽनुपूर्वशः ।
तथाऽध्यात्माधिभूतं च तथैवात्राधिदैवतम् ॥ ९२

निखिलेन तु वक्ष्यामि दैवतानीह देहिनाम् ।
[2]यान्याश्रितेषु देहेषु यानि पृच्छसि शङ्कर ॥ ९३

वाच्यग्निस्त्वथ जिह्वायां सोमः प्राणे तु मारुतः ।
रूपे चाप्यथ नक्षत्रं जिह्वायां चाप एव तु ॥ ९४

---

1. ख—वाऽसुत

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. ख—न्यायाश्रि

नाभ्यां समुद्रश्च विभुर् नखरोम तथैव च ।
वनस्पतिवनौषध्यस् त्वङ्केषु मरुतस्तथा ॥ ९५

संवत्सराः पर्वसु च आकाशे दैवमानुषे ।
उदाने विद्युदभवद् व्याने पर्जन्य एव च ॥ ९६

स्तनयोरेव चाकाशं बले चन्द्रस्तथा भवेत् ।
समानेऽप्यथ चेशानस् त्वपाने रुद्र एव च ॥ ९७

गन्धर्वाप्सरसो व्याने सत्ये मित्रस्य शङ्कर ।
[1]प्रज्ञायां वरुणश्चैव चक्षुष्यादित्य एव च ॥ ९८

शरीरे पृथिवी चैव पादयोर्विष्णुरेव च ।
पायौ मित्रस्तथोपस्थे प्रजापतिररिन्दम ॥ ९९

मूर्ध्नि चैव दिशः प्राहुर् बुद्धौ [2]ब्रह्मा प्रतिष्ठितः ।
बुध्यमानोऽऽत्मनिष्टस्स्याद् अधिष्टाता तु शङ्कर ॥ १००

अबुद्धश्चाभवत्तस्माद् बुध्यमानान्न संशयः ।
आभ्यामन्यः परो बुद्धो [3]वेदवादेषु शङ्कर ॥ १०१

यदाश्रितानि देहेषु दैवतानि पृथक् पृथक् ।
योऽग्नये [4]यजते नित्यम् आत्मयाजी समाहितः ॥ १०२

1. ख—अर्धसप्तकं नास्ति
2. क-घ—धर्माः प्रतिष्ठिताः
3. क-घ—देवदेवेषु
4. क-ख-घ—जायते

[1]य एवमनुपश्येत दैवतानि समाहितः ।
सोऽत्र योगी भवत्येव य एवमनुपश्यति ॥ १०२
स सर्वयज्ञयाजिभ्यो ह्यात्मयाजी विशिष्यते ॥ १०३॥

मुखे जुहोति यो नित्यं कृत्स्नं विश्वमिदं जगत् ।
सो त्मवित् प्रोच्यते तज्ज्ञैर् महादेव महात्मभिः ॥ १०४॥

सर्वेभ्यः परमेभ्यो वै दैवतेभ्यो त्मयाजिना ।
गन्तव्यं परमाकाङ्क्षन् परमेव विचिन्तयन् ॥ १०५॥

यथा सङ्क्रमते देहाद् देही त्रिपुरसूदन ।
तथाऽस्य स्थानमाख्यास्ये पृथक्त्वेनेह शङ्कर ॥ १०६॥

पादाभ्यां वैष्णवं स्थानम् आप्नोति विनियोजनात् ।
पायुना मित्रमाप्नोति उपस्थेन प्रजापतिम् ॥ १०७॥

नाभ्यां च वारुणं स्थानं स्तनाभ्यां तु भवो लभेत् ।
बाहुभ्यां वासवस्थानं श्रोत्राभ्यामाप्नुयाद्दिशः ॥ १०८॥
आदित्यं चक्षुषा स्थानं मूर्ध्ना ब्रह्मण एव च ॥ १०९

अथ मूर्धसु यः प्राणान् धारयेत समाहितः ।
बुद्ध्वा मानमवाप्नोति द्रव्यावस्थं न संशयः ॥ ११०

अव्यक्तात् परमं शुद्धम् अप्रमेयमनामयम् ।
तमाहुः परमं नित्यं यद्यदाप्नोति बुद्धिमान् ॥ १११

1. क-घ—इदमर्धं नास्ति

[1]बुध्यमानाप्रबुद्धाभ्यां स बुद्ध इति पठ्यते ।
बुध्यमानमबुद्धश्च नित्यमेवानुपश्यति ॥ ११२

विकारपुरुषस्त्वेष बुध्यमान इति स्मृतः ।
पञ्चविंशतितत्त्वं तत् प्रोच्यते [2]नात्र संशयः ॥ ११३

स एष प्रकृतिस्थत्वात् तस्थुरित्युपदिश्यते ।
महानात्मा महादेव महानत्राधितिष्ठति ॥ ११४

अधिष्ठानादधिष्ठाता प्रोच्यते शास्त्रदर्शनात् ।
एष [3]चेतयते देव मोहजालमबुद्धिमान् ॥ ११५

अव्यक्तस्यैव साधर्म्यम् एतदाहुर्मनीषिणः ।
सोऽहं सोऽहमतो नित्याद् अज्ञानादिति मन्यते ॥ ११६

यदि बुध्यति चैवायम् अन्योऽयमिति [4]भास्वरः ।
न प्रबुद्धोऽनुवर्तेत पानीयं मत्स्यको यथा ॥ ११७

देवता निखिलेनैताः प्रोक्तास्त्रिभुवनेश्वर ।
योगकृत्यं तु तावन्मे त्वं निबोधानुपूर्वशः ॥ ११८

शून्यागारेष्वरण्येषु सागरे वा गुहासु वा ।
विष्टम्भयित्वा त्रीन् दण्डान् अवाप्तोऽप्यथ योगवित् ॥ ११९

---

1. घ—बुध्यमानप्रबुद्धाभ्यां
2. ख—तत्र संश्रयात् ;   घ—तत्र संशयः
3. क-घ—वेदयते
4. ख—भारत

प्राङ्मुखोदङ्मुखो वाऽपि तथा पश्चान्मुखोऽपि वा ।
दक्षिणावदनो वाऽपि बद्ध्वा विधिवदासनम् ॥ १२०

स्वस्तिकेनोपसंविष्टः कायमुन्नस्य भास्वरम् ।
यथोपदिष्टं गुरुणा तथा तद्ब्रह्म धारयेत् ॥ १२१

लघ्वाहारो यतो दान्तस् त्रिकालपरिवर्जकः ।
मूत्रोत्सर्गपुरीषाभ्याम् आहारे च समाहितः ॥ १२२

शेषकालं तु युञ्जीत मनसा सुसमाहितः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनसा विनिवर्तयेत् ॥ १२३

मनस्तथैव सङ्गृह्य बुद्ध्या बुद्धिमतां वर ।
विधावमानं धैर्येण विष्फुरन्तमितस्ततः ॥ १२४

निरुध्य सर्वसङ्कल्पांस् ततो वै स्थिरतां व्रजेत् ।
एकाग्रस्तद्विजानीयात् सर्वगुह्यतमं परम् ॥ १२५

निवातस्थ इवालोलो यथा दीपोऽतिदीप्यते ।
ऊर्ध्वमेव न तिर्यक् च तथैव[1] भ्राम्यते मनः ॥ १२६

हृदिस्थस्तिष्ठते योऽसौ तथैवाभिमुखो यदा ।
मनो भवति देवेश पाषाणमिव निश्चलम् ॥ १२७

स निर्जने विनिर्घोषे सघोषे चावसज्जने ।
युक्तो यो न विकम्पेत योगी योगविधिश्श्रुतः ॥ १२८

---

1. क-ख-घ—भ्रान्ति

ततः पश्यति तद्ब्रह्म ज्वलदात्मनि संस्थितम् ।
विद्युदम्बुधरे यद्वत् तद्वदेकमनाश्रयम् ॥ १२९

तमस्यगाधे तिष्ठन्तं निस्तमस्कमचेतनम् ।
चेतयानमचेतं च दीप्यमानं स्वतेजसा ॥ १३०

अङ्गुष्ठपर्वमात्रं तन्नैश्रेयसमनिन्दितम् ।
महद्भूतमनन्तं च स्वतन्त्रं विगतज्वरम् ॥ १३१

ज्योतिषां ज्योतिषं देवं विष्णुमत्यन्तनिर्मलम् ।
नारायणमणीयांसम् ईश्वराणामधीश्वरम् ॥ १३२

विश्वतः परमं नित्यं विश्वं नारायणं [1]प्रभुम् ।
अविज्ञाय निमज्जन्ति लोकास्संसारसागरे ॥ १३३

यं दृष्ट्वा यतयस्तात न शोचन्ति गतज्वराः ।
जन्ममृत्युभयान्मुक्तास् तीर्णास्संसारसागरम् ॥ १३४

अणिमा लघिमा भूमा प्राप्तिः प्राकाम्यमेव च ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ॥ १३५

एतदष्टगुणं योगं योगानामाहितं स्मृतम् ॥ १३५॥

दृष्ट्वाऽऽत्मानं निरात्मानम् अप्रमेयं सनातनम् ।
ते विशन्ति शरीराणि योगेनानेन भास्वरम् ॥ १३६॥

1. क-घ—हरिम्

[1]दैत्यदेवमनुष्याणां बलेन बलवत्तम ॥ १३७

एतत् तत्त्वमनाद्यन्तं यद्भवाननुपृच्छति ।
नित्यं वयमुपास्यामो योगधर्मं सनातनम् ॥ १३८

योगधर्मान्न धर्मोऽस्ति गरीयान् सुरसत्तम ।
एतद्धर्मं हि धर्मा[2]णाम् अपुनर्भवसंस्कृतम् ॥ १३९

तत्त्वतः परमस्तीति केचिदाहुर्मनीषिणः ।
केचिदाहुः परं नास्ति ये [3]साङ्ख्यज्ञानमाश्रिताः ॥ १४०

ज्ञानस्थः पुरुषस्त्वेष विकृतस्त्वेन वर्णितः ।
यं ध्यानेनानुपश्यन्ति नित्यं योगपरायणाः ॥ १४१

तमेव पुरुषं देवं केचिदेव महेश्वर ।
नित्यमन्यतमाः प्राहुर् ज्ञानं परमकं स्मृतम् ॥ १४२

ज्ञानमेव विनिर्मुक्तास् साङ्ख्या गच्छन्ति केवलम् ।
[4]चिन्ताध्यात्मनि चान्यत्र योगाः परमबुद्धयः ॥ १४३

उक्तमेतावदेतत्ते योगदर्शनमुत्तमम् ।
साङ्ख्यज्ञानं प्रवक्ष्यामि परिसङ्ख्यानिदर्शनम्* ॥ १४४

---

1. ख—देवदैत्य + माः
2. क-घ—र्णां प्रबभूव सुसंस्कृतः
3. क-ख-घ—ज्ञानफल
4. क-घ—किङ्खाध्या
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

इन्द्रियेभ्यो मनः पूर्वम् अहङ्कारस्ततः परम् ।
अहङ्कारात् परा बुद्धिर् बुद्धेः परतरं महन् ॥ १४५

महतः परमव्यक्तम् अव्यक्तात् पुरुषः परः ।
एतावदेतत् साङ्ख्यानां दर्शनं देवसत्तम ॥ १४६

अव्यक्तं बुद्ध्यहङ्कारौ महाभूतानि पञ्च च ।
मनस्तथा विशेषं च दश चैवेन्द्रियाणि च ॥ १४७

एषा तत्त्वचतुर्विंशन्महापुरुषसम्मिता ॥ १४७॥

बुद्ध्यमानेन देवेश चेतनेन महात्मना ।
संयोगमेतयोर्नित्यम् आहुरव्यक्तपुंसयोः ॥ १४८॥

एकत्वं च बहुत्वं च सर्गप्रलयकोटिशः ।
तमस्संज्ञितमेतद्धि प्रवदन्ति त्रिशूलधृक् ॥ १४९॥

समुत्पाट्य यथाऽव्यक्ताज् जीवा यान्ति पुनः पुनः ।
आदिरेष महानात्मा गुणानामिति नः प्रभो ॥ १५०॥

गुणस्थत्वाद्गुणं त्वेनम् आहुरव्यक्तलक्षणम् ।
एतेनाध्युषितो व्यक्तस् त्रिगुणं चेतयत्यथ ॥ १५१॥

अचेतनः प्रकृत्येषु न चान्यमनुबुध्यते ।
[1]बुध्यमानो ह्यहङ्कारो नित्यं मानाप्रबोधनात् ॥ १५२॥

विमलस्य विशुद्धस्य नीरुजस्य महात्मनः ।

---

1. अ—अर्धचतुष्टयं नास्ति

विमलोदरशीलस्स्याद् बुध्यमानाप्रबुद्धयोः ॥ १५३॥

द्रष्टा भवत्यभोक्ता च सत्त्वमूर्तिश्च निर्गुणः ।
बुध्यमानाप्रबुद्धाभ्याम् अन्य एव तु निर्गुणः ॥ १५४॥

उपेक्षकश्शुचिस्ताभ्याम् उभाभ्यामयुतस्तथा ।
बुध्यमानो न बुध्येत बुद्धमेवं सनातनम् ॥ १५५॥

स एव बुद्धेरव्यक्तस्वभावत्वादचेतनः ।
सोऽहमेव न मेऽन्योऽस्ति [1]य एवमभिमन्यते ॥ १५६॥

न मन्यते ममान्योऽस्ति येन चेतोऽस्म्यचेतनः ।
एवमेवाभिमन्येत बुध्यमानोऽप्यनात्मवान् ॥ १५७॥

अहमेव न मेऽन्योऽस्ति न प्रबुद्धवशानुगः ।
अव्यक्तस्थो गुणानेष नित्यमेवाभिमन्यते ॥ १५८॥

तेनाधिष्ठिततत्त्वज्ञैर् महद्भिरभिधीयते ।
अहङ्कारेण संयुक्तस् ततस्तमभिमन्यते ॥ १५९॥

क्षेत्रं प्रविश्य दुर्बुद्धिर् बुध्यमानो ह्यनात्मवान् ।
अहमेव सृजत्यन्यद् द्वितीयं लोकसारथिम् ॥ १६०॥

सर्वाभावैरहङ्कारैस् तृतीयं सर्गसंज्ञकम् ।
ततो भूतान्यहङ्कारम् अहङ्कारो मनोऽसृजत् ॥ १६१॥

तस्य स्रोतस्यभिमुखं सम्प्रावर्तत बुद्धिमान् ॥ १६२

1. घ—अयमनन्तरश्च पादौ न स्तः

तथैव यज्ञे भूतेषु त्रिषयार्थी पुनः पुनः ।
इन्द्रियैस्सह शूलाङ्क पञ्च पञ्चभिरेव च ॥ १६३

मनो वेद न चात्मानम् अहङ्कारं प्रजापतिः ।
न वेद वाऽप्यहङ्कारो बुद्धिं बुद्धिमतां वर ॥ १६४

एवमेते महाभाग [1]नेतरे नयवादिनः ॥ १६४॥

अहङ्कारेण संयुक्तस् स्रोतस्यभिमुखस्तदा ॥ १६५

एवमेष विकारात्मा महापुरुषसंज्ञकः ।
प्रतनोति जगत् कृत्स्नं पुनराददते स तत् ॥ १६६

संसक्तत्वाज्जगत् कृत्स्नम् अव्यक्तस्य हृदि स्थितम् ।
संविशद्रजनीं कृत्स्नां निशान्ते दिवसागमे ॥ १६७

पुनरात्मा विजयते बह्वो निर्गुणास्तथा ।
[2]अज्ञानेन समायुक्तस् सोऽव्यक्तेन तमोत्मना ॥ १६८

यदि ह्येषोऽनुमन्येत ममास्ति परतो वरः ।
स पुनः पुनरात्मानं न कुर्यादाक्षिपेत च ॥ १६९

एतमव्यक्तविषयं सूक्ष्मं मन्येत बुद्धिमान् ।
पञ्चविंशं महादेव महापुरुषवैकृतम् ॥ १७०

प्रबुद्धौ बुद्धवानेतत् सृजमानमबुद्धवान् ।

---

1. क-च—नेतरेतरवेदिना

2. क—अर्धद्वयं नास्ति

गुणान् पुनश्च तानेव सो त्मनाऽऽत्मनि निक्षिपेत् ॥ १७१

अव्यक्तस्य वशीभूतस् सोऽज्ञानस्य तमोत्मनः ।
बुध्यमानो ह्यबुद्धस्य बुद्धस्तदनुमुच्यते ॥ १७२

उपेक्षकश्शुचिर्व्यग्रस् सोऽलिङ्ग[1]स्सोऽव्रणोऽमलः ।
[2]षड्विंशो भगवानास्ते बुद्धश्शुद्धो निरामयः ॥ १७३

अव्यक्तादिविशेषान्तम् एतद्वैद्या वदन्त्युत ।
एतैरेव विहीनं तु केचिदाहुर्मनीषिणः ॥ १७४

निस्तत्वं बुध्यमानास्तु केचिदाहुर्महामते ।
केचिदाहुर्महात्मानस् तत्त्वसंज्ञितमेव तु ॥ १७५

तत्त्व[3]स्य श्रवणादेनं तत्त्वमेवं वदन्ति वै ।
तत्त्वसंश्रयणाच्चैव सत्त्ववन्तं महेश्वर ॥ १७६

एवमेव विकारात्मा बुध्यमानो महाभुज ।
अव्यक्तो भवते व्यक्तौ सत्त्वं सत्त्वं तथा गुणौ ॥ १७७
विद्या च भवते विद्या भवते ग्रहसंज्ञितम् ॥ १७७॥

य एवमनुबुद्ध्यन्ते योगसाङ्ख्याश्च तत्त्वतः ।
तेऽव्यक्तं शङ्करागाढं मुञ्चन्ते शास्त्रबुद्धयः ॥ १७८॥

---

1. क-ख—सोरुणो
2. अ—अर्धद्वयं नास्ति
3. क—स्याश्रयणा

तेषामेवं तु वदतां शास्त्रार्थं सूक्ष्मदर्शिनाम् ।
बुद्धिर्विस्तीर्यते सर्वं तैलबिन्दुरिवाम्भसि ॥ १७९॥

विद्या तु सर्वविद्यानाम् अवबोध इति स्मृतः ।
येन विद्यामविद्यां च विन्दन्ति यतिसत्तमाः ॥ १८०॥

सैषा त्रयी परा विद्या चतुर्थ्यान्वीक्षिकी स्मृता ।
यां बुद्ध्यमानो बुद्ध्येत बुद्ध्वाऽऽत्मनि समं गतः ॥ १८१॥

[1]अप्रबुद्धमथाव्यक्तम् अविद्यासंज्ञकं स्मृतम् ।
विमोहितं तु शोकेन केवलेन समन्वितम् ॥ १८२॥

एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ॥ १८३

ये त्वेतन्नावबुद्ध्यन्ते ते बुद्धवशगानुगाः ।
ते पुनः पुनरव्यक्ताज् जनिष्यन्त्यबुधात्मनः ॥ १८४

तमेव तुलयिष्यन्ति ह्यबुद्धवशवर्तिनः ।
ये चाप्यन्ये तन्मनसस् तेऽप्येतत्फलभागिनः ॥ १८५

विदित्वैनं न शोचन्ति योगोपेतार्थदर्शिनः ।
स्वातन्त्र्यं प्रतिलप्स्यन्ते केवलत्वं च भास्वरम् ॥ १८६

अज्ञानबन्धनान्मुक्तास् तीर्णास्संसारबन्धनात् ।
अज्ञानसागरं घोरम् अगाधं तमसंज्ञकम् ॥ १८७

यत्र मज्जन्ति भूतानि पुनः पुनररिन्दम ॥ १८७॥

1. अ—अर्धचतुष्टयं नास्ति

एषा विद्या तथाऽविद्या कथिता ते मयाऽर्थतः ।
[1]यस्मिन् देयं च नो ग्राह्यास् साङ्ख्यास्साङ्ख्यं तथैव च ॥

तथा चैकत्वनानात्वम् अक्षरं क्षरमेव च ।
निगदिष्यामि देवेश विमोक्षं त्रिविधं च ते ॥ १८९॥

बुद्ध्यमानाप्रबुद्धाभ्याम् अबुद्धस्य प्रपञ्चनम् ।
भूय एव निबोध त्वं देवानां देवसत्तम ॥ १९०॥

यच्च किञ्चिच्छ्रुतं न स्याद् दृष्टं चैव न किञ्चन ।
तच्च ते सम्प्रवक्ष्यामि एकाग्रश्शृणु तत्परः ॥* १९१॥

अरिष्टानि प्रवक्ष्यामि तत्त्वेन शृणु तद्भवान् ।
मध्य उत्तरतस्तात दक्षिणामुखनिष्ठितम् ॥ १९२॥

विद्युत्संस्थानपुरुषं यदि पश्येत मानवः ।
वर्षत्रयेण जानीयाद् देहन्यासमुपस्थितम् ॥ १९३॥

[2]एतत् फलमरिष्टस्य शङ्कराहुर्मनीषिणः ॥ १९४

शुद्धमण्डलमादित्यम् अरश्मिमथ पश्यतः ।
वर्षार्धकेन जानीयाद् देहन्यासमुपस्थितम् ॥ १९५

[3]छिद्रां चन्द्रमसश्छायां पादावप्यनुपश्यतः ।

---

1. क-घ—अर्धचतुष्टयं नास्ति

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

2. अ—अर्धत्रयं नास्ति

3. क-घ—शुभ्रां

संवत्सरेण जानीयाद् देहन्यासमुपस्थितम् ॥ १९६

कनीनिकायामशिरः पुरुषं यदि पश्यति ।
जानीयात् षट्सु मासेषु देहन्यासमुपस्थितम् ॥ १९७

कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुयाद्यदि ।
विजानीयात्तु मासेन देहन्यासमुपस्थितम् ॥ १९८

[1]शवगन्धमुपाघ्राति सुरभिं प्राप्य भास्वरम् ।
देवतायतनस्थोऽपि सप्तरात्रेण मृत्युभाक् ॥ १९९

सर्वाङ्गधारणावस्थां धारयेत समाहितः ।
यथा स मृत्युं जयति नान्यथेह महेश्वर ॥ २००

यदि जीवितुमिच्छेत चिरकालं महामुने ॥ २००॥

अथ नेच्छेच्चिरं कालं त्यजेदात्मानमात्मना ।
केवलं चिन्तयानस्तु निष्कलं स निरामयम् ॥ २०१॥

अथ तं निर्विकारं तु प्रकृतेः परमं शुचिम् ।
पुरुषं तेन साधर्म्यं देहन्यासमुपाश्नुयात् ॥ २०२॥

जाग्रतो हि मयोक्तानि तत्रारिष्टानि तत्त्वतः ।
धारणाचैव सर्वाङ्गे मृत्युं जीयात् सुरर्षभ ॥ २०३॥

एकत्वदर्शनं भूयो नानात्वं च निबोध मे ।
अक्षरं च क्षरं चैव चतुष्टयविधानतः ॥ २०४॥

---

1. ख—विसग

अव्यक्तादीनि तत्त्वानि सर्वाण्येव महाद्युते ।
आहुश्चतुर्विंशतितमं विकारं पुरुषान्वितम् ॥ २०५॥

एकत्वदर्शनं त्वेनं नानात्वेनावरं स्मृतम् ।
पञ्चविंशतिवर्गस्स्याद् अपवर्गोऽजरामरः ॥ २०६॥

स निर्विकारपुरुषस् तत्त्वेनैवोपदिश्यते ।
स एव पञ्चविंशस्तु विकारः पुरुषस्स्मृतः ॥ २०७॥

यद्येष निर्विकारस्स्यात् तत्त्वं न तु भवेद्ध्रुव ।
विकारो विद्यमानस्तु तत्त्वसंज्ञक उच्यते ॥ २०८॥

यद्येषोऽव्यक्ततां नैति व्यतिरेकान्न संशयः ।
तथा भवति निस्तत्त्वस् तथासत्त्वस्तथागुणः ॥ २०९॥

विकारगुणसन्त्यागात् प्रकृत्यन्यत्वतश्शुचिः ।
तदा नानात्वतामेति सर्गहीनोऽपवर्गभाक् ॥ २१०॥

बोध्यमानः प्रबुध्येत समो भवति बुद्धिमान् ।
अक्षरश्च भवत्येष यथा वा च्युतवान् क्षणात् ॥ २११॥

अव्यक्ताव्यक्तिरुक्ता स्यान्निर्गुणस्य गुणाकरात् ।
एतदेकत्वनानात्वम् अक्षरः क्षर एव च ॥ २१२॥

व्याख्यातं तव शूलाङ्क तथाऽरिष्टानि चैव हि ।
विमोक्षलक्षणं शेषं तदपीह ब्रवीमि ते ॥ २१३॥

यं ज्ञात्वा यतयः प्राप्ताः केवलत्वमनामयम् ।
साङ्ख्याश्चाप्यथ योगाश्च दग्धपङ्का गतज्वराः ॥ २१४॥

अमूर्तित्वमनुप्राप्ता निर्गुणा निर्भया भव ।
विपाप्मानो महादेव मुक्तास्संसारसागरात् ॥ २१५॥

सरणे प्रजनादाने गुणानां प्रकृतिस्सदा ।
परा प्रमत्ता सततम् एतावत् कार्यकारणम् ॥ २१६॥

असच्चैव तु सच्चैव कुरुते स पुनः पुनः ।
चैतन्येन पुराणेन चेतनाचेतनान् परः ॥ २१७॥

यस्तु चेतयते चेतो मनसा चैकबुद्धिकम् ।
स नैव सन्न चैवासन् सदसन्न च संस्मृतः ॥ २१८॥

व्यतिरिक्तश्च शुद्धश्च सोऽन्यश्चाप्रकृतिस्तथा ।
उपेक्षकश्च प्रकृतेर् विकारपुरुषस्स्मृतः ॥ २१९॥

विकारपुरुषेणैषा संयुक्ता सृजते जगत् ।
पुनरादत्ते चैव गुणानामन्यथाऽऽत्मनि ॥ २२०॥

मत्स्योदकात् स संज्ञातः प्रकृतेरेव कर्मणः ।
तद्वत् क्षेत्रसहस्राणि स एव प्रकरिष्यति ॥ २२१॥

क्षेत्रप्रलयविज्ञस्तु क्षेत्रज्ञ इति चोच्यते ।
स योगो नित्य इत्याहुर् ये जनास्तत्त्वदर्शिनः ॥ २२२॥

एवमेव ह्यसत् सच्च विकारपुरुषस्स्मृतः ।
विकारापद्यमानं तु [1]विकृतिं प्रवदन्ति नः ॥ २२३॥

यदा त्वेष विकारांस्तु प्रकृतानिति मन्यते ।
तदा विकारतामेति विकारान्यत्वतां व्रजेत् ॥ २२४॥

प्रकृत्या च विकारैश्च व्यतिरिक्तो यदा भवेत् ।
शुचि यत् परं शुद्धं प्रतिबुद्धं सनातनम् ॥ २२५॥

[2]अयुक्तं निष्कलं शुद्धम् अव्ययाजरमव्रणम् ॥ २२६

समेत्य तेन शुद्धेन बुध्यमानस्स भास्वरः ।
विमोक्षं भजते व्यक्ताद् अप्रबुद्धादचेतनात् ॥ २२७

उदुम्बराद्वा मशकः प्रलयान्निर्गतो यथा ।
तथाऽव्यक्तस्य सन्त्यागान्निर्ममः पञ्चविंशकः ॥ २२८

[3]यथा पुष्करपर्णस्थो जलबिन्दुर्न संश्लिषेत् ।
तथैवाव्यक्तविषये न लिप्येत् पञ्चविंशकः ॥ २२९

आकाश इव निस्सङ्गस् तथाऽसङ्गस्तथा वरः ।
पञ्चविंशतिमो बुद्धो बुद्धेन समतां गतः ॥ २३०

एतद्धि प्राकृतं ज्ञानं तत्त्वतश्च समुत्थितम् ।
पूर्वजेभ्यस्त्वथोत्पन्नं ब्रह्मजेभ्यस्ततोऽनघ ॥ २३१

1. क-घ—प्रकृतिं 2. क-घ—युक्तं च
3. क-घ—अर्धचतुष्टयं नास्ति

आदिसर्गो महाबाहो तामसेनावृतं पदम् ।
प्रविष्टावयवं देवम् अभेद्यमजरामरम् ॥ २३२

सनकस्सनन्दनश्चैव तृतीयश्च सनातनः ।
ते विदुः परमं धर्मम् अव्ययं व्ययधर्मिणम् ॥ २३३

अव्यक्तात् परमात् सूक्ष्माद् अक्षणान्मूर्तिसंज्ञकात् ।
क्षेत्रज्ञो भगवानास्ते नारायणपरायणः ॥ २३४

अस्माकं सहजातानाम् उत्पन्नं ज्ञानमुत्तमम् ।
एते हि मूर्तिमन्तो वै लोकान् प्रविचरामहे ॥ २३५

पुनः पुनः प्रजाता वै तत्र तत्र पिनाकधृक् ।
द्वन्द्वैर्विरज्यमानस्य ज्ञानमुत्पन्नमुत्तमम् ॥ २३६

कपिलान्मूल आचार्यात् तत्त्वबुद्धिविनिश्चयम् ।
योगसाङ्ख्यमवाप्तं मे कात्स्न्येन मुनिसत्तमात् ॥ २३७

तेन सम्बोधिताश्शिष्या बहवस्तत्त्वदर्शिनः ।
तद्बुध्या बहवश्शिष्या मयाऽप्येतन्निदर्शिताः ॥ २३८

जन्ममृत्युहरं तथ्यं ज्ञानं ज्ञेयं सनातनम् ।
यज्ज्ञात्वा नानुशोचन्ति तत्त्वज्ञाना निरिन्द्रियाः ॥ २३९

शुद्धबीजामलाश्चैव [1]विपङ्का वै निरक्षराः ।

1. क-ब—इतः अष्टौ पादा न सन्ति

स्वतन्त्रास्ते स्वतन्त्रेण सम्मता निष्कलास्स्मृताः ॥ २४०

शाश्वताश्चाव्ययाश्चैव तमोग्राह्याश्च भास्वराः ।
विपाप्मानस्तथा सर्वे सत्त्वस्थाश्चापि निर्व्रणाः ॥ २४१

विमुक्ताः केवलाश्चैव वीतमोहभयास्तथा ।
अमूर्तास्ते महाभाग सर्वे च विगतज्वराः ॥ २४२

हिरण्यनाभस्त्रिशिरास् तथा प्रह्लादभास्करौ ।
वसुर्विश्वावसुश्चैव सार्धं पञ्चशिखस्तथा ॥ २४३

गार्ग्योऽथासुरिरावन्त्यो गौतमो वृत एव च ।
कात्यायनोऽथ नमुचिर् हरिश्च दमनश्च ह ॥ २४४

एते चान्ये च बहवस् तत्त्वमेवोपदर्शिताः ।
केचिन्मुक्तास्स्थिताः केचिच् छन्दतश्चापरे मृताः ॥ २४५

[1]दर्शितास्त्रिविधं बन्धं विमोक्षं त्रिविधं तथा ।
अज्ञानं चैव रागश्च संयोगं प्राकृतं ततः ॥ २४६

एतेभ्यो बन्धनं प्रोक्तं विमोक्षमपि मे शृणु ।
परितस्तावता सम्यक् सम्बन्धो यावता कृतः ॥ २४७

कृत्स्नक्षयपरित्यागाद् विमोक्ष इति नश्श्रुतिः ।
निवृत्तस्स्वर्गसङ्गेभ्यः केवलः पुरुषोऽमलः ॥ २४८

1. ख—इदमर्धं नास्ति

भीष्मः—

इत्येवमुक्त्वा भगवान् ईश्वराय महात्मने ।
सनत्कुमारः प्रययावाकाशं समुपाश्रितः ॥ २४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
[ अस्मिन्नध्याये २३३ श्लोकाः वाक्यानि १६ ]

---

## ॥ एकोनशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति तीर्थशौचनिरूपणम् ॥

---

युधिष्ठिरः—

यद्वरं सर्वतीर्थानां तद्ब्रवीहि पितामह ।
यत्र वै परमं शौचं तन्मे व्याख्यातुमर्हसि ॥ १

भीष्मः—

सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणाम् ।
यत्र तीर्थं च शौचं च तन्मे शृणु समाहितः ॥ २

अगाधे विमले शुद्धे सत्यतीर्थे धृतिह्रदे ।
स्नातव्यं मानसे तीर्थे सत्त्वमालम्ब्य शाश्वतम् ॥ ३

तीर्थं शौचं तपो ज्ञानं मार्दवं सत्यमार्जवम् ।
अहिंसा संविभागश्च आनृशंस्यं दमश्शमः ॥ ४

निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ।
योगिनस्तीर्थभूतास्ते तीर्थं परममुच्यते ॥ ५

नारायणेऽथ रुद्रे वा भक्तिस्तीर्थं परं मताम् ।
शौचलक्षणमेतच्च सर्वत्रैवान्ववेक्षताम् ॥ ६

रजस्तमस्सत्त्वमथो येषां निर्धूतमात्मना ।
तीर्थमाचारशुद्धिश्च स्वमार्गपरिमार्गणम् ॥ ७

सर्वत्यागेष्वभिरतास् सर्वज्ञास्सर्वदर्शनाः ।
शौचेष्वेतेष्वभिरतास् ते तीर्थशुचयोऽपि च ॥ ८

नोदकक्लिन्नगात्रोऽथ स्नात इत्यभिधीयते ।
स स्नातो यो दमस्नातस् स बाह्याभ्यन्तरश्शुचिः ॥ ९

[1]अदृष्टेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥ १०

प्रज्ञानं शौचमेवेह [2]शरीरस्य विशेषतः ।
यथा निष्किञ्चनत्वं च मनसश्च प्रयत्नतः ॥ ११

1. क-घ—अनिष्टेष्यनपेक्षा ये पापेष्वेतेषु
2. क-घ—इतः अष्टौ पादा न सन्ति

वृत्तं शौचं महाशौचाद् वृत्तशौचं परं हितम् ।
ज्ञानतत्त्वं च ते शौचं तच्छौचं परमं मतम् ॥ १२

मनसा च प्रदीप्तेन ब्रह्मज्ञानबलेन च ।
स्नाता ये मानसे तीर्थे तज्ज्ञाः क्षेत्रज्ञदर्शनाः ॥ १३

समारोपितशौचस्तु नित्यं भावसमन्वितः ।
केवलं गुणसम्पन्नश् शुचिरेव नरस्सदा ॥ १४

शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत ।
पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि ॥ १५

यथा शरीरस्योद्देशाश् शरीरान् परिनिर्मिताः ।
तथा पृथिव्या भागास्तु पुण्यानि सलिलानि च ॥ १६

प्रार्थनाच्चापि तीर्थस्य स्नानाच्च पितृतर्पणात् ।
शोध्यं हि पातकं तीर्थे पूता यान्ति दिवं सुखम् ॥ १७

परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा ।
अतीव पुण्यास्ते भागास् सलिलस्य च तेजसा ॥ १८

मनसश्च पृथिव्याश्च पुण्यास्तीर्था महाबलाः ।
उभयोरेव यस्स्नातस् स सिद्धिं शीघ्रमाप्नुयात् ॥ १९

यथा फलं क्रियाहीनं क्रिया फलविवर्जिता ।
नेह साधयते कार्यं समायुक्तस्तु सिध्यति ॥ २०

नित्यं शरीरशौचेन नित्यं शौचान्वितश्शुचिः ।
ततस्सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

---

## ॥ शततमोऽध्यायः ॥

---

बृहस्पतिना युधिष्ठिरं प्रति देहिनां जननादिप्रकारनिरूपणम् ॥ १ ॥ तथा प्राणिनां दुष्कर्मविशेषफलतया तिर्यग्योनिविशेषेषु जननकथनम् ॥२॥

---

युधिष्ठिरः—

पितामह महाभाग सर्वशास्त्रविशारद ।
श्रोतुमिच्छामि मर्त्यानां संसारविधिमुत्तमम् ॥ १

केन वृत्तेन राजेन्द्र वर्तमाना नरा भुवि ।
प्राप्नुवन्त्युत्तमं स्थानं कथं च नरकं नृप ॥ २

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
प्रयान्त्यमुं लोकमितः को वैताननुगच्छति ॥ ३

भीष्मः—

दूरादायाति भगवान् बृहस्पतिरुदारधीः ।

[1]पृच्छेस्तं सुमहाभागम् एतद्गुह्यं सनातनम् ॥ ४
नैतदन्येन शक्यं हि वक्तुं केनचिदद्य वै ।
वक्ता बृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ॥ ५

वैशम्पायनः—

तयोस्संवदतोरेवं पार्थगाङ्गेययोस्तदा ।
आजगाम विशुद्धात्मा भगवान् स बृहस्पतिः ॥ ६
[2]ततो राजा समुत्थाय धृतराष्ट्रपुरोगमः ।
[3]पूजामनुपमां चक्रे सर्वे ते च सभासदः ॥ ७
ततो धर्मसुतो राजा भगवन्तं बृहस्पतिम् ।
उपगम्य यथान्यायं प्रश्नं पप्रच्छ धर्मवित् ॥ ८

युधिष्ठिरः—

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
मर्त्यस्य कस्सहायो वै पिता माता सुतो गुरुः ॥ ९
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
गच्छन्त्यमुं च लोकं हि क एताननुगच्छति ॥ १०

बृहस्पतिः—

एकः प्रसूते राजेन्द्र जन्तुरेको विनश्यति ।

1. ख—पृच्छ तं; घ—पृच्छेस्त्वं
2. क-घ—ततो युधिष्ठिरो राजा समुत्थाय विशारदः । [ पाठान्तरम् ]
3. क-घ—इदमर्धचतुष्टयं नास्ति

एकस्तरति दुर्गाणि गच्छत्येकश्च दुर्गतिम् ॥ ११

न सहायः पिता माता तथा भ्राता सुतो गुरुः ।
ज्ञातिसम्बन्धवर्गश्च मित्रवर्गस्तथैव च ॥ १२

मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
मुहूर्तमुपयुज्याथ ततो यान्ति पराङ्मुखाः ॥ १३

तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ।
तस्माद्धर्मस्सहायार्थे सेवितव्यस्सदा नृप ॥ १४

प्राणी धर्मसमायुक्तो गच्छते स्वर्गतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकायोपपद्यते ॥ १५

तस्मान्न्यायागतैरर्थैर् धर्मं सेवेत पण्डितः ।
धर्म एको मनुष्याणां सहायः पारलौकिकः ॥ १६

लोभान्मोहादनुक्रोशाद् भयाद्वाऽप्यबहुश्रुतः ।
नरः करोत्यधर्माणि परार्थे लोभमोहितः ॥ १७

धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत् त्रयमवाप्तव्यम् अधर्मपरिवर्जितम् ॥ १८

युधिष्ठिरः—

श्रुतं भगवतो वाक्यं धर्मयुक्तं परं हितम् ।
शरीरनिश्चयं ज्ञातुं बुद्धिश्च मम जायते ॥ १९

मृतं शरीररहितं सूक्ष्ममव्यक्ततां गतम् ।

अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति ॥ २०

बृहस्पतिः—

[1]पृथिवी वायुराकाशम् आपो ज्योतिरनन्तरम् ।
बुद्धिरात्मा च सहिता धर्मं पश्यन्ति नित्यदा ॥ २१

प्राणिनामिह सर्वेषां साक्षिभूता दिवानिशम् ।
एतैश्च सह धर्मोऽपि स जीवमनुगच्छति ॥ २२

त्वगस्थि मांसं शुक्रं च शोणितं च महामते ।
शरीरं वर्जितं त्वेतैर् जीवितेन विवर्जितम् ॥ २३

अतो धर्मसमायुक्तस् स जीवस्सुखमेधते ।
इह लोके परे चैव किं भूयः कथयामि ते ॥ २४

युधिष्ठिरः—

प्रदर्शितं च भवता यथा धर्मोऽनुगच्छति ।
एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्तते ॥ २५

बृहस्पतिः—

अन्नमश्नन्ति ते देवाश् शरीरस्था नरेश्वर ।
पृथिवी वायुराकाशम् आपो ज्योतिर्मनस्तथा ॥ २६

ततस्तृप्तेषु भूतेषु तेषु पञ्चसु वै नृप ।
मनष्षष्ठेषु राजेन्द्र रेतस्सम्पद्यते महत् ॥ २७

1. क-ब—अर्धचतुष्टयं नास्ति

ततो गर्भस्सम्भवति स्त्रीपुंसोः पार्थ सङ्गमे ।
एतत्ते सर्वमाख्यातं किं भूयः कथयामि ते ॥ २८

युधिष्ठिरः—

आख्यातमेतद्भवता गर्भस्सञ्जायते यथा ।
यथा जातस्तु पुरुषः प्रतिपद्येत् तदुच्यताम् ॥ २९

बृहस्पतिः—

आसन्नमात्रस्सततं तैर्भूतैरभिभूयते ।
विप्रमुक्तस्तु तैर्भूतैः पुनर्याति परां गतिम् ॥ ३०
स च भूतसमायुक्तः प्राप्नुते जीव एव ह ॥ ३०॥
एतस्य कर्म पश्यन्ति शुभं वा यदि वाऽशुभम् ।
देवताः पञ्च भूतास्ताः किं भूयश्श्रोतुमिच्छसि ॥ ३१॥

युधिष्ठिरः—

त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्विवर्जितः ।
[1]जीवस्सह वसन् कृत्स्नं सुखदुःखसहः प्रभो ॥ ३२॥

बृहस्पतिः—

भोगवश्यं कर्मवश्यं यातनावश्यमित्यपि ।
एतत्त्रयाणामासाद्य कर्मतस्सोऽश्नुते फलम् ॥ ३३॥
पुण्यपापसमायुक्तश् शीघ्रं रेतस्त्वमागतः ।
स्त्रीणां पुष्पं समासाद्य सूतिकाले लभेत तत् ॥ ३४॥

1. क-ब—जीवस्त्वभवदस्त्वेवं

यमस्य पुरुषैः क्लेशं यमस्य पुरुषैर्वधम् ।
दुःखं संसारचक्रे तु नरः पापो लभेदिह ॥ ३५॥

इह लोके परे चैव जन्मप्रभृति भारत ।
सुकृतं कर्म वै भुङ्क्ते धर्मस्य फलमाश्रितः ॥ ३६॥

यदि धर्मं यथाशक्ति जन्मप्रभृति सेवते ।
ततस्स पुरुषो भूत्वा सेवते नियतं सुखम् ॥ ३७॥

अथान्तरा तु धर्मस्याप्यधर्ममुपसेवते ।
सुखस्यानन्तरं दुःखं स जीवो ह्यधिगच्छति ॥ ३८॥

अधर्मेण समायुक्तो यमस्य विषयं गतः ।
महद्दुःखमवाप्नोति [1]तिर्यग्योनौ च जायते ॥ ३९॥

कर्मणा येन येनेह यस्यां योनौ प्रजायते ।
जीवो मोहसमायुक्तस् तन्मे निगदतश्शृणु ॥ ४०॥

यदेतदुच्यते नित्यम् अकृत्वा पुरुषस्सदा ।
क्रिमियोनिमवाप्नोति बहुशः पतितस्तथा ॥ ४१॥

अधीत्य चतुरो वेदान् द्विजो मोहसमन्वितः ।
पतितान् परिगृह्याथ खरयोनौ प्रजायते ॥ ४२॥

खरो जीवति वर्षाणि दश पञ्च च भारत ।
खरो मृतो बलीवर्दस् सप्त वर्षाणि जीवति ॥ ४३॥

---

1. क-ब—इतोऽर्धचतुष्टयं नास्ति

बलीवर्दो मृतश्चापि जायते ब्रह्मराक्षसः ।
ब्रह्मरक्षस्तु मासांस्त्रींस् ततो जायेत ब्राह्मणः ॥ ४४॥

पतितं याजयित्वा तु क्रिमियोनौ प्रजायते ।
तत्र जीवति वर्षाणि दश पञ्च च भारत ॥ ४५॥

क्रिमिभावात् प्रमुक्तस्तु ततो जायेत गर्दभः ।
गर्दभः पञ्च वर्षाणि पञ्च वर्षाणि सूकरः ॥ ४६॥

श्वा वर्षमेकं भवति ततो जायेत मानवः ॥ ४७

उपाध्यायस्त्रियां पापं शिष्यः कुर्यादबुद्धिमान् ।
स जीव इति संसारांस् त्रीनाप्नोति न संशयः ॥ ४८

वृको भवति राजेन्द्र ततः क्रव्यात्ततः खरः ।
ततः प्रेतः परिक्लिष्टः पश्चाज्जायेत ब्राह्मणः ॥ ४९

मनसाऽपि गुरोर्भार्यां यश्शिष्यो याति पापकृत् ।
सोऽधमान् याति संसारान् अधर्मेणेह चेतसा ॥ ५०

क्रिमियोनिमनुप्राप्तो वर्षमेकं स जीवति ।
स श्वयोनौ च सम्भूतस् त्रीणि वर्षाणि जीवति ॥ ५१

ततस्तु निधनं प्राप्तः क्रिमियोनौ च जायते ॥ ५१॥

यदि पुत्रसमं शिष्यं गुरुस्सन्ताडयेद्बहु ।
अकारणात् कामकरस् सोऽपि हिंस्रः प्रजायते ॥ ५२॥

पितरं मातरं चाऽपि यस्तु पुत्रोऽवमन्यते ।
सोऽपि राजन् मृतो जन्तुः पूर्वं जायेत गर्दभः ॥ ५३॥

खरो जीवति मासांस्तु दश श्वा तु चतुर्दश ।
बिडालस्सप्त मासांस्तु ततो जायेत मानवः ॥ ५४॥

मातापितरावाक्रुश्य शारिका सम्प्रजायते ।
ताडयित्वा तु तावेव जायते कच्छपो नृप ॥ ५५॥

कच्छपो दश वर्षाणि त्रीणि वर्षाणि शल्यकः ।
व्यालो भूत्वा तु षण्मासांस् ततो जायति मानुषः ॥ ५६॥

[1]भर्तृपिण्डमुपाश्नन् यो राजद्विष्टानि सेवते ।
सोऽपि पापसमाविष्टो मृतो भवति वानरः ॥ ५७॥

वानरो दश वर्षाणि पञ्च वर्षाणि सूकरः ।
श्वा सोऽपि भूत्वा षण्मासांस् ततो भवति मानवः ॥ ५८॥

असूयकः कुत्सितश्च चण्डालो दुःखमश्नुते ।
विश्वस्तहन्ता च नरो मीनो जायति दुर्मतिः ॥ ५९॥

भूत्वा मीनोऽष्टमासांस्तु मृगो जायति भारत ।
[2]मृगस्तु चतुरो मासांस् ततश्छागः प्रजायते ॥ ६०॥

---

1. क-च—अर्धचतुष्टयं नास्ति

2. क-च—एतदादि यथा मुद्रितं षड्विंशत्यर्धानि न सन्ति

छागस्तु निधनं प्राप्य पूर्णे संवत्सरे ततः ।
गौस्स सञ्जायते जन्तुस् ततो जायति मानवः ॥ ६१॥

धान्यान् यवांस्तिलान् माषान् कुलुत्थान् सर्षपांश्चणान् ।
कलमानथ मुद्गांश्च गोधूमानतसीस्तथा ॥ ६२॥

यस्तु धान्यापहर्ता च मोहाज्जन्तुरचेतनः ।
स जायते महाराज मूषिको निरपत्रपः ॥ ६३॥

ततः प्रेत्य महाराज पुनर्जायति सूकरः ।
सूकरो जातमात्रस्तु रोगेण म्रियते पुनः ॥ ६४॥

श्वा ततो जायते मूढः कर्मणा तेन पार्थिव ।
श्वा भूत्वा पञ्च वर्षाणि ततो जायति मानवः ॥ ६५॥

परदाराभिमर्शं तु कृत्वा जायति वै वृकः ।
श्वा सृगालस्ततो गृध्रो वलकङ्कादिकस्तथा ॥ ६६॥

भ्रातुर्जायां तु दुर्बुद्धिर् यो धर्षयति मोहितः ।
पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप ॥ ६७॥

सखिभार्यां गुरोर्भार्यां राजभार्यां तथैव च ।
प्रधर्षयित्वा कामाद्यस् ततो जायति सूकरः ॥ ६८॥

सूकरः पञ्च वर्षाणि [1]दश वर्षाणि श्वाऽपि च ।
विडालः पञ्च वर्षाणि दश वर्षाणि कुक्कुटः ॥ ६९॥

1. ख—पञ्चवर्षाणि श्वाऽपि च

पिपीलिका तु मासांस्त्रीन् वानरो मासमेव तु ।
एतानासाद्य संसारान् क्रिमियोनौ प्रजायते ॥ ७०॥

[1]तत्र जीवति मासांस्तु क्रिमियोनौ त्रयोदश ।
[2]तत्र धर्मक्षयं कृत्वा ततो जायति मानुषः ॥ ७१॥

उपस्थिते विवाहे च दाने यज्ञेऽपि वा विभो ।
मोहाच्चरति यो विघ्नं स मृतो जायते क्रिमिः ॥ ७२॥

क्रिमिर्जीवति वर्षाणि त्रयोदश युधिष्ठिर ।
[3]अधर्मस्य क्षयं कृत्वा ततो जायति मानवः ॥ ७३॥

पूर्वं दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति ।
सोऽपि राजन् मृतो जन्तुः क्रिमियोनौ प्रजायते ॥ ७४॥

तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर ।
अधर्मक्षयसंयुक्तस् ततो जायति मानवः ॥ ७५॥

[4]देवालयाधिपत्यं हि कुर्यात् तद्द्रव्यभक्षकः ।
श्वा भूत्वा सप्त जन्मानि ततो जायति मानवः ॥ ७६॥

द्विजग्रामाधिपत्यं हि कृत्वा ब्रह्मस्वभक्षकः ।
श्वानयोनिशतं प्राप्य चण्डालः पुल्कसस्ततः ॥ ७७॥

---

1. अ-क-ख—नास्तीदमर्धम्
2. अ-क-ख—अर्धचतुष्टयं नास्ति
3. अ—इदमर्धत्रयं नास्ति
4. अ-क-ख—अर्धचतुष्टयं नास्ति

[1]देवकार्यं परावृत्य पितृकार्यं तथाऽपि च ।
अनिर्वृत्य समश्नीत ततो जायति वायसः ॥ ७८॥

वायसो दश वर्षाणि ततो जायति कुक्कुटः ।
जायते वालुकस्तस्मान्मासादेकात्तु मानुषः ॥ ७९॥

ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते ।
सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ च जायते ॥ ८०॥

क्रौञ्चो जीवति मासांस्तु दश[2]द्वादश सप्त च ।
ततो निधनमापन्नो मानुषत्वमुपाश्नुते ॥ ८१॥

वृषलो ब्राह्मणीं गत्वा क्रिमियोनौ प्रजायते ।
तत्रापत्यं समुत्पाद्य ततो जायति मूषिकः ॥ ८२॥

कृतघ्नस्तु मृतो राजन् यमस्य विषयं गतः ।
[3]यमस्य पुरुषैः क्रुद्धैर् वधं प्राप्नोति दारुणम् ॥ ८३॥

कण्टकं मुद्गरं शूलम् अग्निकुम्भं च दारुणम् ।
असिपत्रवनं घोरं वालुकं कूटशाल्मलीम् ॥ ८४॥

एताश्चान्याश्च बह्वीश्च यमस्य विषयं गतः ।

---

1. क-ब—मातृकार्यमथोऽकृत्वा पितृकार्यमथापि च ।

[ पाठान्तरम् ]

ख—देवकार्यमपावृत्य

2. क-ब—द्वौ पञ्च सप्त च

3. क-घ—अर्धचतुष्टयं नास्ति

यातनाः प्राप्य तत्रोग्रास् ततो वध्यति भारत ॥ ८५॥

संसारचक्रमासाद्य क्रिमियोनौ प्रजायते ॥ ८६

क्रिमिर्भवति वर्षाणि दश पञ्च च दुर्मतिः ।
ततो गर्भं समासाद्य तत्र वै म्रियते शिशुः ॥ ८७

ततो गर्भशतैर्जन्तुर् बहुभिस्सम्प्रजायते ।
संसारांश्च बहून् गत्वा [1]ततस्तिर्यक् प्रजायते ॥ ८८

मृतो दुःखमनुप्राप्य बहुवर्षगणानिह ।
स पुनर्भवसंयुक्तस् ततः कूर्मः प्रजायते ॥ ८९

अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः ।
अर्थार्थी यदि वाऽमर्षान् स मृतो जायते खरः ॥ ९०

खरो जीवति वर्षे द्वे ततश्शस्त्रेण वध्यते ।
स मृतो मृगयोनौ तु नित्योद्विग्नोऽभिजायते ॥ ९१

मृगो वध्यति शस्त्रेण गते संवत्सरे तु सः ।
हतो मृगस्ततो मीनस् ततो जालेन पीड्यते ॥ ९२

मासे चतुर्थे सम्प्राप्ते श्वापदस्सम्प्रजायते ।
श्वापदो दश वर्षाणि द्वे च वर्षाणि पञ्च च ॥ ९३

ततस्तु निधनं प्राप्य कालपर्यायचोदितः ।
अधर्मस्य क्षयं प्राप्तस् ततो जायति मानुषः ॥ ९४

---

1. क-ब—ततस्सुना प्रजा

स्त्रियं हत्वा तु दुर्बुद्धिर् यमस्य विषयं गतः ।
बहून् क्लेशान् समासाद्य नरकानेकविंशतिम् ॥ ९५

ततः पश्चान्महाराज क्रिमियोनौ प्रजायते ।
चतुर्विंशतिवर्षाणि भूत्वा जायति मानुषः ॥ ९६

भोजनं चोरयित्वा तु मक्षिका जायते नरः ।
मक्षिकासङ्घवशगो बहून् मासान् भवत्युत ॥ ९७

ततः पापक्षयं गत्वा मानुषत्वमवाप्नुते ।
भक्ष्यं हृत्वा तु पुरुषो जले पाशः प्रजायते ॥ ९८

[1]तैलं चोरयते यस्तु तैलपायी स जायते ॥ ९८॥

तथा पिण्याकसम्मिश्रम् अशनं चोरयेन्नरः ।
स जायते [2]श्वानधनो दारुणो मूषिको नरः ॥ ९९॥

चोरयित्वा तु दुर्बुद्धिर् मधुदंशः प्रजायते ॥ १००

फलानि वानरो हृत्वाऽपूपं हृत्वा पिपीलिका ।
पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते ॥ १०१

हृत्वा पिष्टमपूपं तु कुम्भोलूकः प्रजायते ।
अयो हृत्वा तु दुर्बुद्धिर् वायसो जायते नरः ॥ १०२

कांस्यं हृत्वा तु हारीतः कपोतो रजतं तथा ।

---

1. घ—षोडशार्धानि न सन्ति
2. ख—भूमिधनो

हृत्वा तु काञ्चनं भाण्डं क्रिमियोनौ प्रजायते ॥ १०३

सर्पः कार्पासकं हृत्वा क्षौमं हृत्वा शशो भवेत् ।
छागश्चाप्याविकं हृत्वा कूर्मश्चर्मापहारकः ॥ १०४

वर्णान् हृत्वा तु पुरुषो मृतो जायति बर्हिणः ।
हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः ॥ १०५

वर्णकादीञ् शुभान् गन्धांश् चोरयित्वा तु मानवः ।
चञ्चरित्वमवाप्नोति राजँल्लोभपरायणः ॥ १०६

विश्वासेन तु निक्षिप्तं यो निगृह्णाति मानवः ।
स गतायुर्नरस्तादृङ् मत्स्ययोनौ प्रजायते ॥ १०७

मत्स्ययोनिमनुप्राप्य मृतो जायति मानुषः ।
मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते ॥ १०८

पापानि तु नरः कृत्वा तिर्यग्जायति भारत ।
न चात्मनः प्रयाणान्ते धर्मं जानाति कञ्चन ॥ १०९

ये पापानि नराः कृत्वा निरस्यन्ते व्रतैस्सदा ।
नित्यं दुःखसमायुक्ता व्याधितास्ते भवन्त्युत ॥ ११०

अपुमांसः प्रजायन्ते म्लेच्छाश्चापि न संशयः ।
नराः पापसमाचारा लोभमोहसमन्विताः ॥ १११

वर्जयन्ति च पापानि जन्मप्रभृति ये नराः ।

अरोगा रूपवन्तस्ते धनिनश्च भवन्त्युत ॥ ११२

स्त्रियोऽप्यनेन सङ्कल्पं कृत्वा पापमवाप्नुयुः ।
एतेषामेव जन्तूनां पत्नीत्वमुपयान्ति च ॥ ११३

प्रमत्तहरणे दोषास् सर्व एव प्रकीर्तिताः ।
एतद्वै लेशमात्रेण कथितं ते मयाऽनघ ॥ ११४

अपरस्मिन् कथायोगे भूयश्श्रोष्यासि भारत ।
[1]एतन्मया महाराज ब्रह्मणो वदतः पुरा ॥ ११५

सुरर्षीणां श्रुतं मध्ये पृष्टेन च यथातथम् ।
मयाऽपि तव कात्स्र्येन यथावदनुवर्णितम् ॥ ११६

एतच्छ्रुत्वा महाराज धर्मे कुरु मनस्सदा ॥ ११६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि शततमोऽध्यायः ॥ १०० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि शततमोऽध्यायः ॥ १०० ॥
[ अस्मिन्नध्याये ११६॥ श्लोकाः ]

---

1. ब—अर्धचतुष्टयं नास्ति

## ॥ एकाधिकशततमोऽध्यायः ॥

बृहस्पतिना युधिष्ठिरं प्रति पश्चात्तापादेर्ब्राह्मणेभ्योऽन्नदानस्य च पाप-परिहारोपायत्वकथनम् ॥

युधिष्ठिरः—

अधर्मस्य गतिर्ब्रह्मन् [1]कथिता वै ममानघ ।
धर्मस्य च गतिं श्रोतुम् इच्छामि वदतां वर ॥ १
कृत्वा पापानि कर्माणि कथं यान्ति शुभां गतिम् ॥ १॥

बृहस्पतिः—

कृत्वा पापानि कर्माणि अधर्मवशमागतः ।
मनसा विपरीतेन निरयं प्रतिपद्यते ॥ २॥
मोहा[2]दधर्मं यः कृत्वा पुनस्समनुतप्यते ।
मनस्समाधि[3]युक्तो हि न स सेवेत दुष्कृतम् ॥ ३॥
यथा यथा नरस्सम्यग् अधर्ममनुभाषते ।
समाहितेन मनसा विमुच्येत तथातथा ॥ ४॥
भुजङ्ग इव निर्मोकात् पूर्वान्मुक्तो जरान्वितान् ॥ ५
अथ दत्त्वा प्रदानानि विविधानि समाहितः ।
मनस्समाधिसंयुक्तस् सुगतिं प्रतिपद्यते ॥ ६

---

1. क-ग—उदिता 2. क-ग—दयमधं
3. ख—संयुक्तो

प्रदानानि तु वक्ष्यामि यानि दत्त्वा युधिष्ठिर ।
नरः कृत्वाऽप्यकार्याणि तथा धर्मेण युज्यते ॥ ७

सर्वेषामेव दानानाम् अन्नं श्रेष्ठमुदाहृतम् ।
पूर्वमन्नं प्रदातव्यम् [1]ऋजुना धर्ममिच्छता ॥ ८

प्राणा ह्यन्नं मनुष्याणां तस्माज्जन्तुश्च जायते ।
अन्ने प्रतिष्ठितो लोकस् तस्मादन्नं प्रकाशते ॥ ९

अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ।
अन्नस्य तु प्रदानेन स्वर्गमाप्नोति मानवः ॥ १०

तन्न्यायलब्धं दातव्यं द्विजेभ्योऽन्नमनुत्तमम् ।
स्वाध्यायमुदितेभ्योऽपि प्रहृष्टेनान्तरात्मना ॥ ११

यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं दश ।
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥ १२

ब्राह्मणानां सहस्राणि दश भोज्य युधिष्ठिर ।
नरोऽधर्मात् प्रमुच्येत पापेष्वभिरतस्सदा ॥ १३

भैक्ष्येणापि समाहृत्य दद्यादन्नं द्विजेषु वै ।
सुवर्णदानात् पापानि नश्यन्ति सुबहून्यपि ॥ १४

दत्त्वा वृत्तिकरीं भूमिं पातकेनापि मुच्यते ।
[2]पारायणैः पुराणानां मुच्यते पातकैर्द्विजः ॥ १५

---

1 अ—इतश्चत्वारः पादा न सन्ति 2. अ-क-घ—पारायणैश्च द्वात्रिंशत्

गायत्र्याश्चैव लक्षेण गोसहस्रस्य तर्पणात् ।
वेदार्थं ज्ञापयित्वा तु शुद्धान् विप्रान् यथार्थतः ॥ १६

सर्वत्यागादिभिश्चापि मुच्यते पातकैर्द्विजः ।
सर्वातिथ्यं परं ह्येषां तस्मादन्नं परं स्मृतम् ॥ १७

अहिंसन् ब्राह्मणान् नित्यं न्यायेन परिपाल्य च ।
क्षत्रियस्तरसा प्राप्तमन्नं दद्याच्छुभार्जितम् ॥ १८

द्विजेभ्यो वेदवृद्धेभ्यः प्रयच्छं[1]स्तु समाहितः ।
तेनापोहति धर्मात्मा दुष्कृतं कर्म पाण्डव ॥ १९

षड्भागपरिशुद्धं च कृषेर्भागमुपार्जितम् ।
वैश्यो दद्याद् द्विजातिभ्यः पापेभ्यः परिमुच्यते ॥ २०

अवाप्य प्राणसन्देहं कार्कश्येन समार्जितम् ।
अन्नं दद्याद् द्विजातिभ्यश् शूद्रः पापात् प्रमुच्यते ॥ २१

औरसेन बलेनान्नम् आर्जयित्वाऽविहिंसकः ।
यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि सेवते ॥ २२

न्यायेनावाप्तमन्नं तु नरो लोभविवर्जितः ।
द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात् प्रमुच्यते ॥ २३

अन्नमोजस्करं लोके दत्त्वोजस्वी भवेन्नरः ॥ २३॥

शूद्रान्नं नैव भोक्तव्यं विप्रैर्धर्मपरायणैः ।

1. क-ब — स्तुष्टिमाश्रितः

आपद्येव स्वदासानां भोक्तव्यं स्वयमुद्यतम् ॥ २४॥

सर्वावस्थं मनुष्येण न्यायेनान्नमुपार्जितम् ।
कार्यं पात्रगतं नित्यम् अन्नं हि परमा गतिः ॥ २५॥

अन्नस्य हि प्रदानेन नरो दुर्गान् [1]न सेवते ।
तस्मादन्नं प्रदातव्यम् अन्यायपरिवर्जितम् ॥ २६॥

नित्यं ब्राह्मणपूर्वंतु भोक्तव्यं शक्तितो द्विजैः ।
अवन्ध्यं दिवसं कुर्याद् अन्नपानीयदानतः ॥ २७॥

भोजयित्वा दशशतम् इह वेदविदां नरः ।
न्यायधर्मार्थविदुषाम् इतिहासविदामपि ॥ २८॥

न याति नरकं घोरं न दरिद्रश्च जायते ।
सर्वकामसमायुक्तः प्रेत्य च प्राप्नुते फलम् ॥ २९॥

एवं [2]सुखसमायुक्तो रमते विगतज्वरः ।
रूपवान् कीर्तिमांश्चैव प्रजावान् ज्ञानवान् भवेत् ॥ ३०॥

एतत्ते सर्वमाख्यातम् अन्नदानफलं महत् ।
मूलमेतद्धि धर्माणां प्रदानं चैव भारत ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

---

1. क-ब—न यातिवै 2. क-घ—सत्सु समा

## ॥ द्व्यधिकशततमोऽध्यायः ॥

बृहस्पतिना युधिष्ठिरं प्रत्यहिंसाप्रशंसनम् ॥

युधिष्ठिरः—

अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः ।
तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥ १

बृहस्पतिः—

सर्वाण्येतानि धर्मस्य पृथग्द्वाराणि नित्यशः ।
शृणु सङ्कीर्त्यमानानि षडेव भरतर्षभ ॥ २

[1]हन्त निश्श्रेयसं जन्तोर् अहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं दान्तो विद्वान् समाचरेत् ॥ ३

त्रिदण्डं सर्वभूतेषु निधाय पुरुषश्शुचिः ।
कामक्रोधौ च संयम्य ततस्सिद्धिमवाप्नुते ॥ ४

अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनस्सुखमन्विच्छन् स प्रेत्य न सुखी भवेत् ॥ ५

आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः ।
त्यक्तदण्डो जितक्रोधस् स प्रेत्य सुखमेधते ॥ ६

सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥ ७

1. घ—तत

न तत् परस्य सन्दध्यात् प्रतिकूलं यदात्मनः ।
एष सङ्ग्राहको धर्मः कामादन्यः प्रवर्तते ॥ ८

प्रख्यापने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ९

[1]यथा परः प्रक्रमते परेषु
तथा परः प्रक्रमते परस्मिन् ।
निषेवते स्वसमो जीवलोके
यथा धर्मो नैपुणेनोपदिष्टः ॥ १०

वैशम्पायनः—

इत्युक्त्वा तं सुरगुरुर् धर्मराजं युधिष्ठिरम् ।
दिवमाचक्रमे धीमान् पश्यतामेव नस्तदा ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
[अस्मिन्नध्याये ११ श्लोकाः]

---

1. अ—यथा परः प्रक्रमते परेषु च तथा परः [पाठान्तरम्]
क—यथा परः प्रक्रमते परस्मिन् ।
निषेवते स्वस्वमार्गं जीवलोके [पाठान्तरम्]
ब—यथा पुनः प्रक्रमते परेषु च
तथा परं प्रक्रमते परस्मिन् ।
निषेवते स्वस्वर्गमार्गं जीवलोके
यथा धर्मो नैपुणेनोपदिष्टः ॥ [पाठान्तरम्]

## ॥ त्र्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति हिंसाया मांसभक्षणस्य च गर्हणम् ॥

युधिष्ठिरः—

ततो युधिष्ठिरो राजा शरतल्पे पितामहम् ।
पुनरेव महाराज पप्रच्छ वदतां वरः ॥ १

ऋषयो ब्राह्मणा देवाः प्रशंसन्ति [1]पितामह ।
अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात् ॥ २

भीष्मः—

कर्मणा न नरः कुर्वन् हिंसां पार्थिवसत्तम ।
वाचा च मनसा चैव ततो दुःखात् प्रमुच्यते ॥ ३

चतुर्विधैषा निर्दिष्टाऽप्यहिंसा ब्रह्मवादिभिः ।
एकैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ॥ ४

यथा पशुश्चतुष्पादस् त्रिभिः पादैर्न तिष्ठति ।
तथैवेयं महीपाल प्रोच्यते कारणैस्त्रिभिः ॥ ५

यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येव विलीयन्ते पदजातानि कौञ्जरे ॥ ६

एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा ।

1. क-ख—महामते

कर्मणा लिप्यते जन्तुर् वाचा च मनसैव च ॥ ७

पूर्वं तु मनसा त्यक्त्वा त्यजेद्वाचाऽथ कर्मणा ।
हिंसां तु नोपयुञ्जीत तथा हिंसा चतुर्विधा ॥ ८

काये मनसि वाक्येऽपि दोषा ह्येते [1]प्रकीर्तिताः ।
न भक्षयन्त्यतो मांसं तपोयुक्ता मनस्विनः ॥ ९

दोषांस्तु भक्षणे राजन् मांसस्येह निबोध मे ॥ ९॥

पुत्रमांसोपमं जातं खादते यो विचेतनः ।
मातापितृसमायोगे पुत्रत्वं जायते यथा ॥ १०॥

रसश्च हृदि जिह्वायां ज्ञानं प्रज्ञायते यथा ।
तथा शास्त्रेषु नियतं रागो ह्यास्वादतां गतः ॥ ११॥

संस्कृतासंस्कृतं पक्वं लवणालवणं तथा ।
[2]प्रज्ञायते यथा भावो यथा पीतं निरुच्यते ॥ १२॥

भेरीं शङ्खमृदङ्गाद्यांस् तन्त्रीशब्दांश्च पुष्कलान् ।
निषेविष्यन्ति वै मन्दा मांसभक्षाः कथं नराः ॥ १३॥

परेषां धनधान्यानां हिंसकास्तावकास्तथा ।
प्रशंसकाश्च मांसस्य नित्यं स्वर्गे बहिष्कृताः ॥ १४॥

अचिन्तितमनिर्दिष्टम् असङ्कल्पितमेव च ।

---

1. ख—प्रतिष्ठिताः

2. ख—प्रजायते यथा भावस् तथा चिन्ता निरुध्यते।

रसगृद्ध्याऽभिभूता वै प्रशंसन्ति फलार्थिनः ॥ १५॥

प्रशंसा ह्येव मांसस्य दोषकल्पफलान्विता ॥ १६

भस्म विष्ठा क्रिमिर्वाऽपि निष्ठा यस्येदृशी ध्रुवा ।
स कायः परपीडाभिः कथं धार्यो विपश्चिता ॥ १७

जीवितं हि परित्यज्य बहवस्साधवो जनाः ।
स्वमांसैः परमांसानि परिपाल्य दिवं गताः ॥ १८

एवमेषा महाभाग चतुर्भिः कारणैस्स्मृता ।
अहिंसाऽतीव निर्दिष्टा सर्वधर्मार्थसंहिता ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

---

## ॥ चतुरधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मांसभक्षणाभक्षणयोः क्रमेण निन्दाप्रशंसने ॥

युधिष्ठिरः—

अहिंसा परमो धर्म इत्युक्तं बहुशस्त्वया ।
श्राद्धेषु च भवानाह पितॄणां मांसमीप्सितम् ॥ १

मांसैर्बहुविधैः प्रोक्तस् तथा श्राद्धविधिः पुरा ।
अहत्वा च कुतो मांसम् एवमेतद्विरुध्यते ॥ २

जातो नः संशयो धर्मे मांसस्य परिवर्जने ।
दोषो भक्षयतः कस्य कस्याभक्षयतो गुणः ॥ ३

हत्वा भक्षयतो वाऽपि परेणापि हृतस्य वा ।
हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ॥ ४

एतदिच्छामि तत्त्वेन कथ्यमानं त्वयाऽनघ ।
निश्चयेन चिकीर्षामि धर्ममेतं सनातनम् ॥ ५

कथमायुरवाप्नोति कथं भवति सत्त्ववान् ।
कथमव्यङ्गतामेति लक्षण्यो जायते कथम् ॥ ६

भीष्मः—

[1]मांसस्याभक्षणाद्राजन् यो धर्मः कुरुपुङ्गव ।

1. क-ख—मांसस्य भ; घ—मांसस्य भक्षणे

तं मे शृणु यथातत्त्वं यश्चास्य विधिरुत्तमः ॥ ७

रूप[1]मव्यङ्गतामायुर् बुद्धिं सत्त्वं बलं स्मृतिम् ।
प्राप्तुकामैर्नरैर्हिंसा वर्जनीया कृतात्मभिः ॥ ८

ऋषीणां तत्र संवादो बहुशः कुरुपुङ्गव ।
बभूव तेषां तु मतं यत्तच्छृणु युधिष्ठिर ॥ ९

यो यजेदश्वमेधेन मासि मासि [2]यतव्रतः ।
वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर ॥ १०

सप्तर्षयो वालखिल्यास् तथैव च मरीचिपाः ।
[3]मांसस्याभक्षणं राजन् प्रशंसन्ति मनीषिणः ॥ ११

न भक्षयति यो मांसं न च हन्यान्न घातयेत् ।
स मित्रं सर्वभूतानां मनुस्स्वायम्भुवोऽब्रवीत् ॥ १२

अधृष्यस्सर्वभूतानां विश्वास्यस्सर्वजन्तुषु ।
साधूनां सम्मतो नित्यं भवेन्मांसं विवर्जयन् ॥ १३

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अविश्वास्योऽवसीदेत् स इति होवाच नारदः ॥ १४

ददाति यजते चापि तपस्वी च भवत्यपि ।

---

1. क-घ—मङ्गल्यता
2. अ—धृतव्रतः
3. क-ख-घ—मांसस्य भक्षणं

मधुमांसनिवर्तीति प्राह चैवं बृहस्पतिः ॥ १५

मासि मास्यश्वमेधेन यो यजेत शतं समाः ।
न खादयति यो मांसं सममेतन्मतं मम ॥ १६

सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति मांसस्य परिवर्जनात् ॥ १७

सर्वे वेदा न तत् कुर्युस् सर्वे यज्ञाश्च भारत ।
यद् भक्षयित्वा मांसानि पश्चादपि निवर्तते ॥ १८

भक्षयित्वा निमित्तेऽपि दुष्करं कुरुते तपः ।
दुष्करं हि रसज्ञेन मांसस्य परिवर्जनम् ॥ १९

व्यक्तं व्रतमिदं श्रेष्ठं सर्वप्राण्यभयप्रदम् ॥ १९॥

सर्वभूतेषु यो विद्वान् ददात्यभयदक्षिणाम् ।
दाता भवति लोके स प्राणानां नात्र संशयः ॥ २०॥

एवं हि परमं धर्मं प्रशंसन्ति मनीषिणः ॥ २१

प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि वै तथा ।
आत्मौपम्येन गन्तव्यं बुद्धिमद्भिर्महात्मभिः ॥ २२

विकीर्ण[1]कर्णकेनापि तृणप्रस्पन्दने भयम् ।
किं पुनर्हन्यमानानां तरसा जीवितात्मनाम् ॥ २३

1. ख—कण्टकेनापि

अरोगाणामपापानां पापैर्मांसोपजीविभिः ।
मृत्युतो भयमस्तीति शङ्कायां दुःखमुत्तरम् ॥ २४

धर्मस्यायतनं तस्मान्मांसस्य परिवर्जनम् ॥ २४॥

अहिंसा परमो धर्म अहिंसा परमं तपः ।
अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते ॥ २५॥

न हि मांसं तृणात् काष्ठाद् उपलाद्वाऽपि जायते ।
हत्वा जन्तुं [1]ततोर्मांसं ततो दोषोऽस्ति भक्षणे ॥ २६॥

स्वाहास्वधामृतभुजो देवास्सत्यार्जवप्रियाः ।
राक्षसेन्द्रभयान्मुक्तास् सर्वभूतपरायणाः ॥ २७॥

कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च ।
रात्रावहनि सन्ध्यासु चत्वरेषु सभासु च ॥ २८॥

अमांसभक्षणाद्राजन् न भयं तेषु विद्यते ॥ २९

[2]शरण्यस्सर्वभूतानां विश्वास्यस्सर्वजन्तुषु ।
अनुद्वेगकरो लोके न चाप्युद्विजते सदा ॥ ३०

यदि चेत् खादको न स्यान्न तदा घातको भवेत् ।
खादकः खादनार्थाय तं घातयति वै नरः ॥ ३१

अभक्ष्यमेतदिति वै इति हिंसा निवर्तते ।

---

1. क-ख-घ—ततो मांसं
2. क-ख-घ—अर्धद्वयं नास्ति

खादतः क्रमतो हिंसा मृगादीनां प्रवर्तते ॥ ३२

यस्माद्ग्रसति चैवायुर् हिंस्यादीनां महाद्युते ।
तस्मात्तु वर्जयेन्मांसं य इच्छेद्भूतिमात्मनः ॥ ३३

[1]त्रातारं नाधिगच्छन्ति शूद्राः प्राणिविहिंसकाः ।
उद्वेजकास्तु भूतानां यथा व्याला मृगास्तथा ॥ ३४

धनेन [2]सान्तको हन्ति खादकश्चापि भोगतः ।
[3]सूचको वधबन्धाचेत्येष हि त्रिविधो वधः ॥ ३५

लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव च ।
संसर्गाद्वाऽथ पापानाम् अधर्मो रुचितो नृणाम् ॥ ३६

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नराष्ट्रे वसति यत्र यत्राभिजायते ॥ ३७

धन्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
मांसस्याभक्षणं प्राहुर् नियताः परमर्षयः ॥ ३८

इदं तु खलु कौन्तेय श्रुतमासीत् पुरा मया ।
मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ॥ ३९

योऽपि खादति मांसानि प्राणिनां जीवितार्थिनाम् ।

---

1. क-घ—अर्धचतुष्टयं नास्ति
2. ख—क्षीणको हन्ति घातकश्चापि भागतः
3. ख—घातको वधबन्धार्थमित्येष

सदा भवति वै पापः प्राणिहन्ता तथैव सः ॥ ४०

[1]अखादनानुमोदी च नैव दुष्येत मानवः ।
योऽनुमन्यति हन्यन्तं सोऽपि दोषेण लिप्यते ॥ ४१

अधृष्यस्सर्वभूतानाम् आयुष्मानरुजस्सुखी ।
[2]भवेत्त्वभक्षयन् मांसं दयावान् प्राणिनामिह ॥ ४२

हिरण्यदानैर्गोदानैर् भूमिदानैश्च सर्वशः ।
मांसस्याभक्षणे धर्मो विशिष्टस्स्यादिति श्रुतम् ॥ ४३

अप्रोक्षितं वृथामांसं विधिहीनं न भक्षयेत् ।
भक्षयन् निरयं याति नरो नास्त्यत्र संशयः ॥ ४४

प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाङ्क्षया ।
अल्पदोषमिति ज्ञेयं विपरीते तु विद्यते ॥ ४५

खादकस्य कृते जन्तुं यो हन्यात् पुरुषाधमः ।
महादोषकरस्तत्र [3]घातको न तु खादकः ॥ ४६

इज्यायज्ञश्रुतिवृत्तैर् यो मार्गैरबुधोऽधमः ।
हन्यान्मांसस्य गृध्नी यस् स वै नरकभाजनः ॥ ४७

भक्षयित्वाऽपि यो मांसं पश्चादपि निवर्तते ।

1. क-घ—इदमर्धं नास्ति
2. क—अर्धचतुष्टयं नास्ति; ब—अर्धपञ्चकं नास्ति
3. क-घ—खादतो ननु पातकम्; ख—खादको ननु घातकः

[1]तस्यापि सुमहान् धर्मो यः पापाद्विनिवर्तते ॥ ४८

आहर्ता चानुमन्ता च [2]विशस्ता क्रयविक्रयी ।
संस्कर्ता चोपभोक्ता च घातकास्सर्व एव ते ॥ ४९

इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम् ।
[3]पुराणमृषिभिर्जुष्टं वेदेषु परिनिश्चितम् ॥ ५०

प्रवृत्तिलक्षणे धर्मे फलार्थिभिरभिद्रुते ।
यथोक्तं राजशार्दूल न तु तन्मोक्षकारणम् ॥ ५१

हविष्यैस्संस्कृतैर्मन्त्रैः प्रोक्षिताभ्युक्षितश्शुचिः ।
वेदोक्तेन प्रमाणेन पितृणां प्रक्रियासु च ॥ ५२

प्रवृत्तिधर्मणा भक्ष्यं नान्यथा मनुरब्रवीत् ॥ ५२॥

अस्वर्ग्यमयशस्यं च रक्षोवद्भरतर्षभ ॥ ५३

य इच्छेत् पुरुषोऽत्यन्तम् आत्मानं निरुपद्रवम् ।
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ॥ ५४

विधिनाऽपि नरः पूर्वं मांसं राजन् न भक्षयेत् ॥ ५४॥

श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त विद्वांसः पुण्यलोकपरायणाः ॥ ५५॥

---

1. ख—इदमर्धं नास्ति
2. क-घ—हिंसिता
3. क-ख-घ—प्रमाण

ऋषिभिस्संशयं पृष्टो वसुश्चेदिपतिः पुरा ।
अभक्ष्यमिति मांसस्य प्राह भक्ष्यमिति प्रभो ॥ ५६॥

आकाशान्मेदिनीं प्राप्तस् ततस्स पृथिवीपतिः ।
यस्तदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ ५७॥

प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्यास्सर्वदैवत्याः प्रोक्षितास्तापसैर्मृगाः ॥ ५८॥

क्रिया ह्येव न हीयन्ते पितृदैवतसंश्रिताः ।
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ ५९॥

इदं तु शृणु राजेन्द्र मांसस्याभक्षणे गुणाः ॥ ६०

यस्तु वर्षशतं पूर्णं तपस्तप्येत् सुदारुणम् ।
यश्चैव वर्जयेन्मांसं सममेतन्मतं मम ॥ ६१

कौमुद्यास्तु विशेषेण [1]शुक्लपक्षे नराधिप ।
वर्जयेत् सर्वमांसानि धर्मो ह्यत्र विधीयते ॥ ६२

मांसं तु कौमुदे पक्षे वर्जितं सर्वराजभिः ।
सर्वभूतात्मभूतैस्तैर् विज्ञातार्थपरावरैः ॥ ६३

नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषा चानरण्येन दिलीपरघुसूनुभिः ॥ ६४

कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।

---

1. ख—इतः अष्टौ पादा न सन्ति

नृगेण विष्वगश्वेन तथैव शशबिन्दुना ॥ ६५

युवनाश्वेन च तथा शिबिनौशीनरेण च ।
श्वेतच्छत्रेण राजेन्द्र सोमकेनाष्टकेन च ॥ ६६

मनुना रन्तिदेवेन वसुना सृञ्जयेन च ।
दुष्यन्तेन करूशेन रामालर्कनलैस्तथा ॥ ६७

[1]विचकाश्वेन निमिना जनकेन च धीमता ।
सिलेन पृथुना चैव वीरसेनेन चैव ह ॥ ६८

इक्ष्वाकुणा युवाश्वेन श्वेतेन सगरेण च ।
एतैश्चान्यैश्च राजेन्द्र पुरा मांसं न भक्षितम् ॥ ६९

शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥ ६९॥

ब्रह्मलोके च तिष्ठन्ति ज्वलमानाश्श्रियाऽन्विताः ।
उपास्यमाना गन्धर्वैस् स्त्रीसहस्रैस्समावृताः ॥ ७०॥

तदेनमुत्तमं धर्मम् अहिंसाधर्मलक्षणम् ।
ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥ ७१॥

मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति ये नित्यं मद्यैश्चैव विवर्जिताः ॥ ७२॥

विशिष्टज्ञातिप्राधान्यं लभन्ते नात्र संशयः ॥ ७३

अहिंस्रो दानशीलश्च मधुमांसविवर्जितः ।

1. ख—पिचका; घ—व्यचक्राश्वेन

आपन्नश्चापदो मुच्येद् बद्धो मुच्येत बन्धनात् ॥ ७४

मुच्येत्तथाऽऽतुरो रोगाद् दुःखान्मुच्येत दुःखितः ।

तिर्यग्योनिं न गच्छेत रूपवांश्च भवेन्नरः ॥ ७५

[1]ऋद्धिमान् वै कुलश्रैष्ठ्यम् आप्नुयाच्च महद्यशः ॥ ७५॥

एतत्ते सर्वमाख्यातं मांसस्य परिवर्जने ।

प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्मितम् ॥ ७६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
[ अस्मिन्नध्याये ७६॥ श्लोकाः ]

---

## ॥ पञ्चाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मांसगतगुणकथनपूर्वकं तद्भक्षणगर्हणम् ॥ १ ॥
तथा दयाया अहिंसायाश्च प्रशंसनम् ॥ २ ॥

---

युधिष्ठिरः—

इमे वै मानुषा लोके भृशं मांसेषु गृद्धिनः ।

विसृज्य भक्ष्यान् विविधान् यथा रक्षोगणास्तथा ॥ १

अपूपान् विविधाकारान् शाकानि विविधानि च ।

---

1. ख—बुद्धि

पादपान् रससंयुक्तान् न चेच्छन्ति यथाऽऽमिषम् ॥ २
[1]न मन्ये रसतः किञ्चिन्मांसतोऽस्तीह किञ्चन ॥ २॥
तदिच्छामि गुणाञ् श्रोतुं मांसस्याभक्षणेऽपि वा ।
भक्षणे चैव ये दोषास् तत्पापस्य च मोक्षणम् ॥ ३॥
सर्वं तत्त्वेन धर्मज्ञ यथावदिह धर्मतः ।
किं वा भक्ष्यमभक्ष्यं वा सर्वमेतद्वदस्व मे ॥ ४॥

भीष्मः—

सर्वमेतन्महाबाहो यथा वदसि भारत ।
न मांसात् परमस्तीह रसतो विद्यते भुवि ॥ ५॥
क्षतक्षीणाभितप्तानां ग्राम्यधर्मरताश्च ये ।
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ॥ ६॥
सद्यो वर्धयति प्राणान् पुष्टिमग्र्यां ददाति च ।
नाशो भक्षणदोषस्य दानमेव [2]सदा मतम् ॥ ७॥
क्षुधितानां द्विजानां च सर्वेषां चापि जीवितम् ।
दत्त्वा भवति पूतात्मा श्रद्धया लोभवर्जितः ॥ ८॥
शिक्षयन्ति न याचन्ते दर्शयन्ति स्वमूर्तिभिः ।
अवस्थेयमदानस्य मा भूदेवं भवानिति ॥ ९॥

---

1. क-घ—ममान्ये शंसतः किञ्चिन्मांसतोऽस्तीह किञ्चन ।
[ पाठान्तरम् ]

2. क-घ—प्रसादकम् ; ख—सतां मतम्

[1]दानाद्यस्त्वशुचिर्मांसं पुनर्नैव च भक्षयेत् ॥ १०

न भक्ष्योऽभ्यधिकः कश्चिन्मांसादस्ति परन्तप ।
विवर्जने तु बहवो गुणाः कौरवनन्दन ॥ ११

ये भवन्ति मनुष्याणां तन्मे निगदतश्शृणु ॥ ११॥

स्वमांसं परमांसैर्यो विवर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मान्न नृशंसतरो नृप ॥ १२॥

न हि प्राणात् प्रियतरं लोके किञ्चन विद्यते ।
तस्माद्दयां नरः कुर्याद् यथाऽऽत्मनि तथा परे ॥ १३॥

शुक्राच्च तात सम्भूतिर् मांसस्येह न संशयः ।
खादनेन महान् दोषो मलेन स हि कल्प्यते ॥ १४॥

अहिंसालक्षणो धर्म इति वेदविदो विदुः ।
यदहिंस्रं भवेत् कर्म तत् कुर्यादात्मविन्नरः ॥ १५॥

पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
[2]विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यते ॥ १६॥

यज्ञार्थे पशवस्सृष्टा इत्यपि श्रूयते श्रुतिः ।
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते ॥ १७॥

क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।

---

1. क-ख—दानाक्षमश्शुचिर्मांसं पुनश्चैव न
2. ख—अर्धद्वयं नास्ति

[1]स्ववीर्योपार्जितं मांसं यथा भुञ्जन् न दुष्यते ॥ १८॥

आरण्यास्सर्वदैवत्याः प्रोक्षितास्सर्वशो मृगाः ।
अगस्त्येन पुरा राजन् मृगयाऽनेन पूज्यते ॥ १९॥

रक्षणार्थाय भूतानां हिंस्रान् हन्यान्मृगान् पुनः ।
नात्मानमपरित्यज्य मृगया नाम विद्यते ॥ २०॥

[2]समतामुपसङ्क्रम्य रूपं हन्यान्न वा नृप ।
अतो राजर्षयस्सर्वे मृगयां यान्ति भारत ॥ २१॥

न हि लिप्यन्ति दोषेण न चैतत् पातकं भुवि ॥ २२

न ह्यतस्सदृशं किञ्चिद् इह लोके परत्र च ।
यत् सर्वेष्वपि भूतेषु दया कौरवनन्दन ॥ २३

न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनाम् ॥ २४

अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुम ॥ २५

क्षुतं च स्खलितं चैव पतितं क्लिन्नमाहुतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च ॥ २६

---

1. क-घ—इतः अर्धचतुष्टयं नास्ति
2. क-घ—तपस्यामुप

नैतं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुञ्चन्ति भयकालेषु मोक्षयन्ति च ये परान् ॥ २७

प्राणदानात् परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरः कश्चिदस्तीति नश्श्रुतम् ॥ २८

अनिष्टं सर्वभूतानां मरणं नाम भारत ।
मृत्युकाले हि भूतानां सद्यो जायति वेपथुः ॥ २९

व्याधिजन्मजरादुःखैर् नित्यं संसारसागरे ।
जन्तवः परिक्लिष्यन्ते मरणादुद्विजन्ति च ॥ ३०

गर्भवासेऽपि पच्यन्ते क्षाराम्लकटुकै रसैः ।
मूत्रश्लेष्मपुरीषाणां स्पर्शैश्च भृशदारुणैः ॥ ३१

जाताश्चाप्यवशास्तत्र भिद्यमानाः पुनः पुनः ।
[1]हन्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः ॥ ३२

कुम्भीपाके न पच्यन्ते तां तां योनिमुपागताः ।
आक्रम्य मार्यमाणाश्च त्रस्यन्त्यन्ये पुनः पुनः ॥ ३३

नात्मनोऽस्ति प्रियतरः पृथिवीमनुसृत्य ह ।
तस्मात् प्राणिषु सर्वेषु दयावानात्मवान् भवेत् ॥ ३४

सर्वमांसानि यो राजन् यावज्जीवं न भक्षयेत् ।
आश्वासं विपुलं स्थानं प्राप्नुयान्नात्र संशयः ॥ ३५

1. क-ख-घ—अर्धत्रयं नास्ति

ये भक्षयन्ति मांसानि भूतानां जीवनैषिणाम् ।
भक्ष्यन्ते तेऽपि तैर्भूतैर् इति मे नास्ति संशयः ॥ ३६

मां भक्षयति यस्मात् स भक्षयिष्ये तमप्यहम् ।
एतन्मांसस्य मांसत्वं ततो बुद्ध्यस्व भारत ॥ ३७

घातको हन्यते नित्यं तथा बध्येत बन्धकः ।
आक्रुष्टः क्रुश्यते राजन् द्वेष्टा द्वेष्यत्वमाप्नुयात् ॥ ३८

येन तेन शरीरेण यद्यत् कर्म करोति यः ।
तेन तेन शरीरेण तत्तत् फलमुपाश्नुते ॥ ३९

अहिंसा परमो धर्मस् तथाऽहिंसा परो दमः ।
अहिंसा परमं दानम् अहिंसा परमं तपः ॥ ४०

अहिंसा परमो यज्ञस् तथाऽहिंसा परं बलम् ।
अहिंसा परमं शौचम् अहिंसा परमं सुखम् ॥ ४१

अहिंसा परमं मित्रम् अहिंसा परमा मतिः ।
अहिंसा परमं मन्त्रम् अहिंसा परमा श्रुतिः ॥ ४२

[1]सर्वयज्ञेषु वा दानं सर्वतीर्थेषु चाप्लवः ।
सर्वदानफलं वाऽपि नैव तुल्यमहिंसया ॥ ४३

अहिंसा स्यात् तपोऽक्षय्यम् अहिंस्रो जायते सदा ।
अहिंस्रस्सर्वभूतानां यथा माता यथा पिता ॥ ४४

1. क-ख—सर्वतीर्थे

एतत्फलमहिंसायां भूयश्च कुरुपुङ्गव ।
न शक्या ये गुणा वक्तुम् इह वर्षशतैरपि ॥ ४५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
[ अस्मिन्नध्याये ४५ श्लोकाः ]

---

## ॥ षडधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति कीटोपाख्यानकथनम् ॥ १ ॥ कीटेन व्यासं प्रति स्वपूर्वजन्मवृत्तान्तकथनम् ॥ २ ॥ व्यासेन कीटाय राज्यदानम् ॥ ३ ॥ कीटेन व्यासचोदनया राज्यपालनपूर्वकं जन्मान्तरे ब्राह्मण्यलाभेन तपश्चर्यादिना ब्रह्मलोकाधिगमः ॥ ४ ॥

---

युधिष्ठिरः—

अकामाश्च सकामाश्च ये हता स्मिन् महाहवे ।
कां योनिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह ॥ १

[1]दुःखं प्राणपरित्यागः पुरुषाणां महामृधे ।
जानामि चाहं धर्मज्ञ प्राणत्यागं सुदुष्करम् ॥ २

समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे ।

---

1. क-घ—मुख्यः प्राण

संसारेऽस्मिन् समे जाताः प्राणिनोऽभिरताः कथम् ॥ २

कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः ॥ ३॥

भीष्मः—

समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे ।
संसारेऽस्मिन् [1]समे जाताः प्राणिनः पृथिवीपते ॥ ४॥

निरता येन भावेन तत्र मे शृणु कारणम् ।
सम्यक् त्वयमनुप्रश्नस् त्वयुक्तश्च युधिष्ठिर ॥ ५॥

अत्र ते वर्तयिष्यामि पुरावृत्तमिदं नृप ।
द्वैपायनस्य संवादं [2]कीटस्य च युधिष्ठिर ॥ ६॥

ब्रह्मभूतश्चरन् विप्रः कृष्णद्वैपायनः पुरा ।
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥ ७॥

गतिज्ञस्सर्वभूतानां रुतज्ञश्च शरीरिणाम् ।
सर्वज्ञस्त्वरितं दृष्ट्वा कीटं वचनमब्रवीत् ॥ ८॥

वैशम्पायनः—

कीट त्वं त्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।
क्व च वासस्तदाचक्ष्व कुतस्ते भयमागतम् ॥ ९॥

कीटः—

शकटव्रजस्य महतो घोषं श्रुत्वा भयं महत् ।

---

1. क-घ—परे  2. क-घ—अस्य चालेयुं

आगतं मे महाबुद्धे स्वन एष हि दारुणः ॥ १०॥

श्रूयते तु स मा हन्याद् इतस्तस्मादपाक्रमे ।
श्वसतां च श्रृणोम्येवं गोवृषाणां प्रचोद्यताम् ॥ ११॥

वहतां सुमहाभारं सन्निकर्षे स्वनं प्रभो ।
नृणां च संवाहयतां श्रूयन्ते विविधास्स्वनाः ॥ १२॥

वोढुमस्मद्विधैरेष न शक्यः कीटयोनिभिः ।
तस्मादहमपाक्रामे भयात्तस्मात् सुदारुणात् ॥ १३॥

दुःखं मृत्युर्हि भूतानां जीवितं च सुदुर्लभम् ।
अतो भीतः पलायामि गच्छेयं नापदं यथा ॥ १४॥

भीष्मः—

इत्युक्तस्स च तं प्राह कुतः कीट सुखं तव ।
मरणं ते सुखं मन्ये तिर्यग्योनौ हि वर्तसे ॥ १५॥

शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान् बहून् ।
नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ॥ १६॥

कीटः—

सर्वतो निरतो जीव इहापि च सुखं मम ।
चेतयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् ॥ १७॥

इहापि विषयस्सर्वो यथादेहं प्रवर्तितः ।
मनुष्यास्तिर्यगाश्चैव पृथग्भोगा विशेषतः ॥ १८॥

अहमासं मनुष्येषु शूद्रो बहुधनः पुरा ।
अब्रह्मण्यो नृशंसश्च कदर्यो बुद्धिजीवनः ॥ १९॥

वाक्श्लक्ष्णो ह्यकृतप्रज्ञो द्वेष्टा विश्वस्य कर्मणः ।
मिथोगुप्तनिधिर्नित्यं परस्वहरणे रतः ॥ २०॥

भृत्यातिथिजनाश्चापि गृहेऽपर्यशिता मया ।
मात्सर्यात् स्वादुकामेन नृशंसेन बुभुक्षता ॥ २१॥

देवार्थं पितृयज्ञार्थं न च श्राद्धं कृतं मया ।
न दत्तमन्नकामेषु दत्तमन्नं लुनामि च ॥ २२॥

गुप्तं शरणमाश्रित्य भयेषु शरणागतान् ।
त्यक्त्वाऽकस्मान्निशायां च न दत्तमभयं मया ॥ २३॥

धनं धान्यं प्रियान् दारान् दानं वासस्तथाऽद्भुतम् ।
श्रियं दृष्ट्वा मनुष्याणाम् असूयामि निरर्थकम् ॥ २४॥

श्रियः परं सुखं दृष्ट्वा यातनाया बुभूषकः ।
[1]त्रिवर्गहन्ता चान्येषाम् आत्मकामानुवर्तकः ॥ २५॥

नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया ।
[2]मृत्वा तदनुतप्ये वै त्यक्त्वा प्रियमिवात्मजम् ॥ २६॥

शुभानामपि जानामि कृतानां कर्मणां फलम् ।
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया ॥ २७॥

---

1. घ—श्रीवत्सहन्ता 2. घ—कृत्वा

सकृज्जातिगुणोपेतस् सङ्गत्या गृहमागतः ।
अतिथिः पूजितो ब्रह्मंस् तेन मां नाजहात् स्मृतिः ॥ २८॥

कर्मणामेव चैवाहं सुखाशामिव लक्षये ।
तच्छ्रोतुमहमिच्छामि त्वत्तश्श्रेयस्तपोधन ॥ २९॥

व्यासः—

शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे ।
तथैव कीट तत् कर्म येन त्वं न प्रमुह्यसे ॥ ३०॥

अहं हि दर्शनादेव तारयामि तपोबलात् ।
तपोबलं हि बलवद् बलमन्यन्न विद्यते ॥ ३१॥

जानामि पापैस्स्वकृतैर् गतं त्वां कीट कीटताम् ।
अवाप्स्यसि परं धर्मं मानुष्ये यदि मन्यसे ॥ ३२॥

कर्मभूमिकृतं देवा भुञ्जते तिर्यगाश्च ते ॥ ३३

धन्या अपि मनुष्येषु कामार्थाश्च यथा गुणाः ।
वाग्बुद्धिपाणिपादैश्च समुपेता विपश्चितः ॥ ३४

किमायाति मनुष्यस्य मन्दस्यार्थस्य जीवतः ।
दैवे यः कुरुते पूजां विप्राग्निशशिसूर्ययोः ॥ ३५

ब्रुवन्नपि कथां पुण्यां तत्र कीटत्वमेष्यसि ।
गुणभूतानि भूतानि तत्र त्वमुपपभोक्ष्यसे ॥ ३६

क्रमात्तेऽहं विनेष्यामि ब्रह्मत्वं यदि चेच्छसि ॥ ३६॥

भीष्मः—

स तथेति प्रतिश्रुत्य कीटस्समवतिष्ठत ॥ ३७

तमृषिं द्रष्टुमगमत् सर्वास्वन्यासु योनिषु ॥ ३७॥

श्वाविङ्गोधावराहाणां तथैव मृगपक्षिणाम् ।
श्वपाकवैश्यशूद्राणां क्षत्रियाणां च योनिषु ॥ ३८॥

स कीटस्त्वेवमाख्यातम् ऋषिणा सत्यवादिना ।
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्ना कृताञ्जलिः ॥ ३९॥

कीटः—

इदं तदतुलं स्थानम् ईप्सितं दशभिर्गुणैः ।
यदहं प्राप्य कीटत्वम् आगतो राजपुत्रताम् ॥ ४०॥

वहन्ति मामतिबलाः कुञ्जरा हेममालिनः ।
स्यन्दनेषु च काम्भोजा युक्तास्समरवाजिनः ॥ ४१॥

उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति माम् ।
सबान्धवस्सहामात्यो ह्यश्नामि पिशितोदनम् ॥ ४२॥

गृहेषु सुनिवासेषु सुखेषु शरणेषु च ।
परार्ध्येषु महाभाग स्वपामि च सुपूजितः ॥ ४३॥

सर्वेष्वपररात्रेषु सूतमागधवन्दिनः ।
स्तुवन्ति मां यथा देवं महेन्द्रमिव वन्दिनः ॥ ४४॥

प्रसादात् सत्यसन्धस्य भवतोऽमिततेजसः ।

यदहं कीटतां प्राप्य स्मृतिजातो जुगुप्सिताम् ॥ ४५॥

ननु नाशोऽस्ति पापस्य यन्मयोपचितं पुरा ॥ ४६

व्यासः—

शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ।

ममैतद्दर्शनं प्राप्तं तच्चैव सुकृतं पुरा ॥ ४७

तिर्यग्योनौ हि जातेन मम चाभ्यर्चितं तथा ॥ ४७॥

इतस्त्वं राजपुत्रत्वाद् ब्राह्मणत्वमवाप्स्यसि ।

गोब्राह्मणकृते प्राणान् हित्वाऽऽत्मीयान् रणाजिरे ॥ ४८॥

भीष्मः—

राजपुत्रस्सुखं प्राप्य ईजे चैवाप्तदक्षिणैः ।

अथ चोद्दीप्यत स्वर्गे प्रभूतोऽप्यव्ययस्सुखी ॥ ४९॥

तिर्यग्योन्याश्शूद्रतामभ्युपैति

शूद्रो वैश्यत्वं क्षत्रियत्वं च वैश्यः ।

व्रतश्लाघी क्षत्रियो ब्राह्मणत्वं

स्वर्गं पुण्यं ब्राह्मणस्साधुवृत्तः* ॥ ५०॥

क्षत्रधर्ममनुप्राप्तस् स्मरन्नेव स वीर्यवान् ।

त्यक्त्वा हि कीटतां राजंश् चचार विपुलं तपः ॥ ५१॥

[1]तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-ध—इदमर्धं नास्ति

आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ॥ ५२॥

व्यासः—

क्षात्रादेव व्रतात् कीट भूतानां परिपालनम् ।
क्षात्रादेव व्रतात् त्वं हि ततो विप्रत्वमेष्यसि ॥ ५३॥

[1]पाहि सर्वाः प्रजास्सम्यक् शुभाशुभविदात्मवान् ।
शुभैस्संविभजन् कामैर् अशुभानां च भावनैः ॥ ५४॥

आत्मवान् भव सुप्रीतस् स्वधर्माचरणे रतः ।
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ ५५॥

भीष्मः—

सोऽथारण्यादिह प्रेत्य पुनरेव युधिष्ठिर ।
महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पालयन् ॥ ५६॥

अचिरेणैव कालेन कीटः पार्थिवसत्तम ।
प्रजापालनधर्मेण प्रेत्य विप्रत्वमागतः ॥ ५७॥

ततस्तु ब्राह्मणं द्रष्टुं पुनरेव महायशाः ।
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ ५८॥

व्यासः—

इह ब्रवीमि ते श्रेयो मा व्यथिष्ठाः कथञ्चन ।
शुभकृच्छुभयोनीषु पापकृत् पापयोनिषु ॥ ५९॥

1. अ—अर्धचतुष्टयं नास्ति

उपपद्यस्व धर्मज्ञ यथाधर्मं यथाश्रुतम् ।
[1]तस्मान्मृत्युभयात् कीट मा व्यथिष्ठाः कथञ्चन ॥ ६०॥

धर्मलाभात् परं न स्यात् तस्माद्धर्मं चरोत्तमम् ॥ ६१

कीटः—

सुखात् सुखतरं प्राप्तो भगवंस्त्वत्कृतेऽद्य वै ।
धर्ममूलं शुभं प्राप्य पापं नष्टमिहाद्य वै ॥ ६२

भीष्मः—

भगवद्वचनात् कीटो ब्राह्मण्यं प्राप्य दुर्लभम् ।
अकरोत् पृथिवीं राजन् यज्ञयूपशताङ्किताम् ॥ ६३

ततस्सालोक्यमगमद् ब्रह्मणो ब्रह्मवित्तमः ॥ ६३॥

अथ पापहरं कीटः पार्थ ब्रह्म सनातनम् ।
स्वकर्मफलनिर्वृत्तं व्यासस्य वचनं यथा ॥ ६४॥

कुरुक्षेत्रे युद्धहताः पुण्ये क्षत्रियपुङ्गवाः ।
सम्प्राप्तास्ते गतिं पुण्यां तन्मा त्वं शोच पुत्रक ॥ ६५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
[ अस्मिन्नध्याये ६५॥ श्लोकाः ]

---

1. क-ख—इदमर्धं नास्ति

## ॥ सप्ताधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति विद्यातपोदानानां मध्ये दानप्रशंसनपरव्यास-मैत्रेयसंवादानुवादः ॥

युधिष्ठिरः—

विद्या तपश्च दानं च किमेतेषां विशिष्यते ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च ॥ २

कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन् ।
वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले ॥ ३

तमुपच्छन्नमासीनं ज्ञात्वा स मुनिसत्तमः ।
[1]अर्चित्वा भोजयामास मैत्रेयो मुनिसत्तमम् ॥ ४

भुक्त्वा तदन्नममृतं गुणवत् सार्वकामिकम् ।
प्रतिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ॥ ५

तमुत्स्मयन्तं सम्प्रेक्ष्य मैत्रेयः कृष्णमब्रवीत् ॥ ५॥

1. क-घ—इतोऽर्धचतुष्टयं नास्ति

मैत्रेयः—

कारणं ब्रूहि धर्मात्मन्नुत्स्मयिष्ठाः कुतश्च ते ।
तपस्विनो धृतिमतः प्रमादस्समुपागतः ॥ ६॥

एतदिच्छामि ते विद्वन्नभिवाद्य प्रणम्य च ।
आत्मनश्च तपोभाग्यं सुखभाग्यं ममेह च ॥ ७॥

तपोभाग्यान्महाभाग सुखभाग्यात्तथैव च ।
पृथगाचरितं तात पृथगाचरितात्मनः ॥ ८॥

कल्पान्तरमहं मन्ये विशिष्टमपि यत्त्वया ॥ ९

व्यासः—

अतिच्छेदातिवादाभ्यां स्मयो यन्मामुपागतः ।
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ १०

त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं प्रति ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव परं वदेत् ॥ ११

इदानीं चैव नः कृत्यं परस्ताच्च परं स्मृतम् ॥ ११॥

अल्पो हि तादृशो न्यासो भवत्युत महाफलः ।
तृषिताय तु यद्दत्तं हृदयेनानसूयता ॥ १२॥

तोषितास्त्रिदशा यत्ते दत्त्वैतद्दर्शनं मम ।
अजैषीर्महते लोकान् महायज्ञैरिव प्रभो ॥ १३॥

अतो दानपवित्रेण प्रीतोऽस्मि तपसैव हि ।
दूरात् पुण्यवतो गन्धः पुण्यस्यैव च दर्शनात् ॥ १४॥

पुंण्यश्च वाति गन्धस्ते मन्ये कर्मविधानतः ।
दानकर्मार्जितस्तात यथैवाप्यनुलेपनात् ॥ १५॥

शुभं सर्वपवित्रेभ्यो दानमेव परं द्विज ।
यानीमान्युत्तमानीति वेदोक्तानि प्रशंसति ॥ १६॥

तेषां श्रेष्ठतमं दानम् इति मे नास्ति संशयः ॥ १७

दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ये वै प्राणस्य दातारस्_ तेषु धर्मः प्रतिष्ठितः ॥ १८

यथा वेदास्स्वधीताश्च यथा चेन्द्रियसंयमः ।
सर्वत्यागो यथा चेह तथा दानमनुत्तमम् ॥ १९

त्वं हि तात सुखादेव शुभमेष्यसि शोभनम् ।
सुखात् सुखानुसम्प्राप्तिम् आप्नुते मतिमान् नरः ॥ २०

तन्नः प्रत्यक्षमेवेदम् उपलक्ष्यमसंशयम् ।
श्रीमन्तमाप्नुवन्त्यर्था दानं यज्ञास्ततस्सुखम् ॥ २१

सुखादेव परं दुःखं दुःखादन्यत् परं सुखम् ।
दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः ॥ २२

विविधानीह वृत्तानि नरस्याहुर्मनीषिणः ।

पुण्यमन्यत् पापमन्यन्न पुण्यं न च पापकम् ॥ २३

न वृत्तं मन्यतेऽन्यस्य मन्यतेऽन्यस्य पापकम् ।
यथा स्वकर्म निर्वृत्तं न पुण्यं न च पापकम् ॥ २४

नित्यं चाकृपणो भुङ्क्ते स्वजनैर्देहि याचतः ।
भाग्यक्षयेण क्षीयन्ते नोपभोगेन सञ्चयाः ॥ २५

रमस्वैधस्व मोदस्व देहि दाने रमस्व च ।
न त्वामतिगमिष्यन्ति वैद्या न च तपस्विनः ॥ २६

भीष्मः—

एवमुक्तः प्रत्युवाच मैत्रेयः कर्मपूर्वकः ।
अत्यन्तं श्रीमति कुले जातः प्राज्ञो बहुश्रुतः ॥ २७

मैत्रेयः—

असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् ।
अनुज्ञातस्तु भवता किञ्चिद्ब्रूयामहं विभो ॥ २८

व्यासः—

यद्यदिच्छसि मैत्रेय यावद्यावत्तथा तथा ।
ब्रूहि तत्त्वं महाप्राज्ञ शुश्रूषे वचनं तव ॥ २९

मैत्रेयः—

निर्दोषं निर्मलं चैव वचनं सत्यसंहितम् ।
विद्यातपोभ्यां हि भवान् भावितात्मा न संशयः ॥ ३०

भवतो भावितात्मत्वा [1]ल्लाभोऽयं सुमहान् मम ।
भूयो बुद्ध्याऽनुपश्यामि सुसंवृद्धतपा इव ॥ ३१

अपि मे दर्शनादेव भवतोऽभ्युदयो महान् ।
मन्ये तव प्रसादोऽयं बुद्धिकर्मस्वभावतः ॥ ३२

तपश्श्रुतं च योनिश्चाप्येते ब्राह्मण्यकारणम् ।
त्रिभिर्गुणैस्समुदितस् स्नातो भवति वै द्विजः ॥ ३३

तस्मिंस्तृप्ते च तृप्यन्ति पितरो दैवतानि च ।
न हि श्रुतवतः किञ्चिद् अधिकं ब्राह्मणादृते ॥ ३४

असंस्कारात् क्षत्रवैश्यौ नश्येते ब्राह्मणादृते ।
शूद्रो नश्यत्यशुश्रूषुर् आश्रमाणां यथार्हतः ॥ ३५

यथा हि [2]सुकृते क्षेत्रे फलं विन्दति मानवः ।
एवं दत्त्वा श्रुतवते फलं दाता समश्नुते ॥ ३६

ब्राह्मणश्चेन्न विद्येत श्रुतवृत्तोपसंहितः ।
प्रतिग्रहीता दानस्य वृथा स्याद्धनिनां धनम् ॥ ३७

अन्नं ह्यविद्वान् हन्त्येवम् अविद्वांसं च हन्ति तत् ।
तच्चान्यं हन्ति यच्चान्यत् स भुक्त्वा हन्यतेऽबुधः ॥ ३८

[3]प्रगृह्यान्नमदन् विद्वान् पुनर्जनयतीश्वरः ।

1. ख—ह्देवोऽयं सुमहान् मम 2. क-घ—संस्कृ
3. ख—प्राहुर्ह्यन्यदविद्वांसः

स दाता जायते तस्मात् सूक्ष्म एवं व्यतिक्रमः ॥ ३९

ब्राह्मं ह्यनुपयोगी यो ददद्यान्नमसंशयम् ।
यस्तारयति वै विद्वान् पितॄन् देवान् सदाऽमृतान् ॥ ४०

यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः ।
न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः ॥ ४१

यत्रैव ब्राह्मणस्तात श्रुतवृत्तोपसंहितः ।
तत्र दानफलं पुण्यम् इह चामुत्र चाश्नुते ॥ ४२

ये योनिशुद्धास्सततं तपस्यभिरता भृशम् ।
दानाध्ययनसम्पन्नास् ते नः पूज्यतमास्सदा ॥ ४३

तैर्हि सद्भिः कृतः पन्था देवयानो न मुह्यते ।
ते हि स्वर्गस्य नेतारो यज्ञवाहास्सनातनाः* ॥ ४४

भीष्मः—

एवमुक्तस्स भगवान् मैत्रेयं प्रत्यभाषत ॥ ४४॥

व्यासः—

दिष्ट्यैतत् त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी ।
लोको ह्ययं गुणानेव भूयिष्ठं सम्प्रशंसति ॥ ४५॥

रूपमानो वयोमानो धनविद्यामदस्तथा ।
दिष्ट्या नाभिभवन्ति त्वां दैवतोऽयमनुग्रहः ॥ ४६॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तत्ते बहुगुणं दानं वर्तयिष्यामि तच्छृणु ॥ ४७

धर्मशास्त्राणि च तथा याश्च काश्चित् प्रवृत्तयः ।
तानि चैव पुरस्कृत्य प्रवृत्तानि यथाक्रमम् ॥ ४८

अहं दानं प्रशंसामि भवानपि तपश्श्रुते ।
तपः पवित्रं वेदस्य तपस्स्वर्गस्य साधनम् ॥ ४९

तपसा महदाप्नोति विद्यया चेति नश्श्रुतम् ।
तपसैवाप्यनुवृतो यच्चान्यदपि दुष्कृतम् ॥ ५०

यद्यद्धि किञ्चित् सन्धाय पुरुषस्तप्यते तपः ।
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः ॥ ५१

दुरन्वयं दुष्प्रधर्षं [1]दुष्प्रापं दुरतिक्रमम् ।
सर्वं वै तपसाऽभ्येति दिष्टं हि बलवत्तरम् ॥ ५२

[2]सुरापस्स्वर्णहारी च भ्रूणहा गुरुतुल्पगः ।
तपसा तरते सर्वम् एनसश्च प्रमुच्यते ॥ ५३

सर्वो वैद्यश्च चक्षुष्मान् अपि यादृक् च तादृशः ।
तपस्विनस्तथैवाहुस् ताभ्यां कार्यं सतां गतम् ॥ ५४

पूर्वं पूज्याश्श्रुतधनास् तथैव च तपस्विनः ।
दानप्रदास्तथा प्रेत्य प्राप्नुवन्तीह च श्रियम् ॥ ५५

1. ख-घ—दुरापं
2. क-ब—अर्धचतुष्टयं नास्ति

इमं च ब्रह्मलोकं च लोकं च बलवत्तरम् ।
अन्नदानैस्सुकृतिनः प्रतिपद्यन्ति लौकिकम् ॥ ५६

पूजिताः पूजयन्त्येते मानिता मानयन्ति च ।
अदाता यत्र यत्रैति सर्वतस्सम्प्रणुद्यते ॥ ५७

अकर्ता चैव कर्ता च लभते यस्य यादृशम् ।
यद्येवोर्ध्वं यद्यवाक् च लोकान्नयसि यास्यति ॥ ५८

प्राप्स्यसे त्वन्नपानानि यानि दास्यसि कर्हिचित् ।
मेधाव्यसि कुले जातश्श्रुतवाननृशंसवान् ॥ ५९

कौमारदारो व्रतवान् मैत्रेय निरतो भव ॥ ५९॥

दानेन तपसा चैव विष्णोरभ्यर्चनेन च ।
ब्राह्मणस्स महाभाग तरेत् संसारसागरात् ॥ ६०॥

स्वकर्मशुद्धसत्त्वानां तपोभिर्निर्मलात्मनाम् ।
विद्यया गतमोहानां तारणाय हरिस्स्मृतः ॥ ६१॥

तदर्चनपरो नित्यं तद्भक्तस्तं नमस्कुरु ।
तद्भक्ता न विनश्यन्ति ह्यष्टाक्षरपरायणाः ॥ ६२॥

प्रणवोपासनपरा परमार्थपरास्त्विह ।
एतैः पावय चात्मानं सर्वपापमपोह्य च ॥ ६३॥

स्वस्ति प्राप्नुहि मैत्रेय [1]गृहान् साधु व्रजाम्यहम् ।

---

1. क-ब—गृह्ण साधु

एतन्मनसि कर्तव्यं श्रेय एव भविष्यति ॥ ६४॥

भीष्मः—

तं प्रणम्याथ मैत्रेयः कृत्वा चापि प्रदक्षिणम् ।
स्वस्ति प्राप्नोमि भगवन्नित्युवाच कृताञ्जलिः ॥ ६५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
[ अस्मिन्नध्याये ६५॥ श्लोकाः ]

## ॥ अष्टाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पतिव्रताधर्मप्रतिपादकशाण्डिल्यसुमनासंवादानुवादः ॥

युधिष्ठिरः—

स्त्रीणां हि समुदाचारं सर्वधर्मविदां वर ।
श्रोतुमिच्छाम्यहं त्वत्तस् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

सर्वज्ञां सर्वधर्मज्ञां देवलोके मनस्विनीम् ।
कैकेयीं सुमनां नाम शाण्डिल्यः पर्यपृच्छत ॥ २

शाण्डिल्यः—

केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्वपापानि देवलोकं त्वमागता ॥ ३

सुमना—

अहितानि च वाक्यानि सर्वाणि परुषाणि च ।
अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रवम् ॥ ४

देवतानां पितॄणां च ब्राह्मणानां च पूजने ।
अप्रमत्ता सदा युक्ता श्वश्रूश्वशुरवर्तिनी ॥ ५

पैशुन्येन प्रवर्तामि न ममैतन्मनो गतम् ।
अद्वारे न च तिष्ठामि परं न कथयामि च ॥ ६

असद्वा हसितं किञ्चिद् अहितं पापकर्मणा ।
परस्यैव रहस्ये वा न प्रवर्तामि सर्वथा ॥ ७

कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम् ।
आसनेनोपसङ्गम्य पूजयामि समाहिता ॥ ८

यद्यच्च नाभिजानाति यद्भोज्यं नाभिनन्दति ।
भक्ष्यं वाऽप्यथ वा लेह्यं तत् सर्वं वर्जयाम्यहम् ॥ ९

कुटुम्बार्थे समानीतं यत् किञ्चित् कार्यमेव तु ।
पुनरुत्थाय तत् सर्वं कारयामि करोमि च ॥ १०

अग्निसंरक्षणपरा गृहशुद्धिं च कारये ।
कुमारान् पालये नित्यं कुमारीं परिशिक्षये ॥ ११

आत्मप्रियाणि हित्वाऽपि गर्भसंरक्षणे रता ।
बालानां वर्जये नित्यं शापं कोपं प्रतापनम् ॥ १२

अविक्षिप्तानि धान्यानि नान्नविक्षेपणं गृहे ।
[1]रक्तवत् स्पृहये गेहे गावस्सयवसोदकाः ॥ १३

समुद्गम्य च शुद्धाऽहं भिक्षां दद्यां द्विजातिषु ॥ १३॥

प्रवासं यदि मे भर्ता याति कार्येण केनचित् ।
मङ्गलैर्बहुभिर्युक्ता भवामि नियता सदा ॥ १४॥

अञ्जनं रोचनं चैव स्नानं माल्यानुलेपनम् ।
प्रसाधनं च निष्क्रान्ते नाभिनन्दामि भर्तरि ॥ १५॥

नोत्थापयामि भर्तारं [2]सुखसुप्तमहं सदा ।
नोत्थापये सुखं सुप्तं ह्यातुरं पालये पतिम् ॥ १६॥

आतुरेष्वपि कार्येषु तेन तुष्यति मे मनः ।
नायासयामि भर्तारं कुटुम्बार्थमहं सदा ॥ १७॥

गुप्तगुह्या [3]सदा चास्मि सुसम्मृष्टनिवेशना ॥ १८

इदं धर्मफलं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारी सा स्वर्गलोके महीयते ॥ १९

भीष्मः—

एतमाख्याय सा देवी सुमना वै तपस्विनम् ।
पतिधर्मं महाभागा जगामादर्शनं तदा ॥ २०

---

1. क-घ—रत्नवत्
2. ख—इतः षट् पादा न सन्ति
3. घ—सदाचारा

यश्चेदं पाण्डवाख्यानं पठेत् पर्वणि पर्वणि ।
स देवलोकं सम्प्राप्य नन्दने सुसुखी भवेत् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

---

## ॥ नवाधिकशततमोऽध्यायः ॥

युधिष्ठिरेणावश्यवेद्योपास्येषु परावधिं पृष्टेन भीष्मेण तं प्रति श्रीनारायणमहिमप्रतिपादकनारदपुण्डरीकसंवादानुवादपूर्वकं नारायणस्य सर्वोत्कृष्टत्वेन वेद्यत्वोपास्यत्वविधानम् ॥

---

युधिष्ठिरः—

यज्ज्ञेयं परमं कृत्यम् अनुष्ठेयं महात्मभिः ।
सारं मे सर्वशास्त्राणां वक्तुमर्हस्यनुग्रहात् ॥ १

भीष्मः—

श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् ।
श्रोतव्यं च त्वया सम्यग् ज्ञातव्यं च विशां पते ॥ २

पुण्डरीकः पुरा विप्रः पुण्यतीर्थे [1]जपान्वितः ।

---

1. क-घ—तपो

नारदं परिपप्रच्छ श्रेयो [1]योगपरं मुनिम् ॥ ३

नारदश्चाब्रवीदेनं [2]ब्रह्मणोक्तं महात्मना ॥ ३॥

नारदः—

शृणुष्वावहितस्तात ज्ञानयोगमनुत्तमम् ।
अप्रभूतं प्रभूतार्थं वेदशास्त्रार्थसारकम् ॥ ४॥

यः परः प्रकृतेः प्रोक्तः पुरुषः पञ्चविंशकः ।
स एव सर्वभूतात्मा नर इत्यभिधीयते ॥ ५॥

नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणस्स्मृतः ॥ ६॥

नारायणाज्जगत् सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते ॥ ७॥

नारायणः परं ब्रह्म तत्त्वं नारायणः परः ।
परादपि परश्चासौ तस्मान्नास्ति परात् परम् ॥ ८॥

वासुदेवं तथा विष्णुम् आत्मानं च तथा विदुः ।
संज्ञाभेदैस्स एवैकस् सर्वशास्त्राभिसंस्कृतः ॥ ९॥

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा ॥ १०॥

तस्मात्त्वं गहनान् सर्वास् त्यक्त्वा शास्त्रार्थविस्तरान् ।

---

1. ख—योगिवरं; घ—योगिपरं मुनिः

2. क—ब्राह्मणं तं महामनाः; घ—ब्राह्मणोक्तं महामनाः

अनन्यचेता ध्यायस्व नारायणमजं विभुम् ॥ ११॥

मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि सद्गतिमाप्नोति किं पुनस्तत्परायणः ॥ १२॥

नमो नारायणायेति यो वेद ब्रह्म शाश्वतम् ।
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ॥ १३॥

श्रवणान्मननाच्चैव गीतिस्तुत्यर्चनादिभिः ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ॥ १४॥

लिप्यते न स पापेन नारायणपरायणः ।
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ॥ १५॥

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
केशवाराधनं हित्वा नैव यान्ति परां गतिम् ॥ १६॥

जन्मान्तरसहस्रेषु दुर्लभा तद्गता मतिः ।
तद् भक्तवत्सलं देवं समाराधय सुव्रत ॥ १७॥

भीष्मः—

नारदेनैवमुक्तस्तु स विप्रोऽभ्यर्चयद्धरिम् ।
स्वप्नेऽपि पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ॥ १८॥

किरीटकुण्डलधरं लसच्छ्रीवत्सकौस्तुभम् ।
[1]तं दृष्ट्वा देवदेवेशं प्राणमत् सम्भ्रमान्वितः ॥ १९॥

1. ब—ततस्सम्पूजितस्सर्वैस् स योगनिलयो हरिः । [अधिकः पाठः]

अथ कालेन महता तथा प्रत्यक्षतां गतः ।
संस्तुतस्स्तुतिभिर्वेदैर् देवगन्धर्वकिन्नरैः ॥ २०॥

अथ तेनैव भगवान् आत्मलोकमधोक्षजः ।
गतस्सम्पूजितस्सर्वैस् स योगनिलयो हरिः ॥ २१॥

तस्मात् त्वमपि राजेन्द्र तद्भक्तस्तत्परायणः ।
अर्चयित्वा यथायोगं भजस्व पुरुषोत्तमम् ॥ २२॥

अजरममरमेकं ध्येयमाद्यन्तशून्यं
सगुणमगुणमाद्यं स्थूलमत्यन्तसूक्ष्मम् ।
निरुपममुपमेयं योगिविज्ञानगम्यं
त्रिभुवनगुरुमीशं सम्प्रपद्यस्व विष्णुम् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
[ अस्मिन्नध्याये २३॥ श्लोकाः ]

## ॥ दशाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति साम्नः सकलवशीकरणोपायत्वे दृष्टान्ततया रक्षोब्राह्मणसंवादानुवादः ॥

---

युधिष्ठिरः—

साम्ना वाऽपि प्रदानेन ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥ १

भीष्मः—

साम्ना प्रसाद्यते कश्चिद् दानेन च तथाऽपरः ।
पौरुषीं प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥ २

गुणांस्तु शृणु वै राजन् सान्त्वस्य पुरुषर्षभ ।
दारुणान्यपि भूतानि सान्त्वेनामन्त्रयेद्यथा ॥ ३

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ॥ ४

कश्चित्तु बुद्धिसम्पन्नो ब्राह्मणो विजने वने ।
गृहीतः कृच्छ्रमापन्नो [1]रक्षसा भक्षयिष्यता ॥ ५

सुबुद्धिश्श्रुतिसम्पन्नो दृष्ट्वा [2]तमतिभीषणम् ।

---

1. क-ब—अयं पादोऽनन्तरश्च न स्तः

2. क-ब—तमसि

[1]सामैवास्मै प्रयुञ्जानो न मुमोह न विव्यथे ॥ ६

रक्षस्तु वाचा सम्पूज्य प्रश्नं पप्रच्छ तं द्विजम् ॥ ६॥

रक्षः—

मोक्ष्यसे ब्रूहि मे प्रश्नं केनासि हरिणः कृशः ॥ ७

भीष्मः—

[2]मुहूर्तमथ सञ्चिन्त्य ब्राह्मणस्तं निरीक्ष्य सः ।
अभीतवदथाव्यग्रः प्रश्नं प्रतिजगाद ह ॥ ८

ब्राह्मणः—

विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः ।
विषयानतुलान् भुङ्क्षे तेनासि हरिणः कृशः ॥ ९

[3]एवं मित्राणि ते रक्षस् साधूनां चरितान्यपि ।
स्वदोषात्तु परित्यज्य तेनासि हरिणः कृशः ॥ १०

अवृत्त्या क्लिश्यमानो हि मृत्युप्रायान् विगर्हयन् ।
महार्थान् ध्यायसे नूनं तेनासि हरिणः कृशः ॥ ११

परकार्याधिकारस्थास् सद्गुणैरधमा नराः ।
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ १२

[4]गुणवन्निर्गुणानन्यान् नूनं पश्यसि सत्कृतान् ।

---

1. क-घ—सान्त्वमेव ; ख—साम्नैवास्मै
2. क-ख-घ—अर्धचतुष्टयं नास्ति
3. अ—अर्धचतुष्टयं नास्ति 4. ख—अर्धद्वयं नास्ति

[1]प्राज्ञैरप्यविनीतात्मा तेनासि हरिणः कृशः ॥ १३

[2]सम्पीड्यात्मानमार्यत्वात् परिभूय ततो ह्यरिः ।
जितं त्वां मन्यते साधो तेनासि हरिणः कृशः ॥ १४

क्लिश्यमानान् विमार्गेषु कामक्रोधधृतात्मनः ।
मन्येऽनुध्यायसि जनांस् तेनासि हरिणः कृशः ॥ १५

प्राज्ञैरपूजितो नूनं प्राज्ञैरप्यभिनिन्दितः ।
ह्रीमानमर्षी दुर्वृत्तस् तेनासि हरिणः कृशः ॥ १६

नूनमद्य सतां मध्ये तव वाक्यमनुत्तमम् ।
न भाति कालेऽभिहितं तेनासि हरिणः कृशः ॥ १७

श्रुतपूर्वान् दृष्टपूर्वान् कुपितान् हृदयप्रियान् ।
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ॥ १८

नूनमासञ्जयित्वा ते कृत्ये कस्मिंश्चिदीप्सिते ।
कश्चित् स्पृहयसे व्यर्थं तेनासि हरिणः कृशः ॥ १९

[3]परोक्षवादिभिर्मिथ्यादोषस्ते सम्प्रदर्शितः ।
तज्ज्ञैर्न पूज्यसे व्यक्तं तेनासि हरिणः कृशः ॥ २०

नूनं त्वां सद्गुणापेक्षं पूजयानं सुहृत्प्रजाः ।

---

1. क—प्राज्ञैराराधितो ह्यात्मा ; ब—प्राज्ञैराविशते नात्मा

2. अ—अर्धचतुष्टयं नास्ति

3. क—अर्धचतुष्टयमेकश्च पादो नास्ति ; ब—अर्धपञ्चकं नास्ति

मायावीति च जानन्ति तेनासि हरिणः कृशः ॥ २१

अन्तर्गतमभिप्रायं न नूनं लज्जयेच्छसि ।
विवक्तुं प्राप्तिशैथिल्यात् तेनासि हरिणः कृशः ॥ २२

[1]नानाबुद्धिरुचीँल्लोके मानुषान् नूनमिच्छसि ।
ग्रहीतुं स्वैर्गुणैस्सर्वांस् तेनासि हरिणः कृशः ॥ २३

असत्सु विनिविष्टेषु न गुणान् वदतस्स्वयम् ।
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥ २४

धर्मवृत्तश्रुतैर्हीनः पदं त्वं रजसाऽन्वितः ।
महत् प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ २५

तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम् ।
बन्धुवर्गो निगृह्णाति तेनासि हरिणः कृशः ॥ २६

सुदुर्विनीतः पुत्रो वा जामाता वा प्रमार्जकः ।
दारा वा प्रतिकूलास्ते तेनासि हरिणः कृशः ॥ २७

भ्रातरोऽतीव विषमाः पिता वा क्षुत्क्षतो मृतः ।
माता ज्येष्ठो गुरुर्वाऽपि तेनासि हरिणः कृशः ॥ २८

ब्राह्मणो वा हतो गौर्वा ब्रह्मस्वं वा हृतं पुरा ।
देवस्वं वाऽधिकं काले तेनासि हरिणः कृशः ॥ २९

1. घ—अयं श्लोको नास्ति

[1]हृतदारोऽथ वृद्धो वा लोके द्विष्टोऽथ वा नरैः ।
अविज्ञानेन वा वृद्धस् तेनासि हरिणः कृशः ॥ ३०

[2]वार्धक्यार्थं धनं दृष्ट्वा स्वा श्रीर्वाऽपि परैर्हृता ।
[3]वृत्तिर्वा दुर्जनापेक्षा तेनासि हरिणः कृशः ॥ ३१

[4]सम्पत्कालेन ते धर्मः क्षीणस्तात सुहृद्भवैः ।
असंन्यासमतिस्तत्र तेनासि हरिणः कृशः ॥ ३२

अविद्वद्भिरकार्यार्थैर् विद्याविक्रमदानजम् ।
यशः प्रार्थयसे नित्यं तेनासि हरिणः कृशः ॥ ३३

चिराभिलषितं किञ्चित् फलमप्राप्तमेव च ।
हृतमन्यैरुपहृतं तेनासि हरिणः कृशः ॥ ३४

नूनमात्मकृतं दोषम् अपश्यन् किञ्चिदात्मनि ।
अकारणेऽभिशस्तो हि तेनासि हरिणः कृशः ॥ ३५

[5]सुहृदां सम्भ्रमस्तानां तत्प्रामाण्यमजानताम् ।
आगस्कृत्तद्गुणैर्हीनस् तेनासि हरिणः कृशः ॥ ३६

साधून् गृहस्थान् दृष्ट्वा च तथा साधून् वनेचरान् ।

---

1. अ—अर्धद्वयं नास्ति
2. ख—वार्धक्याश्च ;   घ—पार्थक्यार्थं
3. ख—वृत्तिर्वाऽऽत्मजनापेक्षा
4. ख—अर्धचतुष्टयं नास्ति
5. क-घ—अर्धचतुष्टयं नास्ति ;   ख—अर्धद्वयं नास्ति

मुक्तांश्चावसथे सक्तांस् तेनासि हरिणः कृशः ॥ ३७

धर्ममर्थं च कामं च देशे चाभिहितं वचः ।
न प्रसिद्ध्यति ते नूनं तेनासि हरिणः कृशः ॥ ३८

दत्त्वा तेन कृशेनार्थम् अमर्षी सञ्जिजीविषुः ।
प्राप्य वर्तयसे नूनं तेनासि हरिणः कृशः ॥ ३९

पापान् विवर्धितान् दृष्ट्वा कल्याणांश्चावसीदतः ।
ध्रुवं मृगयसे नूनं तेनासि हरिणः कृशः ॥ ४०

भीष्मः—

एवं सम्पूजितो रक्षो विप्रं तं प्रत्यपूजयत् ।
सहायमकरोच्चैनं सम्पूज्यामुं मुमोच ह ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
[ अस्मिन्नध्याये ४१ श्लोकाः ]

---

## ॥ एकादशाधिकशततमोऽध्यायः ॥

युधिष्ठिरेण भीष्मं प्रति सप्रशंसनं पुनर्धर्मकथनप्रार्थना ॥ १ ॥ कृष्णेन पुत्रार्थं कैलासे तपश्चरणम् ॥ २ ॥ तत्र कृष्णदर्शनाय नारदादीनामागमनम् ॥ ३ ॥ कृष्णेन स्वमुखनिस्सृताग्निना तत्पर्वतस्य भस्मीकरणम् ॥ ४ ॥ तथा पुनः प्रसन्नदृष्ट्या गिरेरुज्जीवनम् ॥ ५ ॥ तथा नारदादीन् प्रति तत्कारणकथनम् ॥ ६ ॥ कृष्णेनाश्चर्यकथनं प्रार्थितैर्मुनिगणैर्नारदं प्रति तच्चोदना ॥ ७ ॥

वैशम्पायनः—

अनुशास्य शुभैर्वाक्यैर् भीष्ममाह महामतिः ।
प्रीत्या पुनस्स शुश्रूषुर् वचनं यद्युधिष्ठिरः ॥ १

जनमेजयः—

पितामहो मे विप्रर्षे भीष्मं कालवशं गतम् ।
किमपृच्छत् तदा राजा [1]सर्वसामाजिकं हितम् ॥ २

उभयोर्लोकयोर्युक्तं पुरुषार्थमनुत्तमम् ।
तन्मे वद महाप्राज्ञ श्रोतुं कौतूहलं हि मे ॥ ३

वैशम्पायनः—

भूय एव महाराज शृणु धर्मसमुच्चयम् ।
यदपृच्छत् तदा राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ४

1. ख-घ—इतः अर्धचतुष्टयं नास्ति

शरतल्पगतं भीष्मं सर्वपार्थिवसन्निधौ ।
अजातशत्रुः प्रीतात्मा पुनरेवाभ्यभाषत ॥ ५

युधिष्ठिरः—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रूयतां मे हि वचनम् अर्थित्वात् प्रब्रवीम्यहम् ॥ ६

परावरज्ञो भूतानां दयावान् सर्वजन्तुषु ।
आगमैर्बहुभिः प्रीतो भवान् नः परमं कुले ॥ ७

त्वादृशो दुर्लभो लोके साम्प्रतं ज्ञानसंयुतः ।
भवता गुरुणा चैव धन्याश्चैव वयं प्रभो ॥ ८

अयं स कालस्सम्प्राप्तो दुर्लभो ज्ञातिबान्धवैः ।
[1]शास्ता तु नास्ति नः कश्चित् त्वदृते पुरुषर्षभ ॥ ९

तस्माद्धर्मार्थसहितम् आयत्यां च हितोदयम् ।
आश्चर्यं परमं वाक्यं श्रोतुमिच्छामि भारत ॥ १०

अयं नारायणश्श्रीमान् सर्वपार्थिवसन्निधौ ।
भवन्तं बहुमानाच्च प्रणयाच्चैव सेवते ॥ ११

अस्यैव तु समक्षं नः पार्थिवानां तथैव च ।
इतिवृत्तं पुराणं च श्रोतॄणां परमं हितम् ॥ १२

यदि तेऽहमनुग्राह्यो भ्रातृभिस्सहितोऽनघ ।

---

1. अ—इदमर्धं नास्ति

मत्प्रियार्थं हि कौरव्य स्नेहाद्भापितुमर्हसि ॥ १३

वैशम्पायनः—

तस्य तद्वचनं श्रुत्वा स्नेहादागतविक्लबः ।

प्रपिबन्निव तं दृष्ट्वा भीष्मो वचनमब्रवीत् ॥ १४

भीष्मः—

शृणु राजन् पुरावृत्तम् इतिहासं पुरातनम् ॥ १४॥

वैशम्पायनः—

एतावदुक्त्वा गाङ्गेयः प्रणम्य शिरसा हरिम् ।

धर्मराजं समीक्ष्येदं पुनर्वक्तुं समारभत्* ॥ १५॥

भीष्मः—

अयं नारायणश्श्रीमान् पुत्रार्थे व्रतकाङ्क्षया ।

दीक्षितो हि महाबाहुः पुरा द्वादशवार्षिकम् ॥ १६॥

दीक्षितं केशवं द्रष्टुम् अभिजग्मुर्महर्षयः ।

सेवित्वा च [1]महात्मानं प्रीयमाणं जनार्दनम् ॥ १७॥

नारदः पर्वतश्चैव कृष्णद्वैपायनस्तथा ।

देवलः काश्यपश्चैव हस्तिकाश्यप एव च ॥ १८॥

जमदग्निश्च राजेन्द्र धौम्यो वाल्मीकिरेव च ।

अपरेऽपि तपस्सिद्धास् सत्यव्रतपरायणाः ॥ १९॥

शिष्यैरनुगतास्सर्वे ब्रह्मविद्भिरकल्मषैः ॥ २०

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-घ—महात्मानः

केशवस्तानभिगतान् प्रीत्या सम्परिगृह्य च ।
तेषामतिथिसत्कारं पूजनार्थं कुलोचितम् ॥ २१
देवकीतनयो हृष्टो देवतुल्यमकल्पयत् ॥ २१॥

उपविष्टेषु सर्वेषु विप्रेषु तदाऽनघ ।
विश्वस्तेष्वभितुष्टेषु केशवार्चनया पुनः ॥ २२॥

परस्परं कथा दिव्याः प्रावर्तन्त मनोरमाः ॥ २३
विष्णोर्नारायणस्यैव प्रसादात् कथयामि ते ॥ २३॥

तस्यैव व्रतचर्यायां मुनिभिर्विस्मितं पुनः ।
यत्र गोवृषभाङ्कस्य प्रभावोऽभून्महात्मनः ॥ २४॥

यत्र देवी महादेवम् अपृच्छत् संशयान् पुरा ।
कथयामास [1]देवेशो देव्याः प्रियचिकीर्षया ॥ २५॥

उमापत्योश्च संवादं शृणु तात मनोरमम् ।
वर्णाश्रमाणां धर्मश्च तत्र तात समाहितः ॥ २६॥

ऋषिधर्मश्च निखिलो राजधर्मश्च पुष्कलः ।
गृहस्थधर्मश्च शुभः कर्मपाकफलानि च ॥ २७॥

देवगुह्यं च विविधं दानधर्मविधिस्तथा ।
विधानमत्र प्रोक्तं यद् यमस्य नियमस्य च ॥ २८॥

यमलोकविधानं च स्वर्गलोकगतिस्तथा ।

---

1. क-घ—सर्वान् स ; ख—सर्वांस्तान्

प्राणमोक्षविधिश्चैव तीर्थचर्या च पुष्कला ॥ २९॥
मोक्षधर्मविधानं च साङ्ख्ययोगसमन्वितम् ।
स्त्रीधर्मश्च स्वयं देव्या देवदेवाय भाषितः ॥ ३०॥
एवमादि शुभं सर्वं तत्र तात समाहितम् ।
रुद्राण्यास्संशयप्रश्नो यत्र तात प्रवर्तते ॥ ३१॥
धन्यं यशस्यमायुष्यं धर्म्यं च परमं हितम् ।
पुष्टियोगमिदं दिव्यं कथ्यमानं मया शृणु ॥ ३२॥
इतिहासमिमं दिव्यं पवित्रं परमं शुभम् ।
सायं प्रातस्सदा सम्यक् श्रोतव्यं च बुभूषता ॥ ३३॥
ततो नारायणो देवस् सङ्क्लिष्टो व्रतचर्यया ।
वह्निर्विनिस्सृतो वक्त्रात् कृष्णस्याद्भुत[1]दर्शनः ॥ ३४॥
अग्निना तेन महता निस्सृतेन मुखाद्विभोः ।
पश्यतामेव सर्वेषां दग्ध एव नगोत्तमः ॥ ३५॥
मृगपक्षिगणाकीर्णश् श्वापदैरपि सङ्कुलः ।
वृक्षगुल्मलताकीर्णो मथितो [2]दीनदर्शनः ॥ ३६॥
पुनस्स दृष्टमात्रेण हरिणा सौम्यचेतसा ।
स बभूव गिरिः क्षिप्रं प्रफुल्लद्रुमकाननः ॥ ३७॥
सिद्धचारणसङ्घैश्च प्रसन्नैरुपशोभितः ।

1. क-ख—दर्शिनः 2. क-ख—दीर्घं

मत्तवारणसंयुक्तो नानापक्षिगणैर्युतः ॥ ३८॥

तदद्भुतमचिन्त्यं च सर्वेषामभवद्दृशम् ॥ ३९

तं दृष्ट्वा हृष्टरोमाणस् सर्वे मुनिगणास्तदा ।
विस्मिताः परमायत्तास् साध्वसाकुललोचनाः ॥ ४०

न किञ्चिदब्रुवंस्तत्र शुभं वा यदि वेतरत् ॥ ४०॥

ततो नारायणो देवो मुनिसङ्घे तु विस्मिते ।
तान् समीक्ष्यैव मधुरं बभाषे पुष्करेक्षणः ॥ ४१॥

श्रीभगवान्—

किमर्थं मुनिसङ्घस्य विस्मयोऽयमनुत्तमः ।
एतं मे संशयं सर्वे याथातथ्येन नन्दिताः ॥ ४२॥

ऋषयो वक्तुमर्हन्ति निश्चयेनार्थकोविदाः ॥ ४३

भीष्मः—

केशवस्य वचश्श्रुत्वा तुष्टुवुर्मुनिपुङ्गवाः ॥ ४३॥

ऋषयः—

भवान् सृजति वै लोकान् भवान् संहरति प्रजाः ॥ ४४

भवाञ् शीतं भवानुष्णं भवान् सत्यं भवान् क्रतुः ।
भवानादिर्भवानन्तो भवतोऽन्यन्न विद्यते ॥ ४५

स्थावरं जङ्गमं सर्वं त्वमेव पुरुषोत्तम ।
त्वत्तस्सर्वमिदं तात लोकचक्रं प्रवर्तते ॥ ४६

त्वमेवार्हसि तद्वक्तुं मुखादग्निविनिर्गमम् ।
एतन्नो विस्मयकरं बभूव मधुसूदन ॥ ४७

ततो विगतसन्त्रासा भवाम पुरुषोत्तम ।
यदिच्छेत्तत्र वक्तव्यं कुतोऽस्माकं नियोगतः ॥ ४८

श्रीभगवान्—

नित्यं हितार्थं लोकानां भवद्भिः क्रियते तपः ।
तस्माल्लोकहितं गुह्यं श्रूयतां कथयामि वः ॥ ४९

असुरस्साम्प्रतं कश्चिद् अहितो लोकनाशनः ।
मायास्त्रकुशलश्चैव बलदर्पसमन्वितः ॥ ५०

बभूव स मया बद्धो लोकानां हितकाम्यया ।
पुत्रेण मे वधो दृष्टस् तस्य वै मुनिपुङ्गवाः ॥ ५१

तदर्थं पुत्रमेवाहं सिसृक्षुर्वनमागतः ।
आत्मनस्सदृशं पुत्रम् अहं जनयितुं व्रतैः ॥ ५२

एवं व्रतपरीतस्य तपस्तीव्रतया मम ।
अथात्मा मम देहस्थस् सोऽग्निर्भूत्वा विनिस्सृतः ॥ ५३

विनिस्सृत्य गतो द्रष्टुं क्षणेन च पितामहम् ।
ब्रह्मणा मन्मथोऽनङ्गः पुत्रत्वे मे प्रकल्पितः ॥ ५४

अनुज्ञातश्च तेनैव पुनरायान्ममान्तिकम् ॥ ५४॥

एवं मे वैष्णवं तेजो मम वक्त्राद्विनिस्सृतम् ।

तत्तेजसा निर्मथितः पुरतोऽयं गिरिस्स्थितः ॥ ५५॥
दृष्ट्वा दाहं गिरेस्तस्य सौम्यभावतया मम ।
पुनस्स दृष्टमात्रेण गिरिरासीद्यथा पुरा ॥ ५६॥
एतद्गुह्यं यथातथ्यं कथितं वस्समासतः ।
भवन्तो व्यथिता येन विस्मिताश्च तपोधनाः ॥ ५७॥

भीष्मः—

ऋषीणामेवमुक्त्वा तु तान् पुनः प्रत्यभाषत* ॥ ५८

श्रीभगवान्—

भवतां दर्शनादेव प्रीतिरभ्यधिका मम ।
भवन्तस्तु तपस्सिद्धा भवन्तो देवदर्शनाः ॥ ५९
सर्वत्र गतिमन्तश्च ज्ञानविज्ञानभाविताः ।
गत्यागतिज्ञा लोकानां सर्वे निर्धूतकल्मषाः ॥ ६०
तस्माद्भवद्भिर्यत् किञ्चिद् दृष्टं वाऽप्यथ वा श्रुतम् ।
आश्चर्यभूतं लोकेषु तद्भवन्तो ब्रुवन्तु मे ॥ ६१
युष्माभिः कथितं यत् स्यात् तपसा भावितात्मभिः ।
तत् स्यादमृतसङ्काशं वाङ्मधुश्रवणे स्पृहा ॥ ६२
रागद्वेषवियुक्तानां सततं सत्यवादिनाम् ।
श्रद्धेयं श्रवणीयं च वचनं हि सतां भवेत् ॥ ६३
तत् संयोगहितं मेऽस्तु न वृथा कर्तुमर्हथ ।

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

भवतां दर्शनं तस्मात् सफलं तु भवेन्मम ॥ ६४

तदहं सज्जनमुखान्निस्सृतं जनसंसदि ।
कथयिष्याम्यहं बुद्ध्या बुद्धिदीपकरं नृणाम् ॥ ६५

तदन्ये वर्धयिष्यन्ति पूजयिष्यन्ति चापरे ।
वात्सल्यविगताश्चान्ये प्रशंसन्ति पुरातनम् ॥ ६६

भीष्मः—

एवं ब्रुवति गोविन्दे श्रवणार्थं महर्षयः ।
वाग्भिस्साञ्जलिमालाभिर् इदमूचुर्जनार्दनम् ॥ ६७

ऋषयः—

अयुक्तमस्मानेवं त्वं वाचा वरद भाषितुम् ।
त्वच्छासनमुखास्सर्वे त्वदधीनपरिश्रमाः ॥ ६८

एवं पूजयितुं चास्मान् न चैवार्हसि केशव ।
त्वत्तस्त्वन्यं न पश्यामो यल्लोके ते न विद्यते ॥ ६९

दिवि वा भुवि वा किञ्चित् तत् सर्वं हि त्वया [1]ततम् ।
न विद्महे वयं देव कथ्यमानं तवान्तिके ॥ ७०

भीष्मः—

एवमुक्तो हृषीकेशस् सस्मितं चेदमब्रवीत् ॥ ७०॥

श्रीभगवान्—

अहं मानुषयोनिस्थस् साम्प्रतं मुनिपुङ्गवाः ।

---

1. क—धृतम्

तस्मान्मानुषवद्वीर्यं मम जानीत सुव्रताः ॥ ७१॥

भवद्भिः कथ्यमानं च अपूर्वमिव तद्भवेत् ॥ ७२

भीष्मः—

एवं सञ्चोदितास्सर्वे केशवेन महात्मना ।

ऋषयश्चानुवर्तन्ते वासुदेवस्य शासनम् ॥ ७३

[1]ततस्त्वृषिगणास्सर्वे नारदं देवदर्शनम् ।

अमन्यन्त बुधा बुद्ध्या समर्थं तन्निबोधने ॥ ७४

ऋषिरुग्रतपाश्चायं केशवस्य प्रियोऽधिकम् ।

पुराणश्चैव वाग्मी च कारणैस्तं च मेनिरे ॥ ७५

सर्वे तदर्हणं कृत्वा नारदं वाक्यमब्रुवन् ॥ ७५॥

ऋषयः—

भवता तीर्थयात्रार्थं चरता हिमवद्गिरौ ।

दृष्टं वै यत् तदाश्चर्यं श्रोतॄणां परमं प्रियम् ॥ ७६॥

अतस्त्वमविशेषेण हितार्थं सर्वमादितः ।

प्रियार्थं केशवस्यास्य स भवान् वक्तुमर्हति ॥ ७७॥

भीष्मः—

तदा संयोजितस्सर्वैर् ऋषिभिर्नारदस्तदा ।

प्रणम्य शिरसा विष्णुं सर्वलोकहिते रतम् ॥ ७८॥

---

1. ख—इदमर्धं नास्ति

समुद्वीक्ष्य हृषीकेशं वक्तुमेवोपचक्रमे ॥ ७९

ततो नारायणसुहृन्नारदो वदतां वरः ।
शङ्करस्योमया सार्धं संवादमनुभाषत ॥ ८०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
[ अस्मिन्नध्याये ८० श्लोकाः ]

---

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

नारदेन कृष्णं प्रति उमामहेश्वरसंवादानुवादारम्भः ॥ १ ॥ नानामुनिगणाकीर्णहिमवत्तटमुपविष्टे महादेवे तत्पृष्ठभागमुपागतया पार्वत्या क्रीडार्थं स्वपाणिभ्यां तदीयनयनद्वयपिधानम् ॥ २ ॥ तदा जगत आन्ध्यप्राप्तौ देवेन स्वललाटे तृतीयनेत्रसर्जनम् ॥ ३ ॥ तत्तेजसा निर्दग्धे गिरौ देवीप्रार्थनया देवेन पुनर्गिरेरुज्जीवनम् ॥ ४ ॥

---

नारदः—

भगवंस्तीर्थयात्रार्थं तथैव चरता मया ।
दिव्यमद्भुतसङ्काशं दृष्टं हैमवतं वनम् ॥ १

नानावृक्षसमायुक्तं नानापक्षिगणैर्वृतम् ।
नानारत्नगणाकीर्णं नानाभावसमन्वितम् ॥ २

दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम् ।
दिव्यपुष्पसमाकीर्णं दिव्यगन्धेन चर्चितम् ॥ ३

सिद्धचारणसङ्घातभूतसङ्घैर्निषेवितम् ।
[1]वरिष्ठाप्सरसाकीर्णं नागगन्धर्वसङ्कुलम् ॥ ४

मृदङ्गमुरजोद्घुष्टं शङ्खवीणाभिनादितम् ।
नृत्यद्भिर्भूतसङ्घैश्च सर्वत[2]स्त्वभिशोभितम् ॥ ५

नानारूपैर्विरूपैश्च भीतरूपैर्भयानकैः ।
सिंहव्याघ्रोरगमुखैर् बिडालवदनैस्तथा ॥ ६

खरोष्ट्रद्वीपिवदनैर् गजवक्त्रैस्तथैव च ।
उलूकश्येनवदनैः काकगृध्रमुखैस्तथा ॥ ७

एवं बहुविधाकारैर् भूतसङ्घैर्भृशाकुलम् ।
नानद्यमानं बहुधा हरपारिषदैर्भृशम् ॥ ८

घोररूपं सुदुर्दर्शं रक्षोगणशतैर्वृतम् ।
समाजं तद्वने दृष्टं मया भूतपतेः पुरा ॥ ९

प्रनृत्ताप्सरसं दिव्यं देवगन्धर्वनादितम् ।
षट्पदैरुपगीतं च प्रथमे मासि माधवे ॥ १०

उत्क्रोशत्क्रौञ्चकुररैस् सारसैर्जीवजीवकैः ।
मत्ताभिः परपुष्टाभिः कूजन्तीभिस्समाकुलम् ॥ ११

---

1. अ—वरिष्ठसारसा 2. क-ख—स्सत्त्व

उत्तमावाससङ्काशं [1]भीमरूपं परन्तप ।
द्रष्टुं भवति धर्मस्य धर्मभागिजनस्य च ॥ १२

ये चोर्ध्वरेतसस्सिद्धास् तत्र तत्र समागताः ।
मार्ताण्डरश्मिसञ्चारा विश्वेदेवगणास्तथा ॥ १३

तथा दिव्यास्तथा नागा लोकपाला हुताशनाः ।
वाताश्च सर्वे चायान्ति दिव्यपुष्पसमाकुलाः ॥ १४

किरन्तस्सर्वपुष्पाणि किरन्तोऽद्भुतदर्शनाः ।
ओषध्यः प्रज्वलन्त्यश्च द्योतयन्त्यो दिशो दश ॥ १५

विहगाश्च मुदा युक्ता नृत्यन्ति च नदन्ति च ।
ततस्समन्ततस्तत्र दिव्या दिव्यजनप्रियाः ॥ १६

तत्र देवो गिरितटे हेमधातुविभूषिते ।
पर्यङ्क इव बभ्राज उपविष्टो महाद्युतिः ॥ १७

व्याघ्रचर्मपरीधानो गजचर्मोत्तरच्छदः ।
व्यालयज्ञोपवीतश्च लोहितान्त्रविभूषितः ॥ १८

हरिश्मश्रुजटो भीमो भयकर्ताऽमरद्विषाम् ।
भयहेतुरभक्तानां भक्तानामभयङ्करः ॥ १९

किन्नरैर्देवगन्धर्वैस् स्तूयमानस्ततस्ततः ।
ऋषिभिश्चाप्सरोभिश्च सर्वतश्चोपशोभितः ॥ २०

---

1. ख—अभिरूपतरं ततः

तत्र भूतपतेस्स्थानं देवदानवसङ्कुलम् ।
सर्वतेजोमयं भूम्ना लोकपालनिषेवितम् ॥ २१

महोरगसमाकीर्णं सर्वेषां रोमहर्षणम् ।
भीमरूपमनिर्देश्यम् अप्रधृष्यतमं विभोः ॥ २२

तत्र भूतपतिं देवम् आसीनं शिखरोत्तमे ।
ऋषयो भूतसङ्घाश्च प्रणम्य शिरसा हरम् ॥ २३

[1]गीर्भिः परमशुद्धाभिस् तुष्टुवुश्च मनोहरम् ॥ २३॥

विमुक्ताश्चैव पापेभ्यो बभूवुर्विगतज्वराः ।
ऋषयो वालखिल्याश्च तथा विप्रर्षयश्च ये ॥ २४॥

अयोनिजा योनिजाश्च तपस्सिद्धा महर्षयः ।
ततस्तं देवदेवेशं भगवन्तमुपासते ॥ २५॥

ततस्तस्मिन् क्षणे देवी भूतस्त्रीगणसंवृता ।
हरतुल्याम्बरधरा समानव्रतचारिणी ॥ २६॥

काञ्चनं कलशं गृह्य सर्वतीर्थाम्बुपूरितम् ।
पुष्पवृष्ट्याऽभिवर्षन्ती दिव्यगन्धसमावृता ॥ २७॥

सरिद्वराभिस्सर्वाभिः पृष्ठतोऽनुगता वरा ।
सेवितुं भगवत्पार्श्वम् आजगाम शुचिस्मिता ॥ २८॥

आगम्य तु गिरेः पुत्री देवदेवस्य चान्तिकम् ।

1. ख—इदमर्धं नास्ति

मनःप्रियं चिकीर्षन्ती क्रीडार्थं शङ्करान्तिके ॥ २९॥

मनोहराभ्यां पाणिभ्यां हरनेत्रे पिधाय तु ।
अवेक्ष्य हृष्टा स्वगणान् स्मयन्ती पृष्ठतस्स्थिता ॥ ३०॥

देव्या चान्धीकृते देवे कश्मलं समपद्यत ॥ ३१

निमीलिते भूतपतौ नष्टचन्द्रार्कतारकम् ।
निस्स्वाध्यायवषट्कारं तमसा चाभिसंवृतम् ॥ ३२

विषण्णं भयवित्रस्तं जगदासीद्भयाकुलम् ।
हाहाकारमृषीणां च लोकानामभवत्तदा ॥ ३३

तमोभिभूते सम्भ्रान्ते लोके जीवितसङ्क्षये ।
तृतीयं चास्य सम्भूतं ललाटे नेत्रमायतम् ॥ ३४

द्वादशादित्यसङ्काशं लोकान् भासाऽवभासयत् ॥ ३४॥

तत्र तेनाग्निनाऽक्ष्णा युगान्ताग्निनिभेन वै ।
अदह्यत गिरिस्सर्वो हिमवानग्रतस्स्थितः ॥ ३५॥

दह्यमाने गिरौ तस्मिन् मृगपक्षिसमाकुले ।
सविद्याधरगन्धर्वे दिव्यौषधसमाकुले ॥ ३६॥

ततो गिरिसुता चापि विस्मयोत्फुल्ललोचना ।
बभूव च जगत् सर्वं तथा विस्मयसंयुतम् ॥ ३७॥

पश्यतामेव सर्वेषां देवदानवरक्षसाम् ।

नेत्रजेनाग्निना तेन दग्ध एव नगोत्तमः ॥ ३८॥

तं दृष्ट्वा मथितं शैलं शैलपुत्री सविक्लवा ।
पितुस्सम्मानमिच्छन्ती पपात भुवि पादयोः ॥ ३९॥

तं दृष्ट्वा देवदेवेशो देव्या दुःखमनुत्तमम् ।
हैमवत्याः प्रियार्थं च गिरिं पुनरवैक्षत ॥ ४०॥

दृष्टमात्रे भगवता सौम्ययुक्तेन चेतसा ।
क्षणेन हिमवाञ् शैलः प्रकृतिस्थोऽभवत् पुनः ॥ ४१॥

हृष्टपुष्टविहङ्गैश्च प्रफुल्लद्रुमकाननः ।
सिद्धचारणसङ्घैश्च प्रीतियुक्तैस्समाकुलः ॥ ४२॥

पितरं प्रकृतिस्थं तु दृष्ट्वा हैमवती भृशम् ।
अभवत् प्रीतिसंयुक्ता मुदिता च पिनाकिनम् ॥ ४३॥

देवी विस्मयसंयुक्ता प्रष्टुकामा महेश्वरम् ।
हितार्थं सर्वलोकानां प्रजानां हितकाम्यया ॥ ४४॥

देवदेवं महादेवं बभाषेदं वचोऽर्थवत् ॥ ४५

उमा—

भगवन् देवदेवेश शूलपाणे महाद्युते ।
विस्मयो मे महाञ्जातस् [1]तस्मिन्नेत्राग्निसम्भवे ॥ ४६

किमर्थं देवदेवेश ललाटेऽस्मिन् प्रकाशितम् ।

1. ख—तव नेत्राग्नि

अतिसूर्याग्निसङ्काशं तृतीयं नेत्रमायतम् ॥ ४७

नेत्राग्निना तु महता निर्दग्धो हिमवानसौ ।
पुनस्सन्दृष्टमात्रस्तु प्रकृतिस्थः पिता मम ॥ ४८

एष मे संशयो देव हृदि मे सम्प्रवर्तते ।
देवदेव नमस्तुभ्यं तन्मे शंसितुमर्हसि ॥ ४९

नारदः—

एवमुक्तस्तथा देव्या प्रीयमाणोऽब्रवीद्भवः ॥ ४९॥

श्रीमहेश्वरः—

स्थाने संशयितुं देवि धर्मज्ञे प्रियभाषिणि ॥ ५०

त्वदृते मां हि वै प्रष्टुं न शक्यं केनचित् प्रिये ।
प्रकाशं यदि वा गुह्यं प्रियार्थं प्रब्रवीम्यहम् ॥ ५१

शृणु तत् सर्वमखिलम् अस्यां संसदि भामिनि ।
सर्वेषामेव लोकानां कूटस्थं विद्धि मां प्रिये ॥ ५२

मदधीनास्त्रयो लोका यथा विष्णौ तथा मयि ।
स्रष्टा विष्णुरहं गोप्ता इत्येतद्विद्धि भामिनि ॥ ५३

तस्माद्यदा मां स्पृशति शुभं वा यदि वेतरत् ।
तथैवेदं जगत् सर्वं तत्तद्भवति शोभने ॥ ५४

एतद्गुह्यमजानन्त्या त्वया बाल्यादनिन्दिते ।

मन्नेत्रे पिहिते देवि क्रीडनार्थं [1]धृतव्रते ॥ ५५

तत्कृते नष्टचन्द्रार्कं जगदासीद्भयाकुलम् ॥ ५५॥

नष्टादित्ये तमोभूते लोके गिरिसुते प्रिये ।

तृतीयं लोचनं सृष्टं लोकं संरक्षितुं मया ॥ ५६॥

कथितं संशयस्थानं निर्विशङ्का भव प्रिये ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
[ अस्मिन्नध्याये ५७ श्लोकाः ]

---

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

ईश्वरेण पार्वतीं प्रति स्वस्य चतुर्मुखत्वस्य नीलकण्ठतायाः पिनाककार्मुकताया वृषभवाहनत्वस्य च कारणाभिधानम् ॥

---

नारदः—

क्षणज्ञा देवदेवस्य श्रोतुकामा प्रियं हितम् ।

उमा देवी महादेवम् अपृच्छत् पुनरेव तु ॥ १

उमा—

भगवन् देवदेवेश सर्व[2]देवनमस्कृत ।

---

1. क-ख—दृढ 2. क—लोक

चतुर्मुखो वै भगवान् अभवत् केन हेतुना ॥ २

भगवन् केन ते वक्त्रम् ऐन्द्रमद्भुतदर्शनम् ।
उत्तरं चापि भगवन् पश्चिमं शुभदर्शनम् ॥ ३

दक्षिणं च मुखं रौद्रं केनोर्ध्वं जटिलावृतम् ॥ ३॥

यथादिशं महा[1]भाग श्रोतुमिच्छामि कारणम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ ४॥

श्रीमहादेवः—

तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि भामिनि ॥ ५

पुराऽसुरौ महाघोरौ लोकोद्वेगकरौ भृशम् ।
सुन्दोपसुन्दनामानावासतुर्बलगर्वितौ ॥ ६

अशस्त्रवध्यौ बलिनौ परस्परहितैषिणौ ॥ ६॥

तयोरेव विनाशाय निर्मिता विश्वकर्मणा ।
सर्वतस्सारमुद्धृत्य तिलशो लोकपूजिता ॥ ७॥

तिलोत्तमेति विख्याता अप्सरा हि बभूव ह ॥ ८

देवकार्यं करिष्यन्ती हासभावसमन्विता ।
[2]सा तपस्यन्तमागम्य रूपेणाप्रतिमा भुवि ॥ ९

मया बहुमता चेयं देवकार्यं करिष्यति ॥ ९॥

---

1. क-ख-घ—देव

2. ख—साधु पर्यन्त ; घ—सा तु पश्यन्त

इति मत्वा तदा चाहं कुर्वन्तीं मां प्रदक्षिणम् ।
तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये ॥ १०॥

ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा ।
दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः ॥ ११॥

लोककार्यपरं नित्यं पश्चिमं मे मुखं प्रिये ।
वेदानधीते सततम् अद्भुतं चोत्तरं मुखम् ॥ १२॥

एतत्ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ १३

उमा—

भगवञ् श्रोतुमिच्छामि शूलपाणे वरप्रद ।
किमर्थं नीलता कण्ठे [1]तव भाति महेश्वर ॥ १४

श्रीमहेश्वरः—

एतत्ते कथयिष्यामि शृणु देवि समाहिता ॥ १४॥

पुरा युगान्तरे यत्नाद् अमृतार्थं सुरासुरैः ।
बलवद्भिर्विमथितश् चिरकालं महोदधिः ॥ १५॥

रज्जुना नागराजेन मथ्यमाने महोदधौ ।
विषं तत्र समुद्भूतं सर्वलोकविनाशनम् ॥ १६॥

तद्दृष्ट्वा विबुधास्सर्वे तदा विमनसोऽभवन् ।
ग्रस्तं हि तन्मया देवि लोकानां हितकारणात् ॥ १७॥

1. ख—भाति बर्हिनिभा तव ; ब—भाति तत्वं महेश्वर

तत्कृता नीलता चासीत् कण्ठे बर्हिनिभा शुभे ।
तदाप्रभृति चैवाहं नीलकण्ठ इति स्मृतः ॥ १८॥
एतत्ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ १९

उमा—

नीलकण्ठ नमस्तेऽस्तु सर्वलोकसुखावह ।
बहूनामायुधानां त्वं पिनाकं धर्तुमिच्छसि ॥ २०
किमर्थं देवदेवेश तन्मे शंसितुमर्हसि ॥ २०॥

श्रीमहेश्वरः—

[1]शस्त्रागमं ते वक्ष्यामि शृणु धर्म्यं शुचिस्मिते ॥ २१
युगान्तरे महादेवि कण्वो नाम महामुनिः ।
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ॥ २२
तथा तस्य तपो घोरं चरतः कालपर्ययात् ।
वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये ॥ २३
वेणुर्वल्मीकसंयोगान्मूर्ध्नि तस्य बभूव ह ।
धरमाणश्च तत् सर्वं तपश्चर्यां तथाऽकरोत् ॥ २४
तस्मै ब्रह्मा वरं दातुं जगाम तपसाऽर्चितः ।
दत्त्वा तस्मै वरं देवो वेणुं दृष्ट्वा त्वचिन्तयत् ॥ २५
लोककार्यं समुद्दिश्य वेणुनाऽनेन भामिनि ।

1. अ-क-घ—नास्तीदमर्धम्

चिन्तयित्वा तमादाय कार्मुकार्थे न्ययोजयत् ॥ २६

विष्णोर्मम च सामर्थ्यं ज्ञात्वा लोकपितामहः ।
धनुषी द्वे तदा प्रादाद् विष्णवे मम चैव तु ॥ २७

पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ॥ २८

तच्च सोमाय निर्दिश्य ब्रह्मा [1]लोकं गतः पुनः ।
एतत्ते सर्वमाख्यातं शस्त्रागममनिन्दिते ॥ २९

उमा—

भगवन् देवदेवेश पिनाकपरमप्रिय ।
वाहनेषु तथाऽन्येषु सत्सु भूतपते तव ॥ ३०

अयं तु वृषभः कस्माद् वाहनं स यथाऽभवत् ।
[2]एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ ३१

श्रीमहादेवः—

तदहं ते प्रवक्ष्यामि वाहनं स यथाऽभवत् ॥ ३१॥

आदिसर्गे पुरा गावश् श्वेतवर्णाश्शुचिस्मिते ।
बलसंहनना गावो दर्पयुक्ताश्चरन्ति ताः ॥ ३२॥

अहं तु तप आतिष्ठं तस्मिन् काले शुभानने ।

---

1. ख—लोकान्तरं गतः
2. ख—अर्धद्वयं नास्ति

एकपादश्चोर्ध्वबाहुर् लोकार्थं हिमवद्गिरौ ॥ ३३॥

गावो मे पार्श्वमागम्य दर्पोत्सिक्तास्समन्ततः ।
स्थानभ्रंशं तदा देवि चक्रिरे बहुशस्तदा ॥ ३४॥

अपचारेण वै तासां मनः[1]क्षोभोऽभवन्मम ॥ ३५

तस्माद्दग्धा यदा गावो रोषाविष्टेन चेतसा ॥ ३५॥

तस्मिंस्तु व्यसने घोरे वर्तमाने पशून् प्रति । ३६

अनेन वृषभेणाहं शमितस्सम्प्रसादनैः ॥ ३६॥

तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ।
श्वेतोऽयं वृषभो देवि [2]सर्वसंस्कारसंयुतः ॥ ३७॥

वाहनत्वे ध्वजत्वे मे तदाप्रभृति योजितः ॥ ३८

तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम् ।
प्रसन्नश्चाभवं देवि तदा गोपतितां गतः ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

1. क—क्रोधो;  घ—कोपो

2. अ—वर्ण

## ।। चतुर्दशाधिकशततमोऽध्यायः ।।

ईश्वरेण पार्वतीं प्रति स्वस्य श्मशानवासचन्द्रकलाधारणादेः कारणाभिधानम् ॥

उमा—

भगवन् सर्वदेवेश शूलपाणे वृषध्वज ।
आवासेषु विचित्रेषु रम्येषु च शुभेषु च ।। १
सत्सु चान्येषु [1]देशेषु श्मशाने रमसे कथम् ।। १।।
केशास्थिकलिले भीमे कपालशतसङ्कुले ।
सृगालगृध्रसम्पूर्णे शवधूमसमाकुले ।। २।।
चिताग्निविषमे घोरे गह्ने च भयानके ।
एवं कलेबरक्षेत्रे दुर्दर्शे रमसे कथम् ।। ३।।
एष मे संशयो देव तन्मे शंसितुमर्हसि ।। ४

श्रीमहादेवः—

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
आवासार्थं पुरा देवि शुद्धान्वेषी शुचिस्मिते ।। ५
नाध्यगच्छं चिरं कालं देशं शुचितमं शुभे ।
एष मेऽभिनिवेशोऽभूत् तस्मिन् काले प्रजापतिः ।। ६

1. क-ख-घ—भूतेषु

आकुलस्सुमहाघोरः प्रादुरासीत् समन्ततः ।
सम्भूता भूतसृष्टिश्च घोरा लोकभयावहा ॥ ७

नानावर्णा विरूपाश्च तीक्ष्णदंष्ट्राः प्रहारिणः ।
पिशाचरक्षोवदनाः प्राणिनां प्राणहारिणः ॥ ८
इतश्चरन्ति निघ्नन्तः प्राणिनो भृशमेव च ॥ ८॥

एवं लोके प्राणिहीने क्षयं याते पितामहः ।
चिन्तयंस्तत्प्रतीकारं मां च शक्तं हि निग्रहे ॥ ९॥
एवं ज्ञात्वा ततो ब्रह्मा तस्मिन् कर्मण्ययोजयत् ॥ १०

तच्च प्राणिहितार्थं तु मयाऽप्यनुमतं प्रिये ।
तस्मात् संरक्षिता देवि भूतेभ्यः प्राणिनो भयात् ॥ ११

अस्माच्छ्मशानान्मेध्यं तु नास्ति किञ्चिदनिन्दिते ।
निस्सम्पातान्मनुष्याणां तस्माच्छुचितमं स्मृतम् ॥ १२

भूतसृष्टिं च तां चाहं श्मशाने संन्यवेशयम् ।
तत्रस्थस्सर्वभूतानां विनिहन्मि प्रिये भयम् ॥ १३

न च भूतगणेनाहम् [1]अपि नाशितुमुत्सहे ।
तस्मान्मे सन्निवासाय श्मशाने रोचते मनः ॥ १४

मेध्यकामैर्द्विजैर्नित्यं मेध्यमित्यभिधीयते ।
आचरद्भिर्व्रतं रौद्रं मोक्षकामैश्च सेव्यते ॥ १५

1. ख—विना वासितुमुत्सहे

स्थानं मे तत्र विहितं वीरस्थानमिति प्रिये ।
कपालशतसम्पूर्णम् अभिरूपं भयानकम् ॥ १६

मध्याह्ने सन्ध्ययोस्तत्र नक्षत्रे रुद्रदैवते ।
आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः ॥ १७

मदन्येन न शक्यं हि निहन्तुं भूतजं भयम् ।
तत्रस्थोऽहं प्रजास्सर्वाः पालयामि दिने दिने ॥ १८

मन्नियोगाद्भूतसङ्घा न च घ्नन्तीह कञ्चन ।
तांस्तु लोकहितार्थाय श्मशाने रमयाम्यहम् ॥ १९

एतत्ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ १९॥

उमा—

भगवन् देवदेवेश त्रिनेत्र वृषभध्वज ।
पिङ्गलं विकृतं भाति रूपं ते तु भयानकम् ॥ २०॥

भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं जटाकुलम् ।
व्याघ्रोदरत्वक्संवीतं कपिलश्मश्रुसन्ततम् ॥ २१॥

रौद्रं भयानकं घोरं शूलपट्टससंयुतम् ।
किमर्थं त्वीदृशं रूपं तन्मे शंसितुमर्हसि ॥ २२॥

श्रीमहेश्वरः—

तदहं कथयिष्यामि शृणु तत्त्वं समाहिता ।
द्विविधो लौकिको भावश् शीतमुष्णमिति प्रिये ॥ २३॥

तयोर्हि ग्रथितं सर्वं सौम्याग्नेयमिदं जगत् ॥ २४

सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम् ।
अनेन वपुषा नित्यं सर्वलोकान् बिभर्म्यहम् ॥ २५

रौद्राकृतिं विरूपाक्षं शूलपट्टससंयुतम् ।
आग्नेयमिति मे रूपं देवि लोकहिते रतम् ॥ २६

यद्यहं विपरीतस्स्याम् एतत् त्यक्त्वा शुभानने ।
तदैव सर्वलोकानां विपरीतं प्रवर्तते ॥ २७

तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा ।
इति ते कथितं देवि किं भूयश्श्रोतुमिच्छसि ॥ २८

उमा—

भगवन् देवदेवेश शूलपाणे वृषध्वज ।
किमर्थं चन्द्रलेखा ते शिरोभागे विरोचते ॥ २९

श्रोतुमिच्छाम्यहं देव तन्मे शंसितुमर्हसि ॥ २९॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
पुराऽहं कारणाद्देवि कोपयुक्तश्शुचिस्मिते ॥ ३०॥

दक्षयज्ञवधार्थाय भूतसङ्घैस्समावृतः ॥ ३१

तस्मिन् क्रतुवधे घोरे यज्ञभागनिमित्ततः ।
देवा विभ्रंशितास्ते वै येषां भागः क्रतौ कृतः ॥ ३२

सोमस्तत्र मया देवि कुपितेन भृशार्दितः ।
पश्यंश्चानपराधी सन् पादाङ्गुष्ठेन ताडितः ॥ ३३

तथा विनिकृतेनाहं सामपूर्वं प्रसादितः ।
तन्मे चिन्तयतश्चासीत् पश्चात्तापः पुरा प्रिये ॥ ३४

तदाप्रभृति सोमं हि शिरसा धारयाम्यहम् ।
एवं मे पापहानिस्तु भवेदिति मतिर्मम ॥ ३५

तदाप्रभृति वै सोमो मूर्ध्नि सन्दृश्यते सदा ॥ ३५॥

नारदः—

एवं ब्रुवति देवेशे विस्मिताः परमर्षयः ।
वाग्भिस्साञ्जलिमालाभिर् अभितुष्टुवुरीश्वरम् ॥ ३६॥

ऋषयः—

नमश्शङ्कर सर्वेश नमस्सर्वजगद्गुरो ।
नमो देवादिदेवाय नमश्शशिकलाधर ॥ ३७॥

नमो [1]घोरतराद्घोर नमो रुद्राय शङ्कर ।
नमश्शान्ततराच्छान्त नमश्चन्द्रस्य पालक ॥ ३८॥

नमस्सोमाय देवाय नमस्तुभ्यं चतुर्मुख ।
नमो भूतपते शम्भो जह्नुकन्याम्बुशेखर ॥ ३९॥

नमस्त्रिशूलहस्ताय पन्नगाभरणाय च ।

1. अ—घोराद् घोरतर

नमोऽस्तु विषमाक्षाय दक्षयज्ञप्रदाहक ॥ ४०॥

नमोऽस्तु बहुनेत्राय लोकरक्षणतत्पर ।
अहो देवस्य माहात्म्यम् अहो देवस्य वै कृपा ॥ ४१॥

एवं धर्मपरत्वं च देवदेवस्य चार्हति ॥ ४२

नारदः—

एवं ब्रुवत्सु मुनिषु वचो देव्यब्रवीद्धरम् ।
सम्प्रीत्यर्थं मुनीनां सा क्षणज्ञा परमं हितम् ॥ ४३

उमा—

भगवन् देवदेवेश सर्वलोकनमस्कृत ।
अस्य वै ऋषिसङ्घस्य मम च प्रियकाम्यया ॥ ४४

वर्णाश्रमकृतं धर्मं वक्तुमर्हस्यशेषतः ।
न तृप्तिरस्ति देवेश श्रवणीयं हि ते वचः ॥ ४५

सधर्मचारिणी चेयं भक्ता चेयमिति प्रभो ।
वक्तुमर्हसि देवेश लोकानां हितकाम्यया ॥ ४६

याथातथ्येन तत् सर्वं वक्तुमर्हसि शङ्कर ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
[ अस्मिन्नध्याये ४६॥ श्लोकाः ]

## ॥ पञ्चदशाधिकशततमोऽध्यायः ॥

ईश्वरेण पार्वतीं प्रति वर्णाश्रमधर्मकथनम् ॥

श्रीमहेश्वरः—

एतत्ते कथयिष्यामि यत्ते देवि मनःप्रियम् ।
शृणु तत् सर्वमखिलं धर्मं वर्णाश्रमाश्रितम् ॥ १

ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्चेति चतुर्विधम् ।
ब्रह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता ॥ २
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि वै ॥ २॥

यदीदमेकवर्णं स्याज् जगत् सर्वं विनश्यति ।
सहैव देवि वर्णानि चत्वारि विहितान्यतः ॥ ३॥

मुखतो ब्राह्मणास्सृष्टास् तस्मात्ते वाग्विशारदाः ।
बाहुभ्यां क्षत्रियास्सृष्टास् तस्मात्ते बाहुगर्विताः ॥ ४॥

उदरादुद्गता वैश्यास् तस्माद्वार्तोपजीविनः ।
शूद्राश्च पादतस्सृष्टास् तस्मात्ते परिचारकाः ॥ ५॥
तेषां धर्मांश्च कर्माणि शृणु देवि समाहिता ॥ ६

विप्राः कृता भूमिदेवा लोकानां धारणे कृताः ।
ते कैश्चिन्नावमन्तव्या ब्राह्मणा हितमिच्छुभिः ॥ ७

यदि ते ब्राह्मणा न स्युर् दानयोगवहास्सदा ।
उभयोर्लोकयोर्देवि [1]स्थितिर्न स्यात् समासतः ॥ ८

लोकेषु दुर्लभं किन्तु ब्राह्मणत्वमिति स्मृतम् ।
अबुधो वा दरिद्रो वा पूजनीयस्सदैव सः ॥ ९

ब्राह्मणान् योऽवमन्येत निन्देच्च क्रोधयेच्च वा ।
प्रहरेत हरेद्वाऽपि धनं तेषां नराधमः ॥ १०

कारयेद्धीनकर्माणि कामलोभविमोहनात् ।
स च मामवमन्येत मां क्रोधयति निन्दति ॥ ११

मामेव प्रहरेन्मूढो मद्धनस्यापहारकः ।
मामेव प्रेषणं कृत्वा निन्दते मूढचेतनः ॥ १२

स्वाध्यायो यजनं दानं तस्य धर्म इति स्थितिः ।
कर्माण्यध्यापनं चैव याजनं च प्रतिग्रहः ॥ १३

सत्यं शान्तिस्तपश्शौचं तस्य धर्मस्सनातनः ॥ १३॥

विक्रयो रसधान्यानां ब्राह्मणस्य विगर्हितः ।
अनापदि च शूद्रान्नं वृषलीसङ्ग्रहस्तथा ॥ १४॥

तप एव सदा धर्मो [2]ब्राह्मणस्य न संशयः ।
स तु धर्मार्थमुत्पन्नः पूर्वं धात्रा तपोबलात् ॥ १५॥

---

1. ख—भूतिर्न स्यात् समासतः
2. ख—इतः षड् पादा न सन्ति

तस्योपनयनं धर्मो नित्यं चोदकधारणम् ।
शास्त्रस्य श्रवणं धर्मो वेदव्रतनिषेवणम् ॥ १६॥

अग्निकार्यं परो धर्मो नित्ययज्ञोपवीतिता ।
शूद्रान्नवर्जनं धर्मो धर्मस्सत्पथसेवनम् ॥ १७॥

धर्मो नित्योपवासित्वं ब्रह्मचर्यं परं तथा ॥ १८

गृहस्थस्य परो धर्मो गृहस्थाश्रमिणस्तथा ।
गृहसम्मार्जनं धर्म आलेपनविधिस्तथा ॥ १९

अतिथिप्रियता धर्मो धर्मस्त्रेताग्निधारणम् ।
इष्टिर्वा पशुबन्धाश्च विधिपूर्वं परन्तप ॥ २०

दम्पत्योस्समशीलत्वं धर्मो वै गृहमेधिनाम् ।
एवं द्विजन्मनो धर्मो गार्हस्थ्ये धर्मधारणम् ॥ २१

यस्तु क्षत्रगतो धर्मस् त्वया देवि प्रचोदितः ।
तमहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ २२

क्षत्रियास्तु ततो देवि द्विजानां पालने स्मृताः ।
यदि न क्षत्रियो लोके जगत् स्यादधरोत्तरम् ॥ २३

रक्षणात् क्षत्रियैरेव जगद्भवति शाश्वतम् ।
तस्याप्यध्ययनं दानं यजनं धर्मतस्स्मृतम् ॥ २४

दीनानां रक्षणं चैव पापानामनुशासनम् ।
सतां सम्पोषणं चैव कर्मषड्भागजीवनम् ॥ २५

उत्साहश्शस्त्रजीवित्वं तस्य धर्मस्सनातनः ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ॥ २६

सम्यग्गुणहितो धर्मो धर्मः पौरहितक्रिया ।
व्यवहारास्थितिर्नित्यं गुणयुक्तो महीपतिः ॥ २७

आर्तवित्तप्रदो राजा धर्मं प्राप्नोत्यनुत्तमम् ।
एवं तैर्विहितः पूर्वैर् धर्मः कर्मविधानतः ॥ २८

तथैव देवि वैश्याश्च लोकयात्राहितास्स्मृताः ।
अन्ये तानुपजीवन्ति प्रत्यक्षफलदा हि ते ॥ २९

यदि न स्युस्तथा वैश्या न भवेयुस्तथा परे ।
तेषामध्ययनं दानं यजनं धर्म इष्यते ॥ ३०

वैश्यस्य सततं कर्म पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दास् त्रयो वर्णा द्विजातयः ॥ ३१

वाणिज्यं सत्पथे स्थानम् आतिथेयत्वमेव च ।
विप्राणां स्वागतन्यायो वैश्यधर्मस्सनातनः ॥ ३२

तिलगन्धरसाश्चैव न विक्रेयाः कथञ्चन ।
वणिक्पथमुपासद्भिर् वैश्यैर्वैश्यपथि स्थितैः ॥ ३३

सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
एवं ते विहिता देवि लोकयात्रा स्वयम्भुवा ॥ ३४

तथैव शूद्रा विहितास् सर्वधर्मप्रसाधकाः ।
शूद्राश्च यदि ते न स्युः कर्मकर्ता न विद्यते ॥ ३५

त्रयः पूर्वे शूद्रमूलास् सर्वे कर्मकरास्स्मृताः ।
ब्राह्मणादिषु शुश्रूषा दासधर्म इति स्मृतः ॥ ३६

वार्ता च कारुकर्माणि शिल्पं नाट्यं तथैव च ।
अहिंसकश्शुभाचारो दैवतद्विजवन्दकः ॥ ३७

शूद्रो धर्मफलैरिष्टैस् स्वधर्मेणोपयुज्यते ।
एवमादि तथाऽन्यच्च शूद्रधर्म इति स्मृतः ॥ ३८

तेऽप्येवं विहिता लोके कर्मयोगाच्छुभानने ।
एवं चतुर्णां वर्णानां वर्णलोकाः परत्र च ॥ ३९

विहिताश्च तथा दृष्टा यथावद्धर्मचारिणि ॥ ३९॥

एष वर्णाश्रयो धर्मः कर्म चैव तदर्पणम् ।
कथितं श्रोतुकामायाः किं भूयश्श्रोतुमिच्छसि ॥ ४०॥

उमा—

भगवन् देवदेवेश नमस्ते वृषभध्वज ।
श्रोतुमिच्छाम्यहं देव धर्ममाश्रमिणां विभो ॥ ४१॥

श्रीमहेश्वरः—

तथाऽऽश्रमगतं धर्मं शृणु देवि समाहिता ।
आश्रमाणां तु यो धर्मः क्रियते ब्रह्मवादिभिः ॥ ४२॥

गृहस्थः प्रवरस्तेषां गार्हस्थ्यं धर्ममाश्रितः ।
पञ्चयज्ञक्रियाशौचं दारतुष्टिरतन्द्रिता ॥ ४३॥

ऋतुकालाभिगमनं दानयज्ञतपांसि च ।
अविप्रवासस्तस्येष्टस् स्वाध्यायश्चाग्निपूर्वकम् ॥ ४४॥

अतिथीनामाभिमुख्यं शक्त्या चेष्टनिमन्त्रणम् ।
अनुग्रहश्च सर्वेषां मनोवाक्कायकर्मभिः ॥ ४५॥

एवमादि शुभं चान्यत् कुर्यात्तद्वृत्तवान् गृही ।
एवं सञ्चरतस्तस्य पुण्यलोका न संशयः ॥ ४६॥

तथैव वानप्रस्थस्य धर्माः प्रोक्तास्सनातनाः ॥ ४७

गृहवासं समुत्सृज्य निश्चित्यैकमनाश्शुभैः ।
वन्यैरेव सदाहारैर् वर्तयेदिति च स्थितिः ॥ ४८

भूमिशय्या जटा श्मश्रु चर्म वल्कलधारणम् ।
देवतातिथिसत्कारो महाकृच्छ्राभिपूजनम् ॥ ४९

अग्निहोत्रं त्रिषवणं तस्य नित्यं विधीयते ।
ब्रह्मचर्यं क्षमा शौचं तस्य धर्मस्सनातनः ॥ ५०

एवं स विगते प्राणे देवलोके महीयते ॥ ५०॥

यतिधर्मास्तथा देवि [1]गृहांस्त्यक्त्वा यतस्ततः ।
आकिञ्चन्यमनारम्भस् सर्वतश्शौचमार्जवम् ॥ ५१॥

1. ख—सङ्गांस्त्यक्त्वा यतिस्ततः

सर्वत्र भैक्षचर्या च सर्वत्रैव विवासनम् ।
सदा ध्यानपरत्वं च दोषशुद्धिः क्षमा दया ॥ ५२॥
तत्त्वानुगतबुद्धित्वं तस्य धर्मविधिर्भवेत् ॥ ५३
ब्रह्मचारी च यो देवि जन्मप्रभृति [1]दीक्षितः ।
ब्रह्मचर्यपरो भूत्वा साधयेद्गुरुमात्मनः ॥ ५४
सर्वकालेषु सर्वत्र गुरुपूजां समाचरेत् ॥ ५४॥
भैक्षचर्याऽग्निकार्यं च सदा जलनिषेवणम् ।
स्वाध्यायस्सततं देवि तस्य धर्मस्सनातनः ॥ ५५॥
तस्य चेष्टा तु गुर्वर्थम् आप्राणान्तमिति स्थितिः ।
गुरोरभावे तत्पुत्रे गुरुवद्वृत्तिमाचरेत् ॥ ५६॥
एवं सोऽप्यमलाँल्लोकान् ब्राह्मणः प्रतिपद्यते ।
एष मे कथितो देवि धर्मश्चाश्रमवासिनाम् ॥ ५७॥
चतुर्णामाश्रमो युक्तो लोक इत्येव विद्यते ।
कथितं ते समासेन किं भूयश्श्रोतुमिच्छसि ॥ ५८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
[ अस्मिन्नध्याये ५८॥ श्लोकाः ]

---

1. अ—भिक्षितः

## ॥ षोडशाधिकशततमोऽध्यायः ॥

ईश्वरेण पार्वतीं प्रति ऋषिधर्मकथनम् ॥

उमा—

भगवन् देवदेवेश त्रिपुरान्तक शङ्कर ।
अयं त्वृषिगणो देव तपस्तप इति प्रभो ॥ १

तपसा कर्शितो नित्यं तपोऽर्जनपरायणः ।
अस्य किंलक्षणो धर्मः कीदृशश्चागमस्तथा ॥ २

एतदिच्छाम्यहं श्रोतुं तन्मे वद वरप्रद ॥ २॥

नारदः—

एवं ब्रुवन्त्यां रुद्राण्याम् ऋषयस्साधु साध्विति ।
अब्रुवन् हृष्टमनसस् सर्वे तद्गतमानसाः ॥ ३॥
शृण्वन्तीमृषिधर्मांस्तु ऋषयश्चाभ्यपूजयन् ॥ ४

ऋषयः—

[1]त्वत्प्रसादाद्वयं देवि श्रोष्यामः परमं हितम् ।
धन्याः खलु वयं सर्वे पादमूलमुपाश्रिताः ॥ ५

नारदः—

इति सर्वे तदा देवीं वाचा समभिपूजयन् ॥ ५॥

1. ख—अर्धत्रयं नास्ति

श्रीमहेश्वरः—

न्यायतस्त्वं महाभागे श्रोतुकामा मनस्विनि ।
हन्त ते कथयिष्यामि मुनिधर्मं शुचिस्मिते ॥ ६॥

वानप्रस्थं समाश्रित्य क्रियते बहुधा नरैः ।
बहुशाखो बहुविधो ऋषिधर्मस्सनातनः ॥ ७॥

प्रायशस्सर्वभोगार्थम् ऋषिभिः क्रियते तपः ।
तथा सञ्चरतां तेषां देवि धर्मविधिं शृणु ॥ ८॥

भूत्वा पूर्वं गृहस्थस्तु पुत्रानृण्यमवाप्य च ।
कलत्रकार्यं सन्तृप्य कारणात् सन्त्यजेद्गृहम् ॥ ९॥

अवस्थाप्य मनो धृत्या व्यवसायपुरस्सरः ।
निर्द्वन्द्वो वा सदारो वा वनवासाय संव्रजेत् ॥ १०॥

देशाः परमपुण्या ये नदीवनसमन्विताः ।
अबाधमुक्ताः प्रायेण तीर्थायतनसंयुताः ॥ ११॥

तत्र गत्वा विधिं ज्ञात्वा दीक्षां कुर्याद्यथाक्रमम् ।
दीक्षित्वैकमना भूत्वा परिचर्यां समाचरेत् ॥ १२॥

काल्योत्थानं च शौचं च सर्वदेवप्रणामनम् ।
शकृदालेपनं काये त्यक्तदोषप्रमादता ॥ १३॥

सायम्प्रातश्चाभिषेकं चाग्निहोत्रं यथाविधि ।
काले शौचं च कार्यं च जटावल्कलधारणम् ॥ १४॥

सततं वनचर्या च समित्कुसुमकारणात् ।
[1]नीवाराग्रयणं काले शाकमूलोपचायनम् ॥ १५॥
सदायतनशौचं च तस्य धर्माय चेष्यते ।
अतिथीनामाभिमुख्यं तत्परत्वं च सर्वदा ॥ १६॥
पाद्यासनाभ्यां सम्पूज्य तथाऽऽहारनिमन्त्रणम् ।
अग्राम्यपचनं काले पितृदेवार्चनं तथा ॥ १७॥
पश्चादतिथिसत्कारस् तस्य धर्मास्सनातनाः ।
शिष्टैर्धर्मासने चैव धर्मार्थसहिताः कथाः ॥ १८॥
प्रतिश्रयविभागश्च भूमिशय्या शिलासु वा ।
व्रतोपवासयोगश्च क्षमा चेन्द्रियनिग्रहः ॥ १९॥
दिवारात्रं यथायोगं शौचं धर्मस्य चिन्तनम् ।
एवं धर्माः पुरा दृष्टास् सामान्यवनवासिनाम् ॥ २०॥
एवं वै यतमानस्य कालधर्मो यदा भवेत् ।
तदैव सोऽभिजयति स्वर्गलोकं शुचिस्मिते ॥ २१॥
तत्र संविदिता भोगास् स्वर्गस्त्रीभिरनिन्दिते ।
परिभ्रष्टो यथा स्वर्गाद् विशिष्टस्तु भवेन्नृषु ॥ २२॥
एवं धर्मस्तथा देवि सर्वेषां वनवासिनाम् ।
एतत्ते कथितं सर्वं किं भूयश्श्रोतुमिच्छसि ॥ २३॥

1. ख—निवाताश्रयणं

उमा—

भगवन् देवदेवेश ऋषीणां चरितं शुभम् ।
विशेषधर्मानिच्छामि श्रोतुं कौतूहलं हि मे ॥ २४॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ २५

वननित्यैर्वनरतैर् वानप्रस्थैर्महर्षिभिः ।
वनं गुरुमिवालम्ब्य वस्तव्यमिति निश्चयः ॥ २६

वीरशय्यामुपासद्भिर् वीरस्थानोपसेविभिः ।
व्रतोपवासैर्बहुभिर् ग्रीष्मे पञ्चतपैस्तथा ॥ २७

पञ्चयज्ञपरैर्नित्यं पौर्णमास्यापरायणैः ।
मण्डूकशायैर्हेमन्ते शैवालाङ्कुरभोजनैः ॥ २८

चीरवल्कलसंवीतैर् मृगाजिनधरैस्तथा ।
चातुर्मास्यपरैः कैश्चिद् देवधर्मपरायणैः ॥ २९

एवंविधैर्वनगतैस् तप्यते सुमहत्तपः ।
एवं कृत्वा शुभं कर्म पश्चाद्याति त्रिविष्टपम् ॥ ३०

तत्रापि सुमहत् कालं संविहृत्य यथासुखम् ।
जायते मानुषे लोके दानभोगसमन्वितः ॥ ३१

तपोविशेषसंयुक्ताः कथितास्ते शुचिस्मिते ॥ ३१॥

उमा—

भगवन् सर्वलोकेश तेषु ये दारसंयुताः ।
कीदृशं चरितं तेषां तन्मे शंसितुमर्हसि ॥ ३२॥

श्रीमहेश्वरः—

[1]य एकपत्नीधर्माणश् चरन्ति विपुलं तपः ।
विन्ध्यपादेषु ये केचिद् ये च नैमिशवासिनः ॥ ३३॥

पुष्करेषु च ये चान्ये नदीवनसमाश्रिताः ।
सर्वे ते विधिदृष्टेन चरन्ति विपुलं तपः ॥ ३४॥

हिंसाद्रोहविमुक्ताश्च सर्वभूतानुकम्पिनः ।
शान्ता दान्ता जितक्रोधास् सर्वातिथ्यपरायणाः ॥ ३५॥

प्राणिष्वात्मोपमा नित्यम् ऋतुकालाभिगामिनः ।
स्वदारसहिता देवि चरन्ति व्रतमुत्तमम् ॥ ३६॥

वसन्ति सुखमव्यग्राः पुत्रदारसमन्विताः ।
तेषां परिच्छदारम्भाः कृतोपकरणानि च ॥ ३७॥

गृहस्थवद्विधीयन्ते यथायोगं प्रमाणतः ।
पोषणार्थं स्वदाराणाम् अग्निकार्यार्थमेव च ॥ ३८॥

गावश्च कर्षणं चैव सर्वमेतद्विधीयते ॥ ३९

एवं वनगतैर्देवि कर्तव्यं दारसङ्ग्रहैः ।

1. ख—अर्धचतुष्टयं नास्ति

ते स्वदारैस्समायान्ति पुण्याँल्लोकान् दृढव्रताः ॥ ४०

पतिभिस्सह ये दाराश् चरन्ति विपुलं तपः ।
अव्यग्रभावादैकाग्र्यात् ताश्च गच्छन्ति वै दिवम् ॥ ४१

एतत् ते कथितं देवि किं भूयश्श्रोतुमिच्छसि* ॥ ४१॥

उमा—

भगवन् देवदेवेश तेषां कर्मफलं प्रभो ।
श्रोतुमिच्छाम्यहं देव प्रसादात्ते वरप्रद ॥ ४२॥

श्रीमहेश्वरः—

वानप्रस्थगतं सर्वं फलपाकं शृणु प्रिये ॥ ४३

अग्नियोगं व्रजन् ग्रीष्मे ततो द्वादशवार्षिकम् ।
[1]काष्ठवन्मौनमास्थाय नरो द्वादशवार्षिकम् ॥ ४४

मरुतां लोकमास्थाय तत्र भोगैश्च युज्यते ॥ ४४॥

कुशशर्करसंयुक्ते स्थण्डिले संविशन् मुनिः ।
यक्षलोकेऽभिजायेत सहस्राणि चतुर्दश ॥ ४५॥

वर्षाणां भोगसंयुक्तो नरो द्वादशवर्षिकम् ।
वीरासनगतो यस्तु कण्टकाफलकाश्रितः ॥ ४६॥

गन्धर्वेष्वभिजायेत [2]नरो द्वादशवार्षिकम् ॥ ४७

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. अ—अर्धद्वयं नास्ति
2 ख—सहस्राणि चतुर्दश

वीरस्थायी चोर्ध्वबाहुर् नरो द्वादशवार्षिकम् ।
देवलोकेऽभिजायेत दिव्यभोगसमन्वितः ॥ ४८

पादाङ्गुष्ठेन यस्तिष्ठेद् ऊर्ध्वबाहुर्जितेन्द्रियः ।
इन्द्रलोकेऽभिजायेत सहस्राणि चतुर्दश ॥ ४९

आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
नागलोकेऽभिजायेत संवत्सरगणान् बहून् ॥ ५०

एवं दृढव्रता देवि वानप्रस्थाश्च कर्मभिः ।
स्थानेषु तत्र तिष्ठन्ति तत्तद्भोगसमन्विताः ॥ ५१

तेभ्यो भ्रष्टाः पुनर्देवि जायन्ते नृषु भोगिनः ।
वर्णोत्तमकुलेष्वेव धनधान्यसमन्विताः ॥ ५२

एतत्ते कथितं देवि किं भूयश्श्रोतुमिच्छसि ॥ ५२॥

उमा—

एषां यायावराणां तु धर्ममिच्छामि मानद ।
कृपया परयाऽऽविष्टस् तन्मे ब्रूहि महेश्वर ॥ ५३॥

श्रीमहेश्वरः—

धर्मं यायावराणां त्वं शृणु भामिनि तत्परा ॥ ५४

व्रतोपवासशुद्धाङ्गास् तीर्थस्नानपरायणाः ।
[1]धृतिमन्तः क्षमायुक्तास् सत्यव्रतपरायणाः ॥ ५५

1. अ-क-ब—नास्तीदमर्धम्

पक्षमासोपवासैश्च कर्शिता धर्मदर्शिनः ।
वर्षैश्शीतातपैरेव कुर्वन्तः परमं तपः ॥ ५६

कालयोगेन गच्छन्ति शक्रलोकं शुचिस्मिते ।
तत्र ते भोगसंयुक्ता दिव्यगन्धसमन्विताः ॥ ५७

दिव्यभूषणसंयुक्ता विमानवरसंयुताः ।
विचरन्ति यथाकामं दिव्यस्त्रीगणसंयुताः ॥ ५८

एतत्ते कथितं देवि किं भूयश्श्रोतुमिच्छसि ॥ ५८॥

उमा—

तेषां चक्रचराणां च धर्ममिच्छामि वै प्रभो ॥ ५९

श्रीमहेश्वरः—

एतत्ते कथयिष्यामि शृणु शाकटिकं शुभे ॥ ५९॥

संवहन्तो धुरं दारैः शकटानां तु सर्वदा ।
प्रार्थयन्ते यथाकालं शकटैर्भैक्षचर्यया ॥ ६०॥

तपोर्जनपरा धीरास् तपसा क्षीणकल्मषाः ।
पर्यटन्तो दिशस्सर्वाः कामक्रोधविवर्जिताः ॥ ६१॥

तेनैव कालयोगेन त्रिदिवं यान्ति शोभने ।
तत्र प्रमुदिता भोगैर् विचरन्ति यथासुखम् ॥ ६२॥

एतत्ते कथितं देवि किं भूयश्श्रोतुमिच्छसि ॥ ६३

उमा—

वैखानसानां वै धर्मं श्रोतुमिच्छाम्यहं प्रभो ॥ ६३॥

श्रीमहेश्वरः—

ते वै वैखानसा नाम वानप्रस्थाश्शुभेक्षणे ।
तीव्रेण तपसा युक्ता दीप्तिमन्तस्स्वतेजसा ॥ ६४॥

सत्यव्रतपरा धीरास् तेषां निष्कल्मषं तपः ॥ ६५

अश्मकुट्टास्तथाऽन्ये च दन्तोलूखलिनस्तथा ।
शीर्णपर्णाशिनश्चान्ये उञ्छवृत्तास्तथा परे ॥ ६६

कपोतवृत्तयश्चान्ये कापोतीं वृत्तिमास्थिताः ।
पशुप्रचारनिरताः फेनपाश्च तथा परे ॥ ६७

[1]मृगवन्मृगचर्यायां सञ्चरन्ति तथा परे ।
अब्भक्षा वायुभक्षाश्च निराहारास्तथैव च ॥ ६८

केचिच्चरन्ति सद्विष्णोः पादपूजनमुत्तमम् ।
सञ्चरन्ति तपो घोरं व्याधिमृत्युविवर्जिताः ॥ ६९

स्ववशादेव ते मृत्युं [2]भीषयन्ति च नित्यशः ॥ ६९॥

इन्द्रलोके तथा तेषां निर्मिता भोगसञ्चयाः ।
अमरैस्समतां यान्ति देववद्भोगसंयुताः ॥ ७०॥

---

1. अ—इदमर्धं नास्ति
2. ख—अभिकाङ्क्षन्ति नित्यशः

वराप्सरोभिस्संयुक्ताश् चिरकालमनिन्दिते ।
एतत्ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ ७१॥

उमा—

भगवञ् श्रोतुमिच्छामि वालखिल्यांस्तपोधनान् ॥ ७२

श्रीमहेश्वरः—

धर्मचर्यां तथा देवि वालखिल्यगतां शृणु ॥ ७२॥

मृगनिर्मोकवसना निर्द्वन्द्वास्ते तपोधनाः ।
अङ्गुष्ठमात्रास्सुश्रोणि तेष्वेवाङ्गेषु संयुताः ॥ ७३॥

उद्यन्तं सततं सूर्यं स्तुवन्तो विविधैस्स्तवैः ।
भास्करस्येव किरणैस् सहसा यान्ति नित्यदा ॥ ७४॥

द्योतयन्तो दिशस्सर्वा धर्मज्ञास्सत्यवादिनः ॥ ७५

तेष्वेव निर्मलं सत्यं लोकार्थं तु प्रतिष्ठितम् ।
लोकोऽयं धार्यते देवि तेषामेव तपोबलात् ॥ ७६

महात्मनां तु तपसा सत्येन च शुचिस्मिते ।
क्षमया च महाभागे भूतानां संस्थितिं विदुः ॥ ७७

प्रजार्थमपि लोकार्थं महद्भिः क्रियते तपः ।
तपसा प्राप्यते सर्वं तपसा प्राप्यते फलम् ॥ ७८

दुष्प्रापमपि यल्लोके तपसा प्राप्यते हि तत् ॥ ७८॥

पञ्चभूतार्थतत्त्वे च लोकसृष्टिविवर्धनम् ।

एतत् सर्वं समासेन तपोयोगाद्विनिर्मितम् ॥ ७९॥

तस्मादयं त्वृषिगणस् तपस्तप इति प्रिये ।
प्रियार्थमृषिसङ्घस्य प्रजानां हितकाम्यया ॥ ८०॥

नारदः—

एवं ब्रुवन्तं देवेशम् ऋषयश्चापि तुष्टुवुः ।
भूयः परतरं यत्तु तदाप्रभृति चक्रिरे ॥ ८१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
[ अस्मिन्नध्याये ८१॥ श्लोकाः ]

---

## ॥ सप्तदशाधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति निवृत्तिधर्मफलकथनम् ॥ १ ॥ तथा गार्हस्थ्य-प्रशंसनपूर्वकं तद्धर्मफलादिकथनम् ॥ २ ॥

---

उमा—

उक्तस्त्वया त्रिवर्गस्य धर्मः परमकश्शुभः ।
सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीतु मे ॥ १

श्रीमहेश्वरः—

[1]ब्रह्मणा लोकसंसारे सृष्टा धात्रा गुणार्थिना ।

1. क—अर्धचतुष्टयं नास्ति

लोकांस्तारयितुं युक्ता मर्त्येषु क्षितिदेवताः ॥ २

तेषु तावत् प्रवक्ष्यामि धर्मं शुभफलोदयम् ।
ब्राह्मणेष्वेव यो धर्मः परमश्शुभलक्षणः ॥ ३

इमे च धर्मा लोकार्थं पूर्वं सृष्टास्स्वयम्भुवा ।
पृथिव्यां सद्विजैर्नित्यं कीर्त्यमानं निबोध मे ॥ ४

स्वदारनिरतिर्धर्मो नित्यं जप्यं तथैव च ।
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ॥ ५

शूद्रो धर्मपरो नित्यं शुश्रूषाऽविमना भवेत् ॥ ५॥

त्रैविद्यो ब्राह्मणो वृद्धो न चाध्ययनजीविकः ।
त्रिवर्गस्य व्यतिक्रान्तं तस्य धर्मस्सनातनः ॥ ६॥

षट् तु कर्माणि प्रोक्तानि सृष्टानि ब्रह्मणा पुरा ।
धर्मिष्ठानि वरिष्ठानि तानि तानि शृणूत्तमे ॥ ७॥

यजनं याजनं चैव दानं पात्रे प्रतिग्रहः ।
अध्यापनञ्चाध्ययनं षट्कर्मा धर्मभाग्द्विजः ॥ ८॥

नित्यस्वाध्यायतो धर्मो नित्ययज्ञस्सनातनः ।
दानं प्रशंसते नित्यं ब्राह्मणेषु त्रिकर्मसु ॥ ९॥

अयमेव परो धर्मस् संवृत्तस्सत्सु विद्यते ।
गर्भस्थाने विशुद्धानां धर्मस्य नियमो महान् ॥ १०॥

पञ्चयज्ञविशुद्धात्मा ऋतुनित्योऽनसूयकः ।
दान्तो ब्राह्मणसत्कर्ता सुसम्मृष्टनिवेशनः ॥ ११॥

चक्षुश्श्रोत्रमनोजिह्वास्निग्धवर्णप्रदस्सदा ।
अतिथ्यभ्यागतरतश् शेषान्नकृतभोजनः ॥ १२॥

पाद्यमर्घ्यं यथान्यायम् आसनं शयनं तथा ।
दीपं प्रतिश्रयं चैव यो ददाति स धार्मिकः ॥ १३॥

प्रातरुत्थाय वै पश्चाद् भोजने तु निमन्त्रयेत् ।
सत्कृत्यानुव्रजेद्यश्च तस्य धर्मस्सनातनः ॥ १४॥

प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते ।
तदहं कीर्तयिष्यामि त्रिवर्गेषु च यद्यथा ॥ १५॥

[1]एकेनांशेन धर्मार्थः कर्तव्यो हितमिच्छता ।
एकेनांशेन धर्मार्थम् एकमंशं विवर्धयेत् ॥ १६॥

निवृत्तिलक्षणः पुण्यो धर्मो मोक्षे विधीयते ।
तस्य वृत्तिं प्रवक्ष्यामि तां शृणुष्व समाहिता ॥ १७॥

सर्वभूतदया धर्मो निवृत्तिः परमस्सदा ।
बुभुक्षितं पिपासार्तम् अतिथिं श्रान्तमागतम् ॥ १८॥

अर्चयन्ति वरारोहे तेषामपि फलं महत् ॥ १९

पात्रमित्येव दातव्यं सर्वस्मै धर्मकाङ्क्षिभिः ।

---

1. अ—इदमर्धं नास्ति

आगमिष्यति यत् पात्रं तत् पात्रं तारयिष्यति ॥ २०

काले सम्प्राप्तमतिथिं भोक्तुकाममुपस्थितम् ।
यस्तं सम्भावयेत् तत्र व्यासोऽयं समुपस्थितः ॥ २१

तस्य पूजां यथाशक्त्या सौम्यचित्तः प्रयोजयेत् ।
[1]चित्तमूलो भवेद्धर्मो धर्ममूलं भवेद्यशः ॥ २२

तस्मात् सौम्येन चित्तेन दातव्यं देवि सर्वथा ।
सौम्यचित्तस्तु यो दद्यात् तद्धि दानमनुत्तमम् ॥ २३

यथाऽम्बुबिन्दुभिस्सूक्ष्मैः पतद्भिर्मेदिनीतले ।
केदाराश्च तटाकानि सरांसि सरितस्तथा ॥ २४

तोयपूर्णानि दृश्यन्ते अप्रतर्क्याणि शोभने ।
अल्पमल्पमपि ह्येकं दीयमानं विवर्धते ॥ २५

पीडयाऽपि च [2]भृत्यानां दानमेव विशिष्यते ।
पुत्रदारधनं धान्यं न मृताननुगच्छति ॥ २६

श्रेयो दानं च भोगश्च धनं प्राप्य यशस्विनि ।
दानेन हि महाभागा भवन्ति मनुजाधिपाः ॥ २७

नास्ति भूमौ दानसमं नास्ति दानसमो निधिः ।
नास्ति सत्यात् परो धर्मो नानृतात् पातकं परम् ॥ २८

आश्रमे यस्तु तप्येत तपोमूलफलाशनः ।

1. क-ख-घ—वित्त 2. ख—भूतानां

आदित्याभिमुखो भूत्वा जटावल्कलसंवृतः ॥ २९

मण्डूकशायी हेमन्ते ग्रीष्मे पञ्चतपा भवेत् ॥ २९॥

सम्यक्तपश्चरन्तीह श्रद्दधाना वनाश्रमे ।
गृहाश्रमस्य ते देवि कलां नार्हन्ति षोडशीम् ॥ ३०॥

उमा—

गृहाश्रमस्य या चर्या व्रतानि नियमाश्च ये ।
तथा च देवताः पूज्यास् सततं गृहमेधिना ॥ ३१॥

यच्च परिहर्तव्यं गृहिणा तिथिपर्वसु ।
तत् सर्वं श्रोतुमिच्छामि कथ्यमानं त्वया विभो ॥ ३२॥

श्रीमहेश्वरः—

गृहाश्रमस्य यन्मूलं फलं धर्मोऽयमुत्तमः ।
पादैश्चतुर्भिस्सततं धर्मो यत्र प्रतिष्ठितः ॥ ३३॥

सारभूतं वरारोहे दध्नो घृतमिवोद्धृतम् ।
तदहं ते प्रवक्ष्यामि श्रूयतां धर्मचारिणि ॥ ३४॥

शुश्रूषन्ते ये पितरं मातरं च गृहाश्रमे ।
भर्तारं चैव या नारी अग्निहोत्रं च ये द्विजाः ॥ ३५॥

तेषु तेषु च प्रीणन्ति देवा इन्द्रपुरोगमाः ।
पितरः पितृलोकस्थास् स्वधर्मेण स रज्यते ॥ ३६॥

उमा—

मातापितृवियुक्तानां का चर्या गृहमेधिनाम् ।
विधवानां च नारीणां भवानेतद् ब्रवीतु मे ॥ ३७॥

श्रीमहेश्वरः—

देवतातिथिशुश्रूषा गुरुवृद्धाभिवादनम् ।
अहिंसा सर्वभूतानाम् अलोभस्सत्यसन्धता ॥ ३८॥

ब्रह्मचर्यं शरण्यत्वं शौचं पूर्वाभिभाषणम् ।
कृतज्ञत्वमपैशुन्यं सततं धर्मशीलता ॥ ३९॥

दिने द्विरभिषेकं च पितृदैवतपूजनम् ।
गवाह्निकप्रदानं च संविभागोऽतिथिष्वपि ॥ ४०॥

दीपं प्रतिश्रयं चैव दद्यात् पाद्यासनं तथा ।
पञ्चमेऽहनि षष्ठे वा द्वादशेऽप्यष्टमेऽपि वा ॥ ४१॥

चतुर्दशे पञ्चदशे ब्रह्मचारी सदा भवेत् ॥ ४२

श्मश्रुकर्म शिरोभ्यङ्गम् अञ्जनं दन्तधावनम् ।
नैतेष्वहस्सु कुर्वीत [1]तेषु लक्ष्मीः प्रतिष्ठिता ॥ ४३

व्रतोपवासनियमस् तपो दानं च शक्तितः ।
भरणं भृत्यवर्गस्य दीनानामनुकम्पनम् ॥ ४४

परदारनिवृत्तिश्च स्वदारेषु रतिस्सदा ।

---

1. क-ब—तेष्वल

शरीरमेकं दम्पत्योर् विधात्रा पूर्वनिर्मितम् ॥ ४५
तस्मात् स्वदारनिरतो ब्रह्मचारी विधीयते ॥ ४५॥

शीलवृत्तविनीतस्य निगृहीतेन्द्रियस्य च ।
आर्जवे वर्तमानस्य सर्वभूतहितैषिणः ॥ ४६॥

प्रियातिथेश्च क्षान्तस्य धर्मार्जितधनस्य च ।
गृहाश्रमपदस्थस्य किमन्यैः कृत्यमाश्रमैः ॥ ४७॥

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा गृहाश्रमं प्राप्य सर्वे जीवन्ति चाश्रमाः ॥ ४८॥

राजानस्सर्वपाषण्डास् सर्वे रङ्गोपजीविनः ।
व्यालग्रहाश्च डम्भाश्च चोरा राजभटास्तथा ॥ ४९॥

सविद्यास्सर्व[1]शीलज्ञास् सर्वे वै विचिकित्सकाः ।
दूराध्वानं प्रपन्नाश्च क्षीणपथ्योदना नराः ॥ ५०॥

एते चान्ये च बहवस् तर्कयन्ति गृहाश्रमम् ॥ ५१

मार्जारा मूषिकाश्श्वानस् सूकराश्च शुकास्तथा ।
[2]कपोतकाः कर्कटकास् सरीसृपनिषेवणाः ॥ ५२

अरण्यवासिनश्चान्ये सङ्घा ये मृगपक्षिणाम् ।
एवं बहुविधा देवि लोकेऽस्मिन् सचराचराः ॥ ५३

गृहे क्षेत्रे बिले चैव शतशोऽथ सहस्रशः ।

---

1. ख—जीव 2. ख—कपोतकाकवटकाः

गृहस्थेन कृतं कर्म सर्वैस्तैरिह भुज्यते ॥ ५४

उपयुक्तं च यत्तेषां मतिमान् नानुशोचति ॥ ५४॥

धर्म इत्येव सङ्कल्प्य यस्तु तस्य फलं शृणु ॥ ५५

सर्वयज्ञप्रणीतस्य हयमेधेन यत् फलम् ।
वर्षे स द्वादशे देवि फलेनैतेन युज्यते ॥ ५६

आशापाशविमोक्षं च विद्धि धर्ममनुत्तमम् ।
वृक्षमूलचरो नित्यं शून्यागारनिवेशनम् ॥ ५७

नदीपुलिनशायी च नदीतीरमनुव्रजन् ।
विमुक्तस्सर्वबन्धेभ्यस् स्नेहबन्धेन वै द्विजः ॥ ५८

आत्मन्येवात्मना भावं समायोज्येह ते वने ।
आत्मभूतो यताहारो मोक्षदृष्टेन कर्मणा ॥ ५९

पवित्रनित्यो युक्तश्च तस्य धर्मस्सनातनः ॥ ५९॥

नैकत्र रमते सक्तो न चैकग्रामगोचरः ।
युक्तोऽप्यटति यो मुक्तो न चैकपुलिनाशयः ॥ ६०॥

एष मोक्षविदां धर्मो वेदोक्तस्सत्पथे स्थितः ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
[ अस्मिन्नध्याये ६१ श्लोकाः ]

---

## ॥ अष्टादशाधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति विस्तरेण राजधर्मकथनम् ॥

उमा—

देवदेव नमस्तुभ्यं त्रियक्ष वृषभध्वज ।
श्रुतं मे भगवन् सर्वं त्वत्प्रसादान्महेश्वर ॥ १

सङ्गृहीतं मया तच्च तव वाक्यमनुत्तमम् ।
इदानीमस्ति सन्देहो मानुषेष्विह कश्चन ॥ २

तुल्यप्राणशिरःकायो राजाऽयमिति दृश्यते ।
केन कर्मविपाकेन सर्वप्राधान्यमर्हति ॥ ३

स चापि दण्डयन् मर्त्यान् भर्त्सयन् विविधानपि ।
प्रेत्यभावे कथं लोकाँल्लभते पुण्यकर्मणाम् ॥ ४

राजवृत्तमहं तस्माच्छ्रोतुमिच्छामि मानद ॥ ४॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि राजधर्मं शुभानने ॥ ५

राजायत्तं हि यत् सर्वं लोकवृत्तं शुभाशुभम् ।
महतस्तपसो देवि फलं राज्यमिति स्मृतम् ॥ ६

तपोदानमयं राज्यं परं स्थानं विधीयते ।
तस्माद्राज्ञस्सदा मर्त्याः प्रणमन्ति यतस्ततः ॥ ७

न्यायतस्त्वं महाभागे श्रोतु[1]मिच्छसि भामिनि ।
तस्मात्तस्यैव चरितं जगत्पथ्यं शृणु प्रिये ॥ ८
अराजके पुरा त्वासीत् प्रजानां सङ्कुलं महत् ।
तद्दृष्ट्वा सङ्कुलं ब्रह्मा मनुं राज्ये न्यवेशयत् ॥ ९
तदाप्रभृति सन्दृष्टं राज्ञां वृत्तं शुभाशुभम् ।
तन्मे शृणु वरारोहे तस्य पथ्यं जगद्धितम् ॥ १०
यथा प्रेत्य लभेत् स्वर्गं यथा वीर्यं यशस्तथा ॥ १०॥
पित्र्यं वा भूतपूर्वं वा स्वयमुत्पाद्य वा पुनः ।
राज्यधर्ममनुष्ठाय विधिवद्भोक्तुमर्हति ॥ ११॥
आत्मानमेव प्रथमं विनयैरुपपादयेत् ।
अनु भृत्यान् प्रजाः पश्चाद् इत्येष विनयक्रमः ॥ १२॥
स्वामिनं चोपमां कृत्वा प्रजास्तद्वृत्तकाङ्क्षया ।
स्वयं विनयसम्पन्ना भवन्तीह शुभेक्षणे ॥ १३॥
स्वस्मात् पूर्वतरं राजा विनयत्येव वै प्रजाः ।
[2]अपहास्यो भवेत्तादृक् स्वदोषस्यानवेक्षणात् ॥ १४॥
विद्याभ्यासैर्वृद्धयोगैर् आत्मानं विनयं नयेत् ।
विद्या धर्मार्थफलिनी तद्विदो वृद्धसंज्ञिताः ॥ १५॥

---

1. क-घ—कामाऽसि
2. अ—अर्धत्रयं नास्ति

इन्द्रियाणां जयो देवि अत ऊर्ध्वमुदाहृतः ।
अजये सुमहान् दोषो राजानं विनिपातयेत् ॥ १६॥

पञ्चैव स्ववशे कृत्वा तदर्थान् पञ्च शोषयेत् ।
षडुत्सृज्य यथायोगं ज्ञानेन विनयेन च ॥ १७॥

शास्त्रचक्षुर्नयपरो भूत्वा भृत्यान् समाहरेत् ॥ १८

वृत्तश्रुतकुलोपेतान् उपधाभिः परीक्षितान् ।
अमात्यानुपधातीतान् सापसर्पाञ्जितेन्द्रियान् ॥ १९

योजयेत यथायोगं यथार्हं स्वेषु कर्मसु ॥ १९॥

अमात्या बुद्धिसम्पन्ना राष्ट्रं बहुजनप्रियम् ।
दुराधर्षं पुरश्रेष्ठं कोशः कृच्छ्रसहस्रसृतः ॥ २०॥

अनुरक्तं बलं साम्नाम् अद्वैधं मित्रमेव च ।
एताः प्रकृतयस्त्वेषु स्वामी विनयतत्त्ववित् ॥ २१॥

प्रजानां रक्षणार्थाय सर्वमेतद्विनिर्मितम् ।
आभिः करणभूताभिः कुर्याल्लोकहितं नृपः ॥ २२॥

आत्मरक्षा नरेन्द्रस्य प्रजारक्षार्थमिष्यते ।
तस्मात् सततमात्मानं संरक्षेदप्रमादवान् ॥ २३॥

भोजनाच्छादनस्नानाद् बहिर्निष्क्रमणादपि ।
नित्यं स्त्रीगणसंयोगाद् रक्षेदात्मानमात्मवान् ॥ २४॥

स्वेभ्यश्चैव परेभ्यश्च शस्त्रादपि विषादपि ।
सततं पुत्रदारेभ्यो रक्षेदात्मानमात्मवान् ॥ २५॥

[1]सर्वेभ्य एव स्थानेभ्यो रक्षेदात्मानमात्मवान् ।
प्रजानां रक्षणार्थाय प्रजाहितकरो भवेत् ॥ २६॥

प्रजाकार्यं तु तत्कार्यं प्रजासौख्यं तु तत्सुखम् ।
प्रजाप्रियं प्रियं तस्य स्वहितं तु प्रजाहितम् ॥ २७॥

प्रजार्थं तस्य सर्वस्वम् आत्मार्थं न विधीयते ॥ २८

प्रकृतीनां हि रक्षार्थं रागद्वेषौ व्युदस्य च ।
उभयोः पक्षयोर्वादं श्रुत्वा चैव यथातथम् ॥ २९
तमर्थं विमृशेद्बुद्ध्या स्वयमातत्त्वदर्शनात् ॥ २९॥

तत्त्वविद्भिश्च बहुभिस् सहासीनो नरोत्तमैः ।
कर्तारमपराधं च देशकालौ नयानयौ ॥ ३०॥

ज्ञात्वा सम्यग्यथाशास्त्रं ततो दण्डं नयेन्नृषु ॥ ३१
एवं कुर्वन्नभेद्धर्मं पक्षपातविवर्जनात् ॥ ३१॥

प्रत्यक्षाप्तोपदेशाभ्याम् अनुमानेन वा पुनः ।
बोद्धव्यं सततं राज्ञा देशवृत्तं शुभाशुभम् ॥ ३२॥

चारैः कर्मप्रवृत्त्या च तद्विज्ञाय विचारयेत् ।
अशुभं निर्हरेत् सद्यो जोषयेच्छुभमात्मनः ॥ ३३॥

1. अ—इदमर्धं नास्ति

गर्ह्यान् विगर्हयेदेव पूज्यान् सम्पूजयेत्तथा ।
दण्ड्यांश्च दण्डयेद्देवि नात्र कार्या विचारणा ॥ ३४॥

पश्चापेक्षं सदा मन्त्रं कुर्याद्बुद्धियुतैर्नरैः ।
कुलवृत्तश्रुतोपेतैर् नित्यं मन्त्रपरो भवेत् ॥ ३५॥

[1]कामकारेण वै मुख्यैर् नैव मन्त्रमना भवेत् ।
राजा राष्ट्रहितापेक्षं सत्यधर्माणि कारयेत् ॥ ३६॥

सर्वोद्योगं स्वयं कुर्याद् दुर्गादिषु सदा नृपु ।
देशवृद्धिकरान् भृत्यान् अप्रमादेन कारयेत् ॥ ३७॥

देशक्षयकरान् सर्वान् अप्रियांश्च विसर्जयेत् ।
अहन्यहनि सम्पश्येद् अनुजीविगणं स्वयम् ॥ ३८॥

सुमुखस्सुप्रियो दत्त्वा सम्यग्वृत्तं समाचरेत् ।
अधर्म्यं परुषं तीक्ष्णं वाक्यं वक्तुं न चार्हति ॥ ३९॥

अविश्वास्यं हि वचनं वक्तुं सत्सु न चार्हति ।
नरे नरे गुणान् दोषान् सम्यग्वेदितुमर्हति ॥ ४०॥

स्वेङ्गितं वृणुयाद्धैर्यान्न कुर्यात् [2]क्षुद्रसंविदम् ।
परेङ्गितज्ञो लोकेषु भूत्वा संसर्गमाचरेत् ॥ ४१॥

स्वतश्च परतश्चैव परस्परभयादपि ।

1. घ—इदमर्धं नास्ति
2. ख—क्षत्रियसंविदम्

अमानुषभयेभ्यश्च स्वाः प्रजाः पालयेन्नृपः ॥ ४२॥

लुब्धाः कठोराश्चाप्यस्य मानवा दस्युवृत्तयः ।
निग्राह्या एव ते राज्ञा सङ्गृहीत्वा यतस्ततः ॥ ४३॥

कुमारान् विनयैरेव जन्मप्रभृति योजयेत् ।
तेषामात्मगुणोपेतं यौवराज्योन योजयेत् ॥ ४४॥

प्रकृतीनां यथा न स्याद् राज्यभ्रंशो भवेद्भयम् ।
एतत् सञ्चिन्तयन् नित्यं तद्विधानं तथाऽर्हति ॥ ४५॥

अराजकं क्षणमपि राज्यं न स्याद्धि शोभने ।
आत्मनोऽनुविधानाय यौवाराज्यं सदेष्यते ॥ ४६॥

कुलजानां च वैद्यानां श्रोत्रियाणां तपस्विनाम् ।
अन्येषां वृत्तियुक्तानां विशेषं कर्तुमर्हति ॥ ४७॥

आत्मार्थं राज्यतन्त्रार्थं कोशार्थं च समाचरेत् ॥ ४८

दुर्गाद्राष्ट्रात् समुद्राच्च वणिग्भ्यः पुरुषात्ययात् ।
परात्मगुणसाराभ्यां भृत्यपोषणमाचरेत् ॥ ४९

वाहनानां वि[1]धायाग्रे पोषणं [2]योधकर्मसु ।
सादरस्सततं भूत्वा अपेक्षाव्रतमाचरेत् ॥ ५०

चदुर्धा विभजेत् कोशं धर्मभृत्यात्मकारणात् ।

1. क-ख-घ—हा
2. ख—यानकर्मसु

आपदर्थं च नीतिज्ञो देशकालवशेन तु ॥ ५१

अनाथान् [1]व्याधितान् वृद्धान् स्वदेशे पोषयेन्नृपः ॥ ५१॥

सन्धिं च विग्रहं चैव तद्विशेषांस्तथा परान् ।
यथावत् संविमृश्यैव बुद्धिपूर्वं समाचरेत् ॥ ५२॥

सर्वेषां सम्प्रियो भूत्वा मण्डलं सततं चरेत् ।
शुभेष्वपि च कार्येषु न चैकान्तस्समाचरेत् ॥ ५३॥

स्वतश्च परतश्चैव [2]व्यसनानि विमृश्य सः ।
परेण धार्मिकान् योगान् नातीयाद्देषलोभतः ॥ ५४॥

रक्ष्यत्वं वै प्रजाधर्मः क्षत्रधर्मस्तु रक्षणम् ।
कुनृपैः पीडितास्तस्मात् प्रजास्सर्वत्र पालयेत् ॥ ५५॥

यात्राकालेऽनवेक्ष्यैव पश्चात् कोपफलोदयः ।
तद्युक्ताश्चापदश्चैव प्राशनादिति चिन्तयेत् ॥ ५६॥

व्यसनेभ्यो बलं रक्षेन्नयतो व्ययतोऽपि वा ।
प्रायशो वर्जयेद्युद्धं प्राणरक्षणकारणात् ॥ ५७॥

कारणादेव योद्धव्यं नात्मनः परदोषतः ।
सुयुद्धे प्राणमोक्षश्च तस्य धर्माय इष्यते ॥ ५८॥

अभियुक्तो बलवता कुर्यादापद्विधिं नृपः ।

1. ख—व्यथितान्
2. अ—इतोऽष्टौ पादा न सन्ति

अनुनीय तथा सर्वान् प्रजानां हितकारणात् ॥ ५९॥

अन्यप्रकृतियुक्तानां राज्ञां वृत्तिविचारिणाम् ।
अन्यांश्च प्रतिपन्नानां न तान् संयोक्तुमर्हति ॥ ६०॥

शुभाशुभं यदा देवि व्रतज्ञभयसाधनम् ।
आत्मैव तच्छुभं कुर्याद् अशुभं योजयेत् परान् ॥ ६१॥

एवमुद्देशतः प्रोक्तम् अलोपत्वं यथा भवेत् ।
एष देवि समासेन राजधर्मः प्रकीर्तितः ॥ ६२॥

एवं संवर्तमानस्तु दण्डयन् [1]भर्त्सयन् प्रजाः ।
निष्कल्मषमवाप्नोति पद्मपत्रमिवाम्भसा ॥ ६३॥

एवं संवर्तमानस्य कालधर्मो यदा भवेत् ।
स्वर्गलोके तदा राजा त्रिदशैस्सह तोष्यते ॥ ६४॥

द्विविधं राज्यवृत्तं च न्यायभाग्यसमन्वितम् ।
एवं न्यायानुगं वृत्तं कथितं ते शुभेक्षणे ॥ ६५॥

राज्यं न्यायानुगं नाम बुद्धिशास्त्रानुगं भवेत् ।
धर्म्यं पथ्यं यशस्यं च स्वर्ग्यं चैव तथा भवेत् ॥ ६६॥

[2]राज्यं भाग्यानुगं नाम अयथावत् प्रदृश्यते ।
तत्तु शास्त्रविनिर्मुक्तं सतां कोपकरं भवेत् ॥ ६७॥

अधर्म्यमयशस्यं च दुरन्तं च भवेद्ध्रुवम् ॥ ६८

1. अ—रक्षयन्

2. अ—अर्धचतुष्टयं नास्ति

यत्र स्वच्छन्दतस्सर्वं क्रियते कर्म राजभिः ।
तत्र भाग्यवशाद्भूत्यान् लभते न विशेषतः ॥ ६९

यत्र दण्ड्या न दण्ड्यन्ते पूज्यन्ते वा नराधमाः ।
यत्र सन्तो [1]विहन्यन्ते तत्र भाग्यानुगं भवेत् ॥ ७०

शुभाशुभं यथा यत्र विपरीतं प्रदृश्यते ।
राज्ञि चासुरपक्षे तु तत्र भाग्यानुगं भवेत् ॥ ७१

भाग्यानुगे तु राजानो वर्तमाना यथा तथा ।
प्राप्याकीर्तिमनर्थं च इह लोके शुभेक्षणे ॥ ७२

परत्र सुमहाघोरं तमः प्राप्य दुरत्ययम् ।
तिष्ठन्ति नरके देवि प्रळयान्तादिति स्थितिः ॥ ७३

मोक्षं [2]तु सुकृतीनां च विद्यते कालपर्ययात् ।
नास्त्येव मोक्षणं देवि राज्ञां दुष्कृतकारिणाम् ॥ ७४

एतत् सर्वं समासेन राजवृत्तं शुभाशुभम् ।
कथितं ते महाभागे किं भूयश्श्रोतुमिच्छसि ॥ ७५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८॥
[अस्मिन्नध्याये ७५ श्लोकाः]

---

1. ख—वसन्त्यत
2. ख—दुष्कृतिनां चापि

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥

ईश्वरेण हिंसाया दुस्त्यजत्वनिरूपणपूर्वकमहिंसाप्रशंसनम् ॥

उमा—

देवदेव महादेव सर्वदेवनमस्कृत ।
यानि धर्मरहस्यानि श्रोतुमिच्छामि तान्यहम् ॥ १

श्रीमहेश्वरः—

रहस्यं श्रूयतां देवि मानुषाणां सुखावहम् ॥ १॥
नपुंसकेषु वन्ध्यासु वियोनौ पृथिवीतले ।
उत्सर्गो रेतसस्तेषु न कार्यो धर्मकाङ्क्षिभिः ॥ २॥
एतेषु बीजं प्रक्षिप्तं न च रोहति वै प्रिये ॥ ३
यत्र वा तत्र वा बीजं धर्मार्थी नोत्सृजेत् पुनः ।
नरो बीजविनाशेन [1]बाध्यते ब्रह्महत्यया ॥ ४
अहिंसा परमो धर्मो ह्यहिंसा परमं सुखम् ।
अहिंसा धर्मशास्त्रेषु सर्वेषु परमं पदम् ॥ ५
देवतातिथिशुश्रूषा सततं धर्मशीलता ।
वेदाध्ययनयज्ञाश्च तपो दानं दमस्तथा ॥ ६
आचार्यगुरुशुश्रूषा तीर्थाभिगमनं तथा ।

1. ख—लिप्यते

अहिंसाया वरारोहे कलां नार्हन्ति षोडशीम् ॥ ७

एतत् ते परमं गुह्यम् आख्यातं परमार्चितम् ॥ ७॥

उमा—

यदि धर्मस्त्वहिंसायां किमर्थममरोत्तम ।

यज्ञेषु पशुबन्धेषु हन्यन्ते पशवो द्विजैः ॥ ८॥

कथं च भगवन् भूयो हिंसमाना नराधिपाः ।

स्वर्गं सुदुर्गमं यान्ति [1]सदा स्म रिपुसूदन ॥ ९॥

यस्यैव गोसहस्राणि विंशतिस्साधिकानि तु ।

अहन्यहनि हन्यन्ते [2]द्विजानां मांसकारणात् ॥ १०॥

समांसं तु स दत्त्वाऽन्नं रन्तिदेवो नराधिपः ।

कथं स्वर्गमनुप्राप्तः परं कौतूहलं हि मे ॥ ११॥

किं तु धर्मं न शृण्वन्ति न श्रद्धति वा श्रुतम् ।

मृगयां वै विनिर्गत्य मृगान् हन्ति नराधिपः ॥ १२॥

एतत् सर्वं विशेषेण विस्तरेण वृषध्वज ।

श्रोतुमिच्छामि [3]तत् सर्वं तत्त्वमद्य ममोच्यताम् ॥ १३॥

ईश्वरः—

बहुमान्यमिदं देवि नास्ति कश्चिदहिंसकः ।

---

1. क—स्मरनिषूदन; ख—ते कथं रिपुसूदन
2. ख—गोसवस्य तु कारणात् [पाठान्तरं चास्ति]
3. ख—सर्वज्ञ

श्रूयतां कारणं चात्र यथाऽनेकविधं भवेत् ॥ १४॥

दृश्यते चापि लोकेऽस्मिन् न कश्चिदविहिंसकः ॥ १५

धरणीसंश्रितान् देवि सुसूक्ष्मांश्चैव मध्यमान् ।
सञ्चरंश्चरणाभ्यां च हन्ति जीवाननेकशः ॥ १६

अज्ञानाज्ज्ञानतो वाऽपि ये जीवाश्शयनासने ॥ १६॥

उपाविशञ् शयानश्च हन्ति जीवाननेकशः ॥ १७

शिरोवस्त्रेषु ये जीवा नराणां स्वेदसम्भवाः ।
तांश्च हिंसन्ति सततं दंशांश्च मशकानपि ॥ १८

जले जीवास्तथाऽऽकाशे पृथिवी जीवमालिनी ।
एवं जीवाकुले लोके कोऽसौ स्याद्यस्त्वहिंसकः ॥ १९

स्थूलमध्यमसूक्ष्मैश्च स्वेदवारिमहीरुहैः ।
दृश्यरूपैरदृश्यैश्च नानारूपैश्च भामिनि ॥ २०

जीवैस्ततमिदं सर्वम् आकाशं पृथिवी तथा ।
अन्योन्यं ते च हिंसन्ति दुर्बलान् बलवत्तराः ॥ २१

मत्स्या मत्स्यान् ग्रसन्तीह खगाश्चैव खगांस्तथा ।
सरीसृपैश्च जीवन्ति कपोताद्या विहङ्गमाः ॥ २२

भूचराः खेचराश्चान्ये क्रव्यादा मांसगृद्धिनः ।
समृद्धाः परमांसैस्तु भक्ष्येरंस्तेऽपि चापरैः ॥ २३

सत्त्वैरसत्त्वानि जीवन्ति शतशोऽथ सहस्रशः ।
अपीडयित्वा नैवान्यं जीवा जीवन्ति सुन्दरि ॥ २४

स्थूलकायस्य सत्त्वस्य खरस्य महिषस्य च ।
जीवस्यैकस्य मांसेन पयसा रुधिरेण वा ॥ २५

तृप्यन्ते बहवो जीवाः क्रव्यादा मांसभोजनाः ॥ २५॥

एको जीवसहस्राणि सदा खादति मानवः ।
अन्नाद्यस्योपभोगेन धान्यसंज्ञानि यानि तु ॥ २६॥

मांसधान्यैश्च बीजैश्च भोजनं परिवर्जयेत् ॥ २७

त्रिरात्रं पञ्चरात्रं वा सप्तरात्रं तथाऽपि वा ।
धान्यानि यो न हिंसेताहिंसकः परिकीर्तितः ॥ २८

नाश्नाति यावतो जीवस् तावत् पुण्येन युज्यते ।
आहारस्य वियोगेन शरीरं परितप्यते ॥ २९

तप्यमाने शरीरे तु शरीरं चेन्द्रियाणि च ।
वशे तिष्ठन्ति सुश्रोणि नृपाणामिव किङ्कराः ॥ ३०

निरुणद्धीन्द्रियाण्येव स सुखी स विचक्षणः ॥ ३०॥

इन्द्रियाणां निरोधेन दानेन च दमेन च ।
नरस्सर्वमवाप्नोति मनसा यद्यदिच्छति ॥ ३१॥

एवं मूलमहिंसाया उपवासः प्रकीर्तितः ॥ ३२

आहारं कुरुते यस्तु भूमिमाक्रमते च यः ।
सर्वे ते हिंसका देवि यथा धर्मेषु दृश्यते ॥ ३३

यथैवाहिंसको देवि तत्त्वतो ज्ञायते नरः ।
तथा ते तं प्रवक्ष्यामि श्रूयतां धर्मचारिणि ॥ ३४

फलानि मूलपर्णानि भस्म वा योऽपि भक्षयेत् ।
आलेख्यमिव निश्चेष्टं तं मन्येऽहमहिंसकम् ॥ ३५

आरम्भा हिंसया युक्ता धूमेनाग्निरिवावृताः ।
तस्माद्यस्तु निराहारस् तं मन्येऽहमहिंसकम् ॥ ३६

यस्तु सर्वं समुत्सृज्य दीक्षित्वा नियतश्शुचिः ।
कृत्वा मण्डलमर्यादां सङ्कल्पं कुरुते नरः ॥ ३७

यावज्जीवमनाशित्वा कालकाङ्क्षी दृढव्रतः ।
धन्येन तपसा युक्तस् तं मन्येऽहमहिंसकम् ॥ ३८

अन्यथा हि न पश्यामि नरो यस्स्यादहिंसकः ।
बहु चिन्त्यमिदं देवि नास्ति कश्चिदहिंसकः ॥ ३९

यतो यतो महाभागे हिंसा स्यान्महती ततः ।
निवृत्तो मधुमांसाभ्यां हिंसा त्वल्पतरा भवेत् ॥ ४०

निवृत्तिः परमो धर्मो निवृत्तिः परमं सुखम् ।
मनसा विनिवृत्तानां धर्मस्य निचयो महान् ॥ ४१

मनःपूर्वागमा धर्मा अधर्माश्च न संशयः ।
मनसा बध्यते चापि मुच्यते चापि मानवः ॥ ४२

निगृहीते भवेत् स्वर्गो विसृष्टे नरको ध्रुवः ।
घातकश्शस्त्रमुद्यम्य मनसा चिन्तयेद्यदि ॥ ४३

आयुःक्षयं गतेऽन्येषां मृते तु प्रहराम्यहम् ।
इति यो घातको हन्यान्न स पापेन लिप्यते ॥ ४४

विधिना निहतः पूर्वं निमित्तं स तु घातकः ।
विधिर्हि बलवान् देवि दुस्त्यजं वै पुराकृतम् ॥ ४५

जीवाः पुराकृतेनैव तिर्यग्योनिसरीसृपाः ।
नानायोनिषु जायन्ते स्वकर्मपरिवेष्टिताः ॥ ४६

नानाविधविचित्राङ्गा नानाशौर्यपराक्रमाः ।
नानाभूमिप्रदेशेषु नानाहाराश्च जन्तवः ॥ ४७

जायमानस्य जीवस्य मृत्युः पूर्वं प्रजायते ।
सुखं वा यदि वा दुःखं यथापूर्वं कृतं तु वा ॥ ४८

प्राप्नुवन्ति नरा मृत्युं यदा यत्र च येन च ।
नातिक्रान्तुं हि शक्यस्स्या[1]न्निर्देशः पूर्वकर्मणः ॥ ४९

अप्रमत्तः प्रमत्तेषु विधिर्जागर्ति जन्तुषु ।
न हि तस्य प्रियः कश्चिन्न द्वेष्यो न च मध्यमः ॥ ५०

1. ख—न्निदेशः

[1]समस्सर्वेषु भूतेषु कालः कालं निरीक्षते ।
गतायुषो ह्याक्षिपते जीवस्सर्वस्य देहिनः ॥ ५१

यथा येन च मर्तव्यं नान्यथा म्रियते हि सः ।
दृश्यते न च लोकेऽस्मिन् भूतो भव्यो द्विधा पुनः ॥ ५२

विज्ञानैर्विक्रमैर्वाऽपि नानामन्त्रौषधैरपि ।
यो हि वञ्चयितुं शक्तो विधेस्तु नियतां गतिम् ॥ ५३

एष तेऽभिहितो देवि जीवहिंसाविधिक्रमः ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

---

1. ख—यमः

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति सदृष्टान्तप्रदर्शनं सर्वैर्विधेर्दुरतिक्रमत्वनिरूपणम् ॥ १ ॥ तथा योधधर्मकथनपूर्वकं राज्ञां योधानां च प्राणप्रशंसनम् ॥ २ ॥

श्रीमहेश्वरः—

श्रूयतां कारणं देवि यथा हि दुरतिक्रमः ।
विधिस्सर्वेषु भूतेषु मर्तव्ये समुपस्थिते ॥ १

आयुःक्षयेणोपहितास् समागम्य वरानने ।
कीटाः पतङ्गा बहवस् स्थूलास्सूक्ष्माश्च मध्यमाः ॥ २
प्रज्वलत्सु प्रदीपेषु स्वयमेव पतन्ति ते ॥ २॥

बहूनां मृगयूथानां नानावननिषेविणाम् ।
यस्तु कालं गतस्तेषां स वै पाशेन बध्यते ॥ ३॥

[1]सूनार्थं देवि बद्धानां क्षीणायुर्यो निबध्यते ।
अवशो घातकस्याथ हस्तं तदहरेति सः ॥ ४॥

यथा पक्षिगणाः क्षिप्रं विस्तीर्णाकाशगामिनः ।
क्षीणायुषो निबध्यन्ते शक्ता अपि पलायितुम् ॥ ५॥

यथा वारिचरा मीना बहवोऽम्बुजजातयः ।

1. घ—इदमर्धं नास्ति

जालं समधिरोहन्ति स्वयमेव विधेर्वशात् ॥ ६॥

शल्यकस्य च जिह्वाग्रं स्वयमारुह्य शोभने ।
आयुःक्षयेणोपहता निबध्यन्ते सरीसृपाः ॥ ७॥

कृषतां कर्षकाणां च नास्ति बुद्धिर्विहिंसने ।
अथैषां लाङ्गलाग्राद्यैर् हन्यन्ते जन्तवोऽक्षयाः ॥ ८॥

पादाग्रेणैव चैकेन यां हिंसां कुरुते नरः ।
मातङ्गोऽपि न तां कुर्यात् क्रूरो जन्मशतैरपि ॥ ९॥

म्रियन्ते यैर्हि मर्तव्यं न तान् हन्ति कृषीवलः ।
कर्षामीति मनस्तस्य नास्ति चिन्ता विहिंसने ॥ १०॥

तस्माज्जीवसहस्राणि हत्वाऽपि न स लिप्यते ।
विधिना स हतः पूर्वं पश्चात् प्राणी विपद्यते ॥ ११॥

एवं सर्वेषु भूतेषु विधिर्हि दुरतिक्रमः ॥ १२

गतायुषा मुहूर्तं तु न शक्यमुपजीवितुम् ।
जीवितव्ये न मर्तव्यं न भूतं न भविष्यति ॥ १३

शुभाशुभं कर्मफलं न शक्यमतिवर्तितुम् ।
तथा ताभिश्च मर्तव्यं भोक्तव्याश्चैव तास्तथा ॥ १४

रन्तिदेवस्य गावो वै विधेर्हि वशमागताः ।
स्वयमायान्ति गावो वै हन्यन्ते यत्र सुन्दरि ॥ १५

गवां वै हन्यमानानां रुधिरप्रभवा नदी ।
चर्मण्वतीति विख्याता खुरशृङ्गास्थिदुर्गमा ॥ १६

रुधिरं तां नदीं प्राप्य तोयं भवति शोभने ।
मेध्यं पुण्यं पवित्रं च गन्धवर्णरसैर्युतम् ॥ १७

तत्राभिषेकं कुर्वन्ति कृतजप्याः कृताह्निकाः ।
द्विजा देवगणाश्चापि लोकपाला महेश्वराः ॥ १८

तस्य राज्ञस्सदा सत्रे स्वयमागम्य सुन्दरि ।
विधिना पूर्वदृष्टेन तन्मांसमुपकल्पितम् ॥ १९

मन्त्रवत् प्रतिगृह्णन्ति यथान्यायं यथाविधि ॥ १९॥

समांसं च सदा ह्यन्नं शतशोऽथ सहस्रशः ।
भुञ्जानानां द्विजातीनाम् अस्तमेति दिवाकरः ॥ २०॥

गावो यास्तत्र हन्यन्ते राज्ञस्तस्य क्रतूत्तमे ।
पठ्यमानेषु मन्त्रेषु यथान्यायं यथाविधि ॥ २१॥

ताश्च स्वर्गं गता गावो रन्तिदेवश्च पार्थिवः ॥ २२

सदा सत्रविधानेन सिद्धिं प्राप्तो नरोत्तमः ॥ २२॥

अथ यस्तु सहायार्थम् उक्तस्स्यात् पार्थिवैर्नरैः ॥ २३

भोगानां संविभागेन वस्त्राभरणभूषणैः ।
सहभोजनसम्बन्धैस् सत्कारैर्विविधैरपि ॥ २४

सहायकाले सम्प्राप्ते सङ्ग्रामे शस्त्रमुद्धरेत् ॥ २४॥

व्यूढानीके यथा[1]शास्त्रं सेनयोरुभयोरपि ।
हस्त्यश्वरथसम्पूर्णे पदातिबलसङ्कुले ॥ २५॥
चामरच्छत्रशबले ध्वजचर्मायुधोज्ज्वले ॥ २६
शक्तितोमरकुन्तासिशूलमुद्गरपाणिभिः ।
कूटमुद्गरचापेषु मुसुण्ठीजुष्टमुष्टिभिः ॥ २७
भिण्डिपालगदाचक्रप्रास[2]मुद्गरधारिभिः ।
नानाप्रहरणैर्योधैस् सेनयोरुभयोरपि ॥ २८
युद्धशौण्डैः प्रगर्जद्भिर् वृषेषु वृषभैरिव ।
शङ्खदुन्दुभिनादेन नानातूर्यरवेण च ॥ २९
हयहेषितशब्देन कुञ्जराणां तु बृंहितैः ।
योधानां सिंहनादैश्च घण्टानां शिञ्जितस्वनैः ॥ ३०
दिशश्च विदिशश्चैव समन्ताद्बधिरीकृताः ॥ ३०॥
ग्रीष्मान्तेष्ववगर्जद्भिर् नभसीव वलाहकैः ।
रथनेमिखुरोद्भूतैर् अरुणै रणरेणुभिः ॥ ३१॥
कपिलाभिरिवाकाशे छाद्यमाने समन्ततः ।
प्रवृत्ते शस्त्रसम्पाते योधानां तत्र सेनयोः ॥ ३२॥
तेषां प्रहारक्षतजं रक्तचन्दनसन्निभम् ।

1. क—शस्त्रं; घ—शास्त्री
2. क-ख—कर्पण; घ—कर्पट

तेषामास्राणि गात्रेभ्यस् स्रवन्ते रणमूर्धनि ॥ ३३॥
पालाशाशोकपुष्पाणां जङ्गमा इव राशयः ॥ ३४

रणे समभिवर्तन्त उद्यतायुधपाणयः ।
शोभमाना रणे शूरा आह्वयन्तः परस्परम् ॥ ३५

हन्यमानेष्वभिघ्नत्सु शूरेषु रणसङ्कटे ।
पृष्ठं दत्त्वा च ये तत्र नायकस्य नराधमाः ॥ ३६

अनाहता निवर्तन्ते [1]नायके चाप्यनीप्सति ।
ते दुष्कृतं प्रपद्यन्ते नायकस्याखिलं नराः ॥ ३७

यच्चास्ति सुकृतं तेषां युज्यते तेन नायकः ॥ ३७॥

अहिंसा परमो धर्म इति येऽपि नरा विदुः ।
सङ्ग्रामेषु न युध्यन्ते भृत्याश्चैवानुरूपतः ॥ ३८॥

नरकं यान्ति ते घोरं भर्तृपिण्डापहारिणः ॥ ३९

यस्तु प्राणान् परित्यज्य प्रविशेदुद्यतायुधः ।
सङ्ग्राममग्निप्रतिमं पतङ्ग इव निर्भयः ॥ ४०

स्वर्गमाविशते [2]ज्ञात्वा योधस्य गतिनिश्चयम् ॥ ४०॥

आविष्टश्चैव सत्त्वेन सघृणो जायते नरः ।
प्रहारैर्नन्दयेद्देवि सत्त्वेनाधिष्ठितो हि सः ॥ ४१॥

1. ख—इतोऽष्टौ पादा न सन्ति
2. ख—यत्र ज्ञात्वा योधस्य निश्चयम्

प्रहारव्यथितश्चैव न वैक्लव्यमुपैति सः ॥ ४२

यस्तु स्वं नायकं रक्षेद् अतिघोरे रणाङ्कणे ।
तापयन्नरिसैन्यानि सिंहो मृगगणानिव ॥ ४३
आदित्य इव मध्याह्ने दुर्निरीक्ष्यो रणाजिरे ॥ ४३॥

निर्दयो यस्तु सङ्ग्रामे प्रहरन्नुद्यतायुधः ।
यजते स तु पूतात्मा सङ्ग्रामेण महाक्रतुम् ॥ ४४॥

[1]वर्म कृष्णाजिनं तस्य दन्तकाष्ठं धनुस्स्मृतम् ।
रथो वेदिर्ध्वजो यूपः कुशाश्च रथरश्मयः ॥ ४५॥

मानो दर्पस्त्वहङ्कारस् त्रयस्त्रेताग्नयस्स्मृताः ।
प्रमोदश्च स्रुवस्तस्य उपाध्यायो हि सारथिः ॥ ४६॥

स्रुग्भाण्डं चापि यत् किञ्चिद् यज्ञोपकरणानि च ।
आयुधान्यस्य तत् सर्वं समिधस्सायकास्स्मृताः ॥ ४७॥

स्वेदस्रवश्च गात्रेभ्यः क्षौद्रं तस्य यशस्विनः ।
पुरोडाशा नृशीर्षाणि रुधिरं चाहुतिरस्मृता ॥ ४८॥

तूणाश्चैव चरुर्ज्ञेया वसोर्धारा वसास्स्मृताः ॥ ४९

क्रव्यादा भूतसङ्घाश्च तस्मिन् यज्ञे द्विजातयः ।
तेषां भक्तान्नपानानि हता नृगजवाजिनः ॥ ५०
भुञ्जते ते यथाकामं यथा यज्ञे किमिच्छताम् ॥ ५०॥

1. क-ख-घ—चर्म

निहतानां तु योधानां वस्त्राभरणभूषणम् ।
हिरण्यं च सुवर्णं च यद्वै यज्ञस्य दक्षिणा ॥ ५१॥

यस्तत्र हन्यते देवि गजस्कन्धगतो नरः ।
ब्रह्मलोकमवाप्नोति रणेष्वभिमुखो हतः ॥ ५२॥

रथमध्यगतो वाऽपि हयपृष्ठगतोऽपि वा ।
हन्यते यस्तु सङ्ग्रामे शक्रलोके महीयते ॥ ५३॥

स्वर्गे हताः प्रपूज्यन्ते हन्ता त्वत्रैव पूज्यते ।
द्वावेतौ सुखमेधेते हन्ता यश्चैव हन्यते ॥ ५४॥

तस्मात् सङ्ग्राममासाद्य प्रहर्तव्यमभीतवत् ॥ ५५.

निर्भयो यस्तु सङ्ग्रामे प्रहरेदुद्यतायुधः ॥ ५५॥

यथा नदीसहस्राणि प्रविष्टानि महोदधिम् ।
तथा सर्वे न सन्देहो [1]धर्मा धर्मभृतां वरम् ॥ ५६॥

प्रविष्टा राजधर्मेण आचारविनयस्तथा ॥ ५७.

वेदोक्ताश्चैव ये धर्माः पाषण्डेषु च कीर्तिताः ।
तथैव मानुषा धर्मा धर्माश्चान्ये तथेतरे ॥ ५८.

देशजातिकुलानां च ग्रामधर्मास्तथैव च ।
ये धर्माः पार्वतीयेषु ये धर्माः पत्तनादिषु ॥ ५९.

तेषां पूर्वप्रवृत्तानां कर्तव्यं परिरक्षणम् ॥ ५९॥

1. ख—धर्मा धर्मभृतां वरे

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यः पार्थिवेन विशेषतः ॥ ६०॥

प्रजाः पालयते यत्र धर्मेण वसुधाधिपः ।
षट्कर्मनिरता विप्राः पूज्यन्ते [1]पितृदैवतैः ॥ ६१॥

नैव तस्मिन्ननावृष्टिर् न रोगा नाप्युपद्रवाः ।
धर्मशीलाः प्रजास्सर्वास् स्वधर्मनिरते नृपे ॥ ६२॥

एष्टव्यस्सततं देवि युक्ताचारो नराधिपः ।
छिद्रज्ञश्चैव शत्रूणाम् अप्रमत्तः प्रतापवान् ॥ ६३॥

शूद्राः पृथिव्यां बहवो राज्ञां बहुविनाशकाः ।
तस्मात् प्रसादं सुश्रोणि न कुर्यात् पण्डितो नृपः ॥ ६४॥

तेषु मित्रेषु त्यक्तेषु तथा [2]मर्त्येषु हस्तिषु ।
विस्रम्भो नोपगन्तव्यस् स्नानपानेषु नित्यशः ॥ ६५॥

राज्ञो वल्लभतामेति कुलं भावयते स्वकम् ।
यस्तु राष्ट्रहितार्थाय गोब्राह्मणकृते तथा ॥ ६६॥

बन्दीग्रहाय मित्रार्थे प्राणांस्त्यजति दुस्त्यजान् ॥ ६७

सर्वकामदुघां धेनुं धरणीं लोकधारिणीम् ।
समुद्रान्तां वरारोहे सशैलवनकाननाम् ॥ ६८

1. ख-घ—पितृदेवताः
2. ख—ऽमात्येषु

दद्यादेवि द्विजातिभ्यो वसुपूर्णां वसुन्धराम् ॥ ६८॥

न तत्समं वरारोहे प्राणत्यागी विशिष्यते ॥ ६९

सहस्रमपि यज्ञानां यजते च धनर्द्धिमान् ।
यज्ञैस्तस्य किमाश्चर्यं प्राणत्यागस्सुदुष्करः ॥ ७०

तस्मात् सर्वेषु यज्ञेषु प्राणयज्ञो विशिष्यते ।
एवं सङ्ग्रामयज्ञास्ते यथार्थं समुदाहृताः ॥ ७१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
[ अस्मिन्नध्याये ७१ श्लोकाः ]

---

## ॥ एकविंशत्यधिकशततमोऽध्यायः ॥

ईश्वरेण पार्वतीं प्रति राज्ञां मृगयायां मृगहिंसाया धर्मत्वप्रतिपादनम् ॥ १ ॥ तथा सदृष्टान्तप्रदर्शनं ब्राह्मणमहिमप्रशंसनपूर्वकं तेषामदण्ड्यत्वकथनम् ॥ २ ॥ तथा सामान्येन राजधर्मकथनम् ॥ ३ ॥

---

श्रीमहेश्वरः—

मृगयात्रां तु वक्ष्यामि शृणु तां धर्मचारिणि ।
मृगान् हत्वा महीपालो यथा पापैर्न लिप्यते ॥ १

निर्मानुषामिमां सर्वे मृगा इच्छन्ति मेदिनीम् ।

भक्षयन्ति च सस्यानि शासितव्या नृपेण ते ॥ २

दुष्टानां शासनं धर्मश् शिष्टानां परिपालनम् ।
कर्तव्यं भूमिपालेन नित्यं कार्येषु चार्जवम् ॥ ३

स्वर्गं मृगाश्च गच्छन्ति स्वयं नृपतिना हताः ॥ ३॥

यथा गावो ह्यगोपालास् तथा राष्ट्रमनायकम् ॥ ४

तस्माद्दंशास्तु देवानां गन्धर्वोरगरक्षसाम् ।
राज्ये नियुक्ता राष्ट्रेषु प्रजापालनकारणात् ॥ ५

अशिष्टशासने चैव शिष्टानां परिपालने ।
तेषां चर्यां प्रवक्ष्यामि श्रूयतामनुपूर्वशः ॥ ६

यथा प्रचरतां तेषां पार्थिवानां यशस्विनि ।
राष्ट्रं धर्मो धनं चैव यशः कीर्तिश्च वर्धते ॥ ७

नृपाणां पूर्वमेवायं धर्मो धर्मभृतां वरे ॥ ७॥
सभाप्रपातटाकानि देवतायतनानि च ।
ब्राह्मणावसथाश्चैव कर्तव्या नृपसत्तमैः ॥ ८॥

ब्राह्मणा नावमन्तव्वा भस्मच्छन्ना इवाग्नयः ।
कुलमुत्सादयेयुस्ते क्रोधाविष्टा द्विजातयः ॥ ९॥

[1]ध्मायमानो यथा ह्यग्निर् निर्दहेत् सर्वमिन्धनम् ।

---

1. ख—धार्यमाणो

तथा क्रोधाग्निना विप्रा दहेयुः पृथिवीमिमाम् ॥ १०॥

न हि विप्रेषु क्रुद्धेषु राज्यं भुञ्जन्ति भूमिपाः ॥ ११

परिभूय द्विजान् मोहाद् वातापिनहुषादयः ।
सबन्धुमित्रा नष्टास्ते दग्धा ब्राह्मणमन्युभिः ॥ १२

शरीरं चापि शक्रस्य कृतं भगनिरन्तरम् ॥ १२॥

ततो देवगणास्सर्वे इन्द्रस्यार्थे महामतिम् ।
प्रसादं कारयामासुः प्रणामस्तुतिवन्दनैः ॥ १३॥

तेन प्रीतेन सुश्रोणि गौतमेन महात्मना ।
तच्छरीरं तु शक्रस्य सहस्रभगचिह्नितम् ॥ १४॥

कृतं नेत्रसहस्रेण क्षणेनैव निरन्तरम् ॥ १५

छित्वा मेषस्य वृषणौ गौतमेनाभिमन्त्रितौ ।
इन्द्रस्य वृषणौ भूत्वा क्षिप्रं वै श्लेषमागतौ ॥ १६

एवं विप्रेषु क्रुद्धेषु देवराजश्शतक्रतुः ।
अशक्तश्शासितुं राज्यं किंपुनर्मानुषा भुवि ॥ १७

क्रोधाविष्टो दहेद्विप्रश् शुष्केन्धनमिवानलः ।
भस्मीकृत्य जगत् सर्वं सृजेदन्यज्जगत् पुनः ॥ १८

अदेवानपि देवान् स कुर्याद्देवानदेवताः ।
तस्मान्नोत्पादयेन्मन्युं मन्युप्रहरणा द्विजाः ॥ १९

महत्स्वप्यपराधेषु शासनं नार्हति द्विजः ।
न च शस्त्रनिपातानि न च प्राणैर्वियोजनम् ॥ २०
दृश्यते त्रिषु [1]लोकेषु ब्राह्मणानामनिन्दिते ॥ २०॥
क्रोधाश्च विपुला घोराः प्रसादाश्चप्यनुत्तमाः ।
तस्मान्नोत्पादयेत् क्रोधं नित्यं पूज्या द्विजातयः ॥ २१॥
दृश्यते न स लोकेऽस्मिन् भूतो वाऽथ भविष्यति ।
क्रुद्धेषु यो वै विप्रेषु राज्यं भुङ्क्ते नराधिपः ॥ २२॥
न चैवापहसेद्विप्रान् न चैवोपालभेच्च तान् ।
कालमासाद्य कुप्येच्च काले कुर्यादनुग्रहम् ॥ २३॥
सम्प्रहासश्च भृत्येषु न कर्तव्यो नराधिपैः ।
लघुत्वं चैव प्राप्नोति आज्ञा चास्य निवर्तते ॥ २४॥
भृत्यानां सम्प्रहासेन पार्थिवः परिभूयते ।
अयाच्यानि च याचन्ति अवक्तव्यं ब्रुवन्ति च ॥ २५॥
पूर्वमप्युचितैर्लोभैः परितोषं न यान्ति ते ।
तस्माद्भृत्येषु नृपतिस् सम्प्रहासं विवर्जयेत् ॥ २६॥
न विश्वसेदविश्वस्ते विश्वस्ते न च विश्वसेत् ।
सगोत्रेषु विशेषेण सर्वोपायैर्न विश्वसेत् ॥ २७॥
विश्वासाद्भयमुत्पन्नं हन्याद्वृक्षमिवाशनिः ।

1. अ—कालेषु

प्रमादाद्धन्यते राजा लोभेन च वशीकृतः ॥ २८॥

तस्मात् प्रमादं लोभं च न च कुर्यान्न विश्वसेत् ॥ २९

भयार्तानां भयात् त्राता दीनानुग्रहकारणात् ।
कार्याकार्यविशेषज्ञो नित्यं राष्ट्रहिते रतः ॥ ३०

सत्यसन्धस्थितो राज्ये प्रजापालनतत्परः ।
अलुब्धो न्यायवादी च षड्भागमुपजीवति ॥ ३१

कार्याकार्यविशेषज्ञस् सर्वं धर्मेण पश्यति ।
स्वराष्ट्रेषु दयां कुर्याद् अकार्यं न प्रवर्तते ॥ ३२

ये चैवैनं प्रशंसन्ति ये च निन्दन्ति मानवाः ।
शत्रुं च मित्रवत् पश्येद् अपराधविवर्जितम् ॥ ३३

अपराधानुरूपेण दुष्टं दण्डेन शासयेत् ।
धर्मः प्रवर्तते तत्र यत्र दण्डरुचिर्नृपः ॥ ३४

नाधर्मो विद्यते तत्र यत्र राजा क्षमान्वितः ॥ ३४॥

अशिष्टशासनं धर्मश् शिष्टानां परिपालनम् ।
वध्यांश्च घातयेद्यस्तु अवध्यान् परिरक्षति ॥ ३५॥

अवध्या ब्राह्मणा गावो [1]दूताश्चैव पिता तथा ।
विद्यां ग्राहयते यश्च ये च पूर्वोपकारिणः ॥ ३६॥

स्त्रियश्चैव न हन्तव्या यश्च सर्वातिथिर्नरः ॥ ३७

1. क—माता चैव ; ख—दूताश्च पितरौ तथा

धरणीं गां हिरण्यं च सिद्धान्नं च तिलान् घृतम् ।
ददन्नित्यं द्विजातिभ्यो मुच्यते राजकिल्बिषात् ॥ ३८

एवं चरति यो नित्यं राजा राष्ट्रहिते रतः ।
तस्य राष्ट्रं धनं धर्मो यशः कीर्तिश्च वर्धते ॥ ३९

न च पापैर्न चानर्थैर् युज्यते स नराधिपः ॥ ३९॥

षड्भागमुपयुञ्जन् यः प्रजा राजा न रक्षति ॥ ४०

स्वचक्रपरचक्राभ्यां धर्मैर्वा विक्रमेण वा ।
निरुद्योगो नृपो यश्च परराष्ट्रनिघातने ॥ ४१

स्वराष्ट्रं निष्प्रतापस्य परचक्रेण हन्यते ॥ ४१॥

यत् पापं परचक्रस्य परराष्ट्राभिघातने ।
तत् पापं सकलं राजा हतराष्ट्रः प्रपद्यते ॥ ४२॥

मातुलं भागिनेयं वा मातरं श्वशुरं गुरुम् ।
पितरं वर्जयित्वैकं हन्याद्घातकमागतम् ॥ ४३॥

स्वस्य राष्ट्रस्य रक्षार्थं युध्यमानस्तु यो हतः ।
सङ्ग्रामे परचक्रेण श्रूयतां तस्य या गतिः ॥ ४४॥

विमाने तु वरारोहे अप्सरोगणसेविते ।
शक्रलोकमितो याति सङ्ग्रामे निहतो नृपः ॥ ४५॥

यावन्तो रोमकूपास्स्युस् तस्य गात्रेषु सुन्दरि ।

तावद्वर्षसहस्राणि शक्रलोके महीयते ॥ ४६॥

यदि वै मानुषे लोके कदाचिदुपपद्यते ।
राजा वा राजमात्रो वा भूयो भवति वीर्यवान् ॥ ४७॥

तस्माद्यत्नेन कर्तव्यं स्वराष्ट्रपरिपालनम् ।
व्यवहाराश्च चारश्च सततं सत्यसन्धता ॥ ४८॥

अप्रमादः प्रमोदश्च व्यवसायेऽप्यचण्डता ।
भरणं चैव भृत्यानां वाहनानां च पोषणम् ॥ ४९॥

योधानां चैव सत्कारः कृते कर्मण्यमोघता ।
श्रेय एव नरेन्द्राणाम् इह चैव परत्र च ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
[ अस्मिन्नध्याये ५०॥ श्लोकाः ]



## ॥ द्वाविंशत्यधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति त्रिवर्गनिरूपणम् ॥

श्रीमहेश्वरः—

पशवः पशुबन्धेषु ये हन्यन्तेऽध्वरेषु च ।
यूपे निबध्य मन्त्रैश्च यथान्यायं यथाविधि ॥ १
मन्त्राहुतिविपूतास्ते स्वर्गं यान्ति यशस्विनि ॥ १॥
तर्पिता यज्ञभागेषु तेषां मांसैर्वरानने ।
अमयस्त्रिदशाश्चैव लोकपाला महेश्वराः ॥ २॥
तेषु तुष्टेषु जायेत तस्य यज्ञस्य यत् फलम् ।
तेन संयुज्यते देवि यजमानो न संशयः ॥ ३॥
सपत्नीकस्सपुत्रश्च पित्रा च भ्रातृभिस्सह ।
ये तत्र दीक्षिता देवि सर्वे स्वर्गं प्रयान्ति ते ॥ ४॥
एतत् ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ ५

उमा—

भगवन् सर्वभूतेश शूलपाणे महाद्युते ।
श्रोतुमिच्छाम्यहं वृत्तं सर्वेषां गृहमेधिनाम् ॥ ६
कीदृशं चरितं तेषां [1]त्रिवर्गसहितं प्रभो ।

1. ख—अयं पादोऽनन्तरश्च न स्तः

प्रत्यायतिः कथं तेषां जीवनार्थमुदाहृतम् ॥ ७
वर्तमानाः कथं सर्वे प्राप्नुवन्त्युत्तमां गतिम् ।
एतत् सर्वं समासेन वक्तुमर्हसि मानद ॥ ८

श्रीमहेश्वरः—

न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ।
प्रायशो लोकसद्वृत्तम् इष्यते गृहवासिनाम् ॥ ९
तेषां संरक्षणार्थाय राजानः [1]कृतलक्षणाः ।
सर्वेषा[2]मेव वर्णानां वृत्तिं सामान्यतश्शृणु ॥ १०
विद्या वार्ता च सेवा च कारुत्वं नाट्यता तथा ।
इत्येते जीवनार्थाय मर्त्यानां विहिताः प्रिये ॥ ११
अपि जन्मफलं तावन्मानुषाणां विशेषतः ।
विहितं तत् स्ववृत्तेन तन्मे शृणु समाहिता ॥ १२
कर्मक्षेत्रं हि मानुष्यं भोगदुःखयुताः परे ।
सर्वेषां प्राणिनां तस्मान्मानुष्ये वृत्तिरिष्यते ॥ १३
विद्यायोगस्तु सर्वेषां पूर्वमेव विधीयते ।
कार्याकार्यं विजानन्ति विद्यया देवि नान्यथा ॥ १४
विद्यया स्फीयते ज्ञानं ज्ञानात्तत्त्वविदर्शनम् ।

1. ख—संकृता भुवि
2. क-ख-घ—मथ मर्त्यानां

दृष्टतत्त्वो विनीतात्मा सर्वार्थस्य च भाजनम् ॥ १५

[1]शक्यं विद्याविनीतेन लोके सञ्जीवनं शुभम् ॥ १५॥

[2]आत्मानं विद्यया तस्मात् पूर्वं कृत्वा तु भाजनम् ।

वश्येन्द्रियो जितक्रोधो भूतात्मानं तु भावयेत् ॥ १६॥

भावयित्वा तदाऽऽत्मानं पूजनीयस्सतामपि ॥ १७

कुलानुवृत्तं वृत्तं वा पूर्वमात्मा समाश्रयेत् ।

इत्येतत् कुलवासाय दानकर्म यथा पुरा ॥ १८

यदि चेद्विद्यया चैव वृत्तिं काङ्क्षेदथात्मनः ॥ १८॥

राजविद्यां तु वा देवि लोकविद्यामथापि वा ।

तीर्थतश्चापि गृह्णीयाच्छुश्रूषादिगुणैर्युतः ॥ १९॥

ग्रन्थतश्चार्थतश्चैव दृढं कुर्यात् प्रयत्नतः ॥ २०

एवं विद्याफलं देवि प्राप्नुयान्नान्यथा नरः ।

न्यायाद्विद्याफलानीच्छेद् अधर्मं तत्र वर्जयेत् ॥ २१

यदिच्छेद्वार्तया वृत्तिं काङ्क्षेत विधिपूर्वकम् ।

क्षेत्रे जलोपपन्ने च तद्योग्यं कृषिमाचरेत् ॥ २२

वाणिज्यं वा यथाकालं कुर्यात् तद्देशयोगतः ॥ २२॥

मूल्यमर्थं प्रयासं च विचार्यैव [3]व्ययोदयौ ।

---

1. क—सत्य; ख—शुक्लं 2. अ—अर्धत्रयं नास्ति

3. ख—व्ययाव्ययौ

पशुसञ्जीवनं चैव [1]देशगः पोपयेद्ध्रुवम् ॥ २३॥

बहुप्रकारा बहवः पशवस्तस्य साधकाः ॥ २४

यः कश्चित् सेवया वृत्तिं काङ्क्षेत मतिमान् नरः ।
यतात्मा श्रवणीयानां भवेद्वै सम्प्रयोजकः ॥ २५

[2]बुद्ध्या वा कर्मयोगाद्वा बोधनाद्वा समाश्रयेत् ।
मार्गतस्तु समाश्रित्य तदा तत् सम्प्रयोजयेत् ॥ २६

यथा यथा स तुष्येत तथा सन्तोषयेत्तु तम् ।
अनुजीविगुणोपेतः कुर्यादात्मार्थमाश्रितम् ॥ २७

विप्रियं नाचरेत्तस्य एषा सेवा समासतः ॥ २७॥

विप्रयोगात् पुरा तेन गतिमन्यां न लक्षयेत् ॥ २८

कारुकर्म च नाट्यं च प्रायशो नीचयोनिषु ।
तयोरपि यथायोगं न्यायतः कर्मवेतनम् ॥ २९

आर्जवेभ्योऽपि सर्वेभ्यस् स्वार्जवाद्वेतनं हरेत् ।
अनार्जवादाहरतस् तत्तु पापाय कल्पते ॥ ३०

[3]सर्वेषां पूर्वमारम्भांश् चिन्तयेन्नयपूर्वकम् ।
आत्मशक्तिमुपायांश्च देशकालौ च युक्तितः ॥ ३१

कारणानि प्रवासं च प्रक्षेपं च फलोदयम् ॥ ३१॥

---

1. ख—देवि गाः; घ—देशगाः

2. अ—अर्धद्वयं नास्ति

3. ख—स तेषां

एवमादीनि सञ्चिन्त्य दृष्ट्वा दैवानुकूलताम् ।
अतः परं समारम्भेद् यत्रात्महितमाहितम् ॥ ३२॥

वृत्तिमेव समासाद्य तां सदा परिपालयेत् ।
दैवमानुषविघ्नेभ्यो न पुन[1]र्भ्रश्यते यथा ॥ ३३॥

पालयन् वर्धयन् भुञ्जंस् तां प्राप्य न विनाशयेत् ।
क्षीयते गिरिसङ्काशम् अश्नतो ह्यनपेक्षया ॥ ३४॥

आजीवेभ्यो धनं प्राप्य चतुर्धा विभजेद्बुधः ।
धर्मायार्थाय कामाय आपत्प्रशमनाय च ॥ ३५॥

चतुर्ष्वपि विभागेषु विधानं शृणु भामिनि ॥ ३६

यज्ञार्थं चान्नदानार्थं दीनानुग्रहकारणात् ।
देवब्राह्मणपूजार्थं पितृपूजार्थमेव च ॥ ३७

मूलार्थं सन्निवासार्थं क्रियानित्यैश्च धार्मिकैः ।
एवमादिषु चान्येषु [2]धर्मार्थं सन्त्यजेद्धनम् ॥ ३८

धर्मकार्ये धनं दद्याद् अनवेक्ष्य फलोदयम् ।
ऐश्वर्यस्थानलाभार्थं राजवाल्लभ्यकारणात् ॥ ३९

वार्तायां च समारम्भेऽमात्यमित्रपरिग्रहे ।
आवाहे च विवाहे च पूर्णानां वृत्तिकारणात् ॥ ४०

1. क-ख—गृह्यते; ब—दृश्यते
2. ख—अर्थार्थं विसृजेद्धनम्

अर्थोदयसमावाप्तावनर्थस्य विघातने ।
एवमादिषु चान्येषु अर्थार्थं विसृजेद्धनम् ॥ ४१

अनुबन्धं हेतुयुक्तं दृष्ट्वा वित्तं परित्यजेत् ।
अनर्थं बाधते ह्यर्थो अर्थं चैव फलान्युत ॥ ४२

नाधनाः प्राप्नुवन्त्यर्थं नरा यत्नशतैरपि ।
तस्माद्धनं रक्षितव्यं दातव्यं च विधानतः ॥ ४३

शरीरपोषणार्थाय आहारस्य विशेषणे ।
नटगान्धर्वसंयोगे कामयात्राविहारयोः ॥ ४४

मनःप्रियाणां संयोगे प्रीतिदाने तथैव च ।
एवमादिषु चान्येषु कामार्थं विसृजेद्धनम् ॥ ४५

विचार्य गुणदोषौ तु त्रयाणां तत्र सन्त्यजेत् ।
चतुर्थं सन्निदध्याच्च आपदर्थं शुचिस्मिते ॥ ४६

राज्यभ्रंशविनाशार्थं दुर्भिक्षार्थं च शोभने ।
महाव्याधिविमोक्षार्थं वार्धकचस्यैव कारणात् ॥ ४७

शत्रूणां प्रति[1]काराय साहसैश्चाप्यमर्षणात् ।
प्रस्थाने चान्यदेशार्थम् आपदां विप्रमोक्षणे ॥ ४८

एवमादि समुद्दिश्य सन्निदध्यात् स्वकं धनम् ॥ ४८॥

सुखमर्थवतां लोके कृच्छ्राणां विप्रमोक्षणम् ।

1. घ—घाताय

यस्य नास्ति धनं किञ्चित् तस्य लोकद्वयं न च ॥ ४९॥

अशनादिन्द्रियाणीव सर्वमर्थात् प्रवर्तते ।
निधानमात्रं यस्तेषाम् अन्यथा विलयं व्रजेत् ॥ ५०॥

एवं देवि मनुष्याणां लोकानां जीवनं प्रति ।
एवं लोकस्य वृत्तस्य लोकवृत्तं पुनश्शृणु ॥ ५१॥

धन्यं यशस्यमायुष्यं स्वर्ग्यं च परमं यशः ।
त्रिवर्गो हि वशे युक्तस् सर्वेषां संविधीयते ॥ ५२॥

तथा संवर्तमानास्तु लोकयोर्हितमाप्नुयुः ॥ ५३

काल्योत्थानं च शौचं च देवब्राह्मणभक्तितः ।
गुरूणामेव शुश्रूषा ब्राह्मणेष्वभिवादनम् ॥ ५४

प्रत्युत्थानं च वृद्धानां देवस्थानप्रणामनम् ।
आभिमुख्यं पुरस्कृत्य अतिथीनां च पूजनम् ॥ ५५

वृद्धोपदेशकरणं श्रवणं हितपथ्ययोः ।
पोषणं भृत्यवर्गस्य सान्त्वदानपरिग्रहैः ॥ ५६

न्यायतः कर्मकरणम् अन्यायाहितवर्जितम् ।
सम्यग्वृत्तं स्वदारेषु दोषाणां प्रतिषेधनम् ॥ ५७

पुत्राणां विनयं कुर्यात् तत्तत्कार्यनियोजनम् ।
वर्जनं चाशुभार्थानां शुभानां जोषणं तथा ॥ ५८

कुलोचितानां धर्माणां यथावत् परिपालनम् ।
कुलसन्धारणं चैव पौरुषेणैव सर्वशः ॥ ५९

एवमादि शुभं सर्वं तस्य वृत्तमिति स्थितम् ॥ ५९॥

वृद्धसेवी भवेन्नित्यं हितार्थं ज्ञानकाङ्क्षया ।
परार्थं नाहरेद्द्रव्यम् अनामन्त्र्य तु सर्वदा ॥ ६०॥

न याचेत परान् धीरस् स्वबाहुबलमाश्रयेत् ॥ ६१

स्वशरीरं सदा रक्षेद् आहाराचारयोरपि ।
हितं पथ्यं सदाहारं जीर्णं भुञ्जीत मात्रया ॥ ६२

देवतातिथिसत्कारं कृत्वा सर्वं यथाविधि ।
शेषं भुञ्जेच्छुचिर्भूत्वा न च भाषेत विप्रियम् ॥ ६३

प्रतिश्रयं च पानीयं बलिं भिक्षां च सर्वतः ।
गृहस्थवासी व्रतवान् दद्याद्गाश्चैव पोषयेत् ॥ ६४

बहिर्निष्क्रमणं चैव कुर्यात् कारणतोऽपि वा ।
मध्याह्ने वाऽर्धरात्रे वा गमनं नैव रोचयेत् ॥ ६५

विषयान् नावगाहेत स्वशक्त्या तु समाचरेत् ।
यथाऽऽयव्ययता लोके गृहस्थानां प्रपूजितम् ॥ ६६

अयशस्करमर्थघ्नं कर्म यत् परपीडनम् ।
भयाद्वा यदि वा लोभान्न कुर्वीत कदाचन ॥ ६७

बुद्धिपूर्वं समालोक्य दूरतो गुणदोषतः ।
आरभेत तदा कर्म शुभं वा यदि वेतरत् ॥ ६८

आत्मसाक्षी भवेन्नित्यम् आत्मनस्तु शुभाशुभे ।
मनसा कर्मणा वाचा न च काङ्क्षेत पातकम् ॥ ६९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥
[ अस्मिन्नध्याये ६९ श्लोकाः ]

---

## ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥

---

पार्वत्या ब्राह्मण्यादिकं किं स्वाभाविकं उत कर्माधीनमिति प्रश्ने ईश्वरेण तस्य कर्माधीनत्वप्रतिपादनम् ॥ १ ॥ तथा प्राणिनां भोगाभोगादेः स्वस्वकर्मायत्तत्वप्रतिपादनम् ॥ २ ॥

---

उमा—

भगवन् भगनेत्रघ्न कालसूदन शङ्कर ।
इमे वर्णाश्च चत्वारो विहितास्स्वस्वभावतः ॥ १
उताहो क्रियया वर्णास् सम्भवन्ति महेश्वर ॥ १॥
एवं मे संशयप्रश्नस् तं मे छेत्तुं त्वमर्हसि ॥ २

श्रीमहेश्वरः—

स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापम् अन्यवर्णत्वमागतम् ॥ ३

तच्च कर्मविशेषेण पुनर्जन्मनि जायते ।
तस्मात्तेषां प्रवक्ष्यामि तत् सर्वं कर्म पातकम् ॥ ४

ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयन् ।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत् ॥ ५

सत्यार्जवपरो भूत्वा दानयज्ञपरस्तथा ।
सत्यां जात्यां समुदितो जातिधर्मान् न हापयेत् ॥ ६

एवं संवर्तमानस्तु कालधर्मं गतः पुनः ।
स्वर्गलोके हि जायेत स्वर्गभोगाय भामिनि ॥ ७

तत्क्षये ब्राह्मणो भूत्वा तथैव नृपु जायते ।
एवं स्वकर्मणा मर्त्यस् स्वजातिं लभते पुनः ॥ ८

अपरस्तु तथा कश्चिद् ब्रह्मयोनिसमुद्भवः ।
अवमत्यैव तां जातिम् अज्ञानतमसा वृतः ॥ ९

अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद्विचरेल्लोके शूद्रकर्माभिलाषवान् ॥ १०

शूद्रैस्सह चरन्नित्यं शौचमङ्गलवर्जितः ।
स चापि कालधर्मस्थो यमलोके सुदण्डितः ॥ ११

यदि जायेत मर्त्येषु शूद्र एवाभिजायते ॥ ११॥

शूद्र एव भवेद्देवि ब्राह्मणोऽपि स्वकर्मणा ॥ १२

तथैव शूद्रस्त्वपरश् शूद्रकर्माणि वर्जयन् ।
सत्यार्जवपरो भूत्वा दानधर्मपरस्तथा ॥ १३

मन्त्रब्राह्मणसत्कर्ता मनसा ब्राह्मणप्रियः ॥ १३॥

एवं युक्तसमाचारश् शूद्रोऽपि मरणं गतः ।
स्वर्गलोकेऽभिजायेत तत्क्षये नृषु जायते ॥ १४॥

ब्राह्मणानां कुले मुख्ये वेदस्वाध्यायसंश्रुते ॥ १५

एवमेव सदा लोके शूद्रो ब्राह्मण्यमाप्नुयात् ॥ १५॥

एवं क्षत्रियवैश्याश्च जातिधर्मेण संयुताः ।
स्वकर्मणैव जायन्ते विशिष्टेष्ववधमेषु च ॥ १६॥

एवं जातिविपर्यासः प्रेत्यभावे भवेन्नृणाम् ।
अन्यथा तु न शक्यं तल्लोकसंस्थितिकारणात् ॥ १७॥

तस्माज्जातिं विशिष्टां तु कथञ्चित् प्राप्य पण्डितः ।
सर्वथा तां तथा रक्षेन्न पुनर्भ्रश्यते यथा ॥ १८॥

इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ १९

उमा—

जन्मप्रभृति कैश्शुद्धो लभेज्जन्मफलं नरः ।

शोभनाशोभनं सर्वम् अधिकारवशात् [1]स्वकम् ॥ २०

श्रीमहेश्वरः—

कर्म कुर्वन् न लिप्येत आर्जवेन समाचरेत् ।

आत्मैव तच्छुभं कुर्याद् अशुभे योजयेत् परान् ॥ २१

शठेषु शठवत् कुर्याद् आर्येष्वृजुवदाचरेत् ।

आपत्सु नावसीदेच्च घोरान् सङ्क्रामयेत् परान् ॥ २२

[2]समाने सर्वकार्याणि कर्तुं पूर्वं समारभेत् ॥ २२॥

अनर्थाधर्मशोकांश्च यथा न प्राप्नुयात् स्वयम् ।

प्रयतेत तथा कर्तुम् एतद्वृत्तं समासतः ॥ २३॥

एवं वृत्तं समासाद्य गृहमाश्रित्य मानवाः ।

निराहारा निरुद्वेगाः प्राप्नुवन्त्युत्तमां गतिम् ॥ २४॥

एतज्जन्मफलं नित्यं सर्वेषां गृहवासिनाम् ।

एवं गृहरतैर्नित्यं वर्तितव्यमिति स्थितिः ॥ २५॥

एतत् सर्वं मया प्रोक्तं किं भूयश्श्रोतुमिच्छसि ॥ २६

उमा—

सुरासुरपते देव वरद प्रीतिवर्धन ।

मानुषेष्वेव ये केचिद् आढ्याः क्लेशविवर्जिताः ॥ २७

भुञ्जाना विविधान् भोगान् दृश्यन्ते निरुपद्रवाः ॥ २७॥

---

1. ख—द्वृद    2. ख—सामेन

अपरे क्लेशसंयुक्ता दरिद्रा भोगवर्जिताः ॥ २८
किमर्थं मानुषे लोके न समत्वेन कल्पिताः '।
एतच्छ्रोतुं महादेव कौतूहलमतीव मे ॥ २९

श्रीमहेश्वरः—

न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ।
शृणु तत् सर्वमखिलं मानुषाणां हितं वचः ॥ ३०
आदिसर्गे पुरा ब्रह्मा समत्वेनासृजत् प्रजाः ।
नित्यं न भवतो ह्यस्य रागद्वेषौ प्रजापतेः ॥ ३१
तदा तस्मात् सुरास्सर्वे बभूवुस्समतो नराः ॥ ३१॥
एवं संवर्तमाने तु युगे कालविपर्ययात् ।
केचित् प्रपेदिरे तत्र विषमं बुद्धिमोहिताः ॥ ३२॥
तेषां हि निन्दितं दृष्ट्वा तुल्यानामेव भामिनि ।
ब्राह्मणास्ते समाजग्मुस् तत्तत्कारणवेदकाः ॥ ३३॥

ब्राह्मणाः—

कर्तुं नार्हसि देवेश पक्षपातं त्वमीदृशम् ।
पुत्रभावे समे देव किमर्थं ते भवेत् कलिः ॥ ३४॥

श्रीमहेश्वरः—

एवमेतैरुपालब्धो ब्रह्मा वचनमब्रवीत् ॥ ३५

ब्रह्मा—

यूयं मा ब्रूत मे दोषं स्वकृतं स्मरथ प्रजाः ।
युष्माभिरेव युष्माकं ग्रथितं हि शुभाशुभम् ॥ ३६

यादृशं कुरुते कर्म तादृशं फलमश्नुते ।
स्वकृतस्य फलं भुङ्क्ते नान्यस्तद्भोक्तुमर्हति ॥ ३७

एवं सम्बोधितास्तेन कालकर्त्रा स्वयम्भुवा ।
पुनर्निवृत्य कर्माणि शुभान्येव प्रपेदिरे ॥ ३८

एवं विज्ञाततत्त्वास्ते दानधर्मपरायणाः ।
शुभानि विधिवत् कृत्वा कालधर्मं गताः पुनः ॥ ३९

तानि दानफलान्येव भुञ्जते सुखभोगिनः ॥ ३९॥

स्वकृतं तु नरस्तस्मात् स्वयमेव प्रपद्यते ॥ ४०

अपरे धर्मकामेभ्यो निवृत्ताश्च शुभेक्षणे ।
कदर्या निरनुक्रोशाः प्रायेणात्मपरायणाः ॥ ४१

तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
दरिद्राः क्लेशभूयिष्ठा भवन्त्येव न संशयः ॥ ४२

उमा—

मानुषेष्वथ ये केचिद् धनधान्यसमन्विताः ।
भोगहीनाः प्रदृश्यन्ते सर्वभोगेषु सत्स्वपि ॥ ४३

न भुञ्जते किमर्थं ते तन्मे शंसितुमर्हसि ॥ ४३॥

श्रीमहेश्वरः—

परैस्सञ्चोदिता धर्मं कुर्वते न स्वकामतः ।
[1]धर्मश्रद्धां वहिष्कृत्य कुर्वन्ति च रुदन्ति च ॥ ४४॥

1. ख—स्वयं

तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
फलानि तानि सम्प्राप्य भुञ्जते न कदाचन ॥ ४५॥
रक्षन्तो वर्धयन्तश्च आसते निधिपालवत् ॥ ४६

उमा—

केचिद्धनवियुक्ताश्च भोगयुक्ता महेश्वर ।
मानुषास्सम्प्रदृश्यन्ते तन्मे शंसितुमर्हसि ॥ ४७

श्रीमहेश्वरः—

आनृशंस्यपरा ये तु धर्मकामाश्च दुर्गताः ।
परोपकारं कुर्वन्ति दीनानुग्रहकारणात् ॥ ४८
प्रतिपद्युः परधनं नष्टं वाऽन्यैर्नरैर्हृतम् ।
नित्यं ये दातुमनसो नरा वित्तेष्वसत्स्वपि ॥ ४९
कालधर्मवशं प्राप्ताः पुनर्जन्मनि ते नराः ।
एते धनविहीनाश्च भोगयुक्ता भवन्त्युत ॥ ५०
धर्मदानोपदेशं वा कर्तव्यमिति निश्चयः ।
इति ते कथितं देवि किं भूयश्श्रोतुमिच्छसि* ॥ ५१

उमा—

भगवन् देवदेवेश त्रियक्ष वृषभध्वज ।
मानुषास्त्रिविधा देव दृश्यन्ते सततं विभो ॥ ५२

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

आसीना एव भुञ्जन्ते स्थानैश्वर्यपरिग्रहैः ।
अपरे यत्नपूर्वं तु लभन्ते भोगसङ्ग्रहम् ॥ ५३

अपरे यतमानाश्च न लभन्ते तु किञ्चन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ५४

श्रीमहेश्वरः—

न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ॥ ५४॥

ये लोके मानुषा देवि दानधर्मपरायणाः ।
पात्राणि विधिवज्ज्ञात्वा दूरतोऽप्यनुमानतः ॥ ५५॥

[1]अभिगम्य स्वयं तत्र ग्राहयन्ति प्रसाद्य च ।
दानादि चेङ्गितैरेव तैरविज्ञातमेव वा ॥ ५६॥

पुनर्जन्मनि ते देवि तादृशाश्शोभना नराः ।
अयत्नतस्तु तान्येव फलानि प्राप्नुवन्त्युत ॥ ५७॥

आसीना एव भुञ्जन्ते भोगान् सुकृतभागिनः ॥ ५८

अपरे ये च दानानि ददत्येव प्रयाचिताः ।
यदा यदाऽर्थिने दत्त्वा पुनर्दानं च याचिताः ॥ ५९

तावत्कालं ततो देवि पुनर्जन्मनि ते नराः ।
यत्नतश्श्रमसंयुक्ताः पुनस्तान् प्राप्नुवन्ति च ॥ ६०

याचिता अपि केचित्तु न ददत्येव किञ्चन ।

1. अ—अर्धचतुष्टयं नास्ति

अभ्यसूयापरा मर्त्या लोभोपहतचेतसः ॥ ६१

ते पुनर्जन्मनि शुभे यतन्तो बहुधा नराः ।
न प्राप्नुवन्ति मनुजा मार्गन्तस्तेऽपि किञ्चन ॥ ६२

नानुप्तं रोहते सस्यं तद्वद्दानफलं विदुः ।
यद्यद्ददाति पुरुषस् तत्तत् प्राप्नोति केवलम् ॥ ६३
इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ ६३॥

उमा—

भगवन् भगनेत्रघ्न केचिद्वार्धक्यसंयुताः ।
अभोगयोग्यकाले तु भोगांश्चैव धनानि च ॥ ६४॥

लभन्ते स्थविरा भूता भोगैश्वर्यं यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ६५॥

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ॥ ६६

धर्मकार्यं चिरं कालं विस्मृत्य धनसंयुताः ।
प्राणान्तकाले सम्प्राप्ते व्याधिभिश्च निपीडिताः ॥ ६७
[1]आरभन्ते पुनर्धर्मान् दातुं दानानि वा नराः ॥ ६७॥

ते पुनर्जन्मनि शुभे भूत्वा दुःखपरिप्लुताः ।
अतीतयौवने काले स्थविरत्वमुपागताः ॥ ६८॥

1. अ—अर्धद्वयं नास्ति

लभन्ते पूर्वदत्तानां फलानि शुभलक्षणे ॥ ६९

एतत् कर्मफलं देवि कालयोगाद्भवत्युत ॥ ६९॥

उमा—

भोगयुक्ता महादेव केचिद्व्याधिपरिप्लुताः ।
[1]असमर्थाश्च तान् भोक्तुं भवन्ति किल कारणम् ॥ ७०॥

श्रीमहेश्वरः—

व्याधियोगपरिक्लिष्टा ये निराशास्स्वजीविते ।
आरभन्ते तदा कर्तुं दानानि शुभलक्षणे ॥ ७१॥

ते पुनर्जन्मनि शुभे प्राप्य तानि फलान्युत ।
असमर्थाश्च तान् भोक्तुं व्याधितास्ते भवन्त्युत ॥ ७२॥

उमा—

भगवन् देवदेवेश मानुषेष्वेव केचन ।
रूपयुक्ताः प्रदृश्यन्ते शुभाङ्गाः प्रियदर्शनाः ॥ ७३॥

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ७४

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि शृणु तत्त्वं समाहिता ॥ ७४॥

ये पुरा मानुषा देवि लज्जायुक्ताः प्रियंवदाः ।
शक्तास्सुमधुरा नित्यं भूत्वा चैव स्वभावतः ॥ ७५॥

---

1. ख—अर्धचतुष्टयं नास्ति

अमांसभोजिनश्चैव सदा प्राणिदयायुताः ।
प्रतिकर्मप्रदा वाऽपि वस्त्रदा धर्मकारणात् ॥ ७६॥
भूमिशुद्धिकरा वाऽपि कारणादग्निपूजकाः ॥ ७७
एवं युक्तसमाचाराः पुनर्जन्मनि ते नराः ।
रूपेण स्पृहणीयास्तु भवन्त्येव न संशयः ॥ ७८

उमा—

विरूपाश्च प्रदृश्यन्ते मानुषेष्वेव केचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ७९

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ ७९॥
रूपयोगात् पुरा मर्त्या दर्पाहङ्कारसंयुताः ।
विरूपहासकाश्चैव स्तुतिनिन्दादिभिर्भृशम् ॥ ८०॥
परोपतापिनश्चैव मांसादाश्च तथैव च ।
अभ्यसूयापराश्चैव अशुद्धाश्च तथा नराः ॥ ८१॥
एवं युक्तसमाचारा यमलोके सुदण्डिताः ।
कथञ्चित् प्राप्य मानुष्यं तत्र ते रूपवर्जिताः ॥ ८२॥
विरूपास्सम्भवन्त्येव नास्ति तत्र विचारणा ॥ ८३

उमा—

भगवन् देवदेवेश केचित् सौभाग्यसंयुताः ।

रूपभोगविहीनाश्च दृश्यन्ते प्रमदाप्रियाः ॥ ८४

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ८४॥

श्रीमहेश्वरः—

ये पुरा मानुषा देवि सौम्यशीलाः प्रियंवदाः ।
स्वदारैरेव सन्तुष्टा दारेषु समवृत्तयः ॥ ८५॥

दाक्षिण्येनैव वर्तन्ते प्रमदास्वप्रियास्वपि ।
न तु प्रत्यादिशन्त्येव स्त्रीदोषान् गुणसंश्रितान् ॥ ८६॥

अन्नपानीयदाः काले नृणां स्वादुप्रदाश्च ये ।
स्वदार[1]व्रतिनश्चैव धृतिमन्तो निरत्ययाः ॥ ८७॥

एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुषास्ते भवन्त्येव सततं सुभगा भृशम् ॥ ८८॥

अर्थोद्दतेऽपि ते देवि भवन्ति प्रमदाप्रियाः ॥ ८९

उमा—

दुर्भगास्सम्प्रदृश्यन्ते आर्या भोगयुता अपि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ९०

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ॥ ९०॥

ये पुरा मनुजा देवि स्वदारेष्वनपेक्षया ।

---

1. ख-ब—वर्तिनश्चैव

यथेष्टवृत्तयश्चैव निर्लज्जा वीतसम्भ्रमाः ॥ ११॥

परेषां विप्रियकरा वाङ्मनःकायकर्मभिः ।
निराश्रया निरन्नाद्यास् स्त्रीणां हृदयकोपनाः ॥ १२॥

एवं युक्तसमाचाराः पुनर्जन्मनि ते नराः ।
दुर्भगास्तु भवन्त्येव स्त्रीणां हृदयविप्रियाः ॥ १३॥

नास्ति तेषां रतिसुखं स्वदारेष्वपि किञ्चन* ॥ १४

उमा—

भगवन् देवदेवेश मानुषेष्वपि केचन ।
ज्ञानविज्ञानसम्पन्ना बुद्धिमन्तो विचक्षणाः ॥ १५

दुर्गतास्तु प्रदृश्यन्ते यतमाना यथाविधि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १६

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ १६॥

[1]ये पुरा मनुजा देवि श्रुतवन्तोऽपि केवलम् ।
निराश्रया निरन्नाद्या भृशमात्मपरायणाः ॥ १७॥

ते पुनर्जन्मनि शुभे ज्ञानबुद्धियुता अपि ।
निष्किञ्चना भवन्त्येव अनुप्तं हि न रोहति ॥ १८॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—अर्धसप्तकं नास्ति

उमा—

मूर्खा लोके प्रदृश्यन्ते दृढमूला विचेतसः ।
ज्ञानविज्ञानरहितास् समृद्धाश्च समन्ततः ॥ ९९॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १००

श्रीमहेश्वरः—

ये पुरा मनुजा देवि बालिशा अपि सर्वतः ।
समाचरन्ति दानानि दीनानुग्रहकारणात् ॥ १०१
अबुद्धिपूर्वं वा दानं ददत्येव ततस्ततः ।
ते पुनर्जन्मनि शुभे प्राप्नुवन्त्येव तत्तथा ॥ १०२
पण्डितोऽपण्डितो वाऽपि भुङ्क्ते दानफलं नरः ।
बुद्ध्याऽनपेक्षितं दानं सर्वथा तत् फलत्युत ॥ १०३

उमा—

भगवन् देवदेवेश मानुषेषु च केचन ।
मेधाविनश्श्रुतिधरा भवन्ति विशदाक्षराः ॥ १०४
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १०४॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि गुरुशुश्रूषका भृशम् ।
ज्ञानार्थं ते तु सङ्गृह्य तीर्थं ते विधिपूर्वकम् ॥ १०५॥
विधिनैव परांश्चैव ग्राहयन्ति च नान्यथा ।

अश्लाघमाना ज्ञानेन प्रशान्ता यतवाचकाः ॥ १०६॥
विद्यास्थानानि ये लोके स्थापयन्ति च यत्नतः ॥ १०७
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मेधाविनश्श्रुतिधरा भवन्ति विशदाक्षराः ॥ १०८

उमा—

अपरे मानुषा देव यतन्तोऽपि यतस्ततः ।
बहिष्कृताः प्रदृश्यन्ते श्रुतविज्ञानबुद्धितः ॥ १०९
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १०९॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि ज्ञानदर्पसमन्विताः ।
श्लाघमानाश्च तत् प्राप्य ज्ञानाहङ्कारमोहिताः ॥ ११०॥
वदन्ति ये [1]परान् नित्यं ज्ञानाधिक्येन दर्पिताः ।
ज्ञानादसूयां कुर्वन्ति न सहन्ते हि चापरान् ॥ १११॥
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात् प्राप्य तत्र बोधविवर्जिताः ॥ ११२॥
भवन्ति सततं देवि यतन्तो हीनमेधसः ॥ ११३

उमा—

भगवन् मानुषाः केचित् सर्वकल्याणसंयुताः ।

---

1. क-ख-घ—पुरा नि

पुत्रैर्दारैर्गुणयुतैर् दासीदासपरिच्छदैः ॥ ११४

[1]परस्परर्द्धिसंयुक्तास् स्थानैश्वर्यमनोहरैः ।
व्याधिहीना निराबाधा रूपारोग्यबलैर्युताः ॥ ११५

धनधान्येन सम्पन्नाः प्रासादैर्यानवाहनैः ।
सर्वोपभोगसंयुक्ता नानाचित्रैर्मनोहरैः ॥ ११६

ज्ञातिभिस्सह मोदन्ते अविघ्नं तु दिने दिने ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ११७

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ॥ ११७॥

ये पुरा मनुजा देवि आढ्या वा इतरेऽपि वा ।
श्रुतवृत्तसमायुक्ता दानकामाश्श्रुतप्रियाः ॥ ११८॥

परेङ्गितपरा नित्यं दातव्यमिति निश्चिताः ।
सत्यसन्धाः क्षमाशीला लोभमोहविवर्जिताः ॥ ११९॥

दातारः पात्रतो दानं व्रतैर्नियमसंयुताः ।
स्वदुःखमिव संस्मृत्य परदुःखविवर्जिताः ॥ १२०॥

सौम्यशीलाश्शुभाचारा देवब्राह्मणपूजकाः ॥ १२१

एवंशीलसमाचाराः पुनर्जन्मनि शोभने ।
दिवि वा भुवि वा देवि जायन्ते कर्मभोगिनः ॥ १२२

1. अ-क-घ—अर्धत्रयं नास्ति

मानुषेष्वपि ये जातास् तादृशास्सम्भवन्ति ते ।
यादृशास्तु त्वया प्रोक्तास् सर्वे कल्याणसंयुताः ॥ १२३
रूपं द्रव्यं बलं चायुर् भोगैश्वर्यं कुलं श्रुतम् ।
इत्येतत् सर्वसाद्गुण्यं दानाद्भवति नान्यथा ॥ १२४
तपोदानमयं सर्वम् इति विद्धि शुभानने ॥ १२४॥

उमा—

अथ केचित् प्रदृश्यन्ते मानुषेष्वेव मानुषाः ।
दुर्गताः क्लेशभूयिष्ठा दानभोगविवर्जिताः ॥ १२५॥
भयैस्त्रिभिस्समायुक्ता व्याधिक्षुद्भयसंयुताः ।
दुष्कलत्राभिभूताश्च सततं विघ्नदर्शकाः ॥ १२६॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १२७

श्रीमहेश्वरः—

ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
क्रोधलोभसमायुक्ता निरन्नाद्याश्च निष्क्रियाः ॥ १२८
नास्तिकाश्चैव धूर्ताश्च मूर्खाश्चात्मपरायणाः ।
परोपतापिनो देवि प्रायशः प्राणिनिर्दयाः ॥ १२९
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथञ्चित् प्राप्य मानुष्यं तत्र ते दुःखपीडिताः ॥ १३०
सर्वतस्सम्भवन्त्येव पूर्वमात्मप्रमादतः ।

यथा ते पूर्वकथितास् तथा ते सम्भवन्त्युत ॥ १३१

शुभाशुभं कृतं कर्म सुखदुःखफलोदयम् ।
इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ १३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
[ अस्मिन्नध्याये १३२ श्लोकाः ]

---

## ॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

---

ईश्वरेणोमां प्रति अन्धत्वपङ्गुत्वादिनानादोषकारणीभूतानां दुष्कर्मणां विशिष्य कथनम् ॥

---

उमा—

भगवन् देवदेवेश मम प्रीतिविवर्धन ।
जात्यन्धाश्चैव दृश्यन्ते जाता वा नष्टचक्षुषः ॥ १

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १॥

श्रीमहेश्वरः—

[1]हन्त ते कथयिष्यामि शृणु कल्याणि कारणम् ॥ २

ये पुरा कामकारेण परवेश्मसु लोलुपाः ।

---

1. क-घ—तदहं ते प्रवक्ष्यामि

परस्त्रियोऽभिवीक्षन्ते दुष्टेनैव स्वचक्षुषा ॥ ३
अन्धीकुर्वन्ति ये मर्त्याः क्रोधलोभसमन्विताः ।
लक्षणज्ञाश्च रूपेषु अयथावत् प्रदर्शकाः ॥ ४
एवं युक्तसमाचाराः कालधर्मवशास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ५
यदि चेन्मानुषं जन्म लभेरंस्ते तथाऽपि वा ।
स्वभावतो वा जाता वा अन्धा एव भवन्ति ते ॥ ६
अक्षिरोगयुता वाऽपि नास्ति तत्र विचारणा ॥ ६॥

उमा—

मुखरोगयुताः केचिद् दृश्यन्ते सततं नराः ।
दन्त[1]कण्ठकपोलस्थैर् व्याधिभिर्बहुपीडिताः ॥ ७॥
आदिप्रभृति वै मर्त्या जाता वाऽप्यथ कारणात् ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ८॥

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि शृणु देवि समाहिता ॥ ९
कुवक्तारस्तु ये देवि जिह्वया कटुकं भृशम् ।
असत्यं परुषं घोरं गुरून् प्रति परान् प्रति ॥ १०
जिह्वाबाधां तदाऽन्येषां कुर्वते कोपकारणात् ।

1. ख-व—कर्ण

प्रायशोऽनृतभूयिष्ठा नराः कार्यवशेन वा ॥ ११

तेषां जिह्वाप्रदेशस्था व्याधयस्सम्भवन्ति ते ॥ ११॥

कुश्रोतारस्तु ये चार्थं परेषां कर्णनाशकाः ।
कर्णरोगान् बहुविधाँल्लभन्ते ते पुनर्भवे ॥ १२॥

दन्तरोगशिरोरोगकर्णरोगास्तथैव च ।
अन्ये मुखाश्रिता दोषास् सर्वे चात्मकृतं फलम् ॥ १३॥

उमा—

[1]पीड्यन्ते सततं देव मानुषेष्वेव केचन ।
कुक्षिपक्षाश्रितैर्दोषैर् व्याधिभिश्चोदराश्रितैः ॥ १४॥

तीक्ष्णशूलैश्च पीड्यन्ते नरा दुःखपरिप्लुताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १५॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि कामक्रोधवशा भृशम् ।
आत्मार्थमेव चाहारं भुञ्जन्ते निरपेक्षकाः ॥ १६॥

[2]अभक्ष्याहारदानैश्च विश्वस्तानां विषप्रदाः ।
अभक्ष्यभक्षदाश्चैव शौचमङ्गलवर्जिताः ॥ १७॥

[3]मांसयुक्तसमाचाराः पुनर्जन्मनि शोभने ।

1. ख—क्लिश्यन्ते
2. ख—इदमर्धं नास्ति
3. ख—एवंयुक्त

कथञ्चित् प्राप्य मानुष्यं तत्र ते व्याधिपीडिताः ॥ १८॥
तैस्तैर्बहुविधाकारैर् व्याधिभिर्दुःखसंश्रिताः ।
भवन्त्येव तथा देवि यथा चैव कृतं पुरा ॥ १९॥

उमा—

दृश्यन्ते सततं देव व्याधिभिर्मेहनाश्रितैः ।
पीड्यमानास्तथा मर्त्या अश्मरीशर्करादिभिः ॥ २०॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २१

श्रीमहेश्वरः—

ये पुरा मनुजा देवि परदारप्रधर्षकाः ।
तिर्यग्योनिषु धूर्ता वै मैथुनार्थं चरन्ति च ॥ २२
कामदोषेण ये धूर्ताः कन्यासु विधवासु च ।
बलात्कारेण गच्छन्ति रूपदर्पसमन्विताः ॥ २३
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ॥ २४
मेहनस्थैस्ततो घोरैः पीड्यन्ते व्याधिभिः प्रिये ॥ २४॥

उमा—

भगवन् मानुषाः केचिद् दृश्यन्ते शोषिणः कृशाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २५॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि मांसलुब्धास्सुलोलुपाः ।
आत्मार्थं स्वादुगृद्धाश्च परभोगोपतापिनः ॥ २६॥

अभ्यसूयापराश्चापि परभोगेषु ये नराः ॥ २७

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
शोषव्याधियुतास्तत्र नरा धमनिसन्तताः ॥ २८

भवन्त्येव नरा देवि पापकर्मोपभोगिनः ॥ २८॥

उमा—

भगवन् मानुषाः केचित् क्लिश्यन्ते कुष्ठरोगिणः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २९॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि परेषां रूपनाशनाः ।
आघातवधबन्धैश्च वृथा दण्डेन मोहिताः ॥ ३०॥

इष्टनाशकरा ये तु अपथ्याहारदा नराः ।
चिकित्सका वा दुष्टाश्च द्वेषलोभसमन्विताः ॥ ३१॥

[1]निर्दयाः प्राणिहिंसायां मलदाश्चित्तनाशनाः ॥ ३२

एवंयुक्तसमाचराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्तेषु दुःखिताः ॥ ३३

---

1. ख—अर्धत्रयं नास्ति

अत्र ते क्लेशसंयुक्ताः कुष्ठरोगशतैर्वृताः ॥ ३३॥

केचित् त्वग्दोषसंयुक्ता व्रणकुष्ठैश्च संयुताः ।
श्वित्रकुष्ठयुता वाऽपि बहुधा कुष्ठसंयुताः ॥ ३४॥

भवन्त्येव नरा देवि यथा येन कृतं फलम् ॥ ३५

उमा—

भगवन् मानुषाः केचिद् अङ्गहीनाश्च पङ्गवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३६

श्रीमहेश्वरः—

ये पुरा मनुजा देवि [1]लोभमोहसमावृताः ।
प्राणिनां प्राणहिंसार्थम् अङ्गविघ्नं प्रकुर्वते ॥ ३७

शस्त्रेणोत्कृत्य वा देवि प्राणिनां चेष्टनाशकाः ॥ ३७॥

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
तदङ्गहीना वै प्रेत्य भवन्त्येव न संशयः ॥ ३८॥

स्वभावतो वा जाता वा पङ्गवस्ते भवन्ति वै ॥ ३९

उमा—

भगवन् मानुषाः केचिद् ग्रन्थिभिः पिलकैस्तथा ।
क्लिश्यमानाः प्रदृश्यन्ते तन्मे शंसितुमर्हसि ॥ ४०

1. ख—इतः चत्वारः पादा न सन्ति

श्रीमहेश्वरः—

ये पुरा मनुजा देवि ग्रन्थिभेदकरा नृणाम् ।
मुष्टिप्रहारपरुषा नृशंसाः पापकारिणः ॥ ४१
पाटकास्तोटकाश्चैव शूलतुन्दास्तथैव च ॥ ४१॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ग्रन्थिभिः पिलकैश्चैव क्लिश्यन्ते भृशदुःखिताः ॥ ४२॥

उमा—

भगवन् मानुषाः केचित् पादरोगसमन्विताः ।
दृश्यन्ते सततं देव तन्मे शंसितुमर्हसि ॥ ४३॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि क्रोधलोभसमन्विताः ।
मनुजा देवतास्थानं स्वपादैर्भ्रंशयन्त्युत ॥ ४४॥
जानुभिः पार्ष्णिभिश्चैव प्राणिहिंसां प्रकुर्वते ॥ ४५
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
पादरोगैर्बहुविधैर् बाध्यन्ते श्वपदादिभिः ॥ ४६

उमा—

भगवन् मानुषाः केचिद् दृश्यन्ते बहवो भुवि ।
वातजैः पित्तजै रोगैर् युगपत् सन्निपातकैः ॥ ४७
रोगैर्बहुविधैर्देव क्लिश्यमानास्सुदुःखिताः ।

असमस्तैस्समस्तैश्च आढ्या वा दुर्गतास्तथा ॥ ४८

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ४८॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ ४९

ये पुरा मनुजा देवि त्वासुरं भावमाश्रिताः ।
स्ववशाः कोपनपरा गुरुविद्वेषिणस्तथा ॥ ५०

परेषां दुःखजनका मनोवाक्कायकर्मभिः ।
छिन्दन् भिन्दन् तुदन्नेव नित्यं प्राणिषु निर्दयाः ॥ ५१

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते तथाविधाः ॥ ५२

तत्र ते बहुभिर्घोरैस् तप्यन्ते व्याधिभिः प्रिये ॥ ५२॥

[1]केचिच्च छर्दिसंयुक्ताः केचित्काससमन्विताः ।
ज्वरातिसारतृष्णाभिः पीड्यमानास्तथा परे ॥ ५३॥

[2]पादगुल्मैश्च बहुभिश् श्लेष्मदोषसमन्विताः ।
पादरोगैश्च विविधैर् व्रणकुष्टभगन्दरैः ॥ ५४॥

आढ्या वा दुर्गता वाऽपि दृश्यन्ते व्याधिपीडिताः ॥ ५५

---

1. क—केचिच्छ्लीपदसं; ख—केचिच्छ्लपदसं
घ—केचिच्छ्वथश्म

2. ख—वातपित्तैश्च बहुभिश्शोषोदर

एवमात्मकृतं कर्म भुञ्जते तत्र तत्र ते ।
गृहीतुं न च शक्यं हि केनचित् स्वकृतं फलम् ॥ ५६
इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि* ॥ ५६॥

उमा—

भगवन् देवदेवेश भूतपाल नमोस्तु ते ।
ह्रस्वाङ्गाश्चैव वक्राङ्गाः कुब्जा वामनकास्तथा ॥ ५७॥
अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ५८॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि लोभमोहसमन्विताः ।
धान्यमानान् विकुर्वन्ति क्रयविक्रयकारणात् ॥ ५९॥
तुलादोषं तदा देवि घृतमानेषु नित्यशः ।
अर्धापकर्षणाच्चैव सर्वेषां क्रयविक्रये ॥ ६०॥
अङ्गदोषकरा ये तु परेषां कोपकारणात् ।
मांसादाश्चैव ये मूर्खा अयथावत्प्रथास्सदा ॥ ६१॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ह्रस्वाङ्गा वामनाश्चैव कुब्जाश्चैव भवन्ति ते ॥ ६२॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

उमा—

भगवन् मानुषाः केचिद् दृश्यन्ते मानुषेषु वै ।
उन्मत्ताश्च पिशाचाश्च पर्यटन्तो यतस्ततः ॥ ६३॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ६४

श्रीमहेश्वरः—

ये पुरा मनुजा देवि दर्पाहङ्कारसंयुताः ।
बहुधा प्रलपन्त्येव हसन्ति च परान् भृशम् ॥ ६५
मोहयन्ति परान् भोगैर् मदनैर्लोभकारणात् ।
वृद्धान् गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ॥ ६६
शौण्डा विदग्धाश्शास्त्रेषु तथैवानृतवादिनः ॥ ६६॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
उन्मत्ताश्च पिशाचाश्च भवन्त्येव न संशयः ॥ ६७॥

उमा—

भगवन् मानुषाः केचिन्निरपत्यास्सुदुःखिताः ।
यतन्तो न लभन्त्येव अपत्यानि यतस्ततः ॥ ६८॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ६९

श्रीमहेश्वरः—

ये पुरा मनुजा देवि सर्वप्राणिषु निर्दयाः ।
घ्नन्ति बालांश्च भुञ्जन्ते मृगाणां पक्षिणामपि ॥ ७०

गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयकाः ।
पितृपूजां न कुर्वन्ति यथोक्तां चाष्टकादिभिः ॥ ७१

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात् प्राप्य निरपत्या भवन्ति ते ॥ ७२
पुत्रशोकयुताश्चापि नास्ति तत्र विचारणा ॥ ७२॥

उमा—

भगवन् मानुषाः केचित् प्रदृश्यन्ते सुदुःखिताः ।
उद्वेगवासनिरतास् सोद्वेगाश्च यतव्रताः ॥ ७३॥

नित्यं शोकसमाविष्टा दुर्गताश्च तथैव च ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ७४॥

श्रीमहेश्वरः—

ये पुरा मनुजा नित्यम् [1]उत्क्रोशनपरायणाः ।
भीषयन्ति परान् नित्यं विकुर्वन्ति तथैव च ॥ ७५॥

ऋणवृद्धिकराश्चैव दरिद्रेभ्यो यथेष्टतः ।
[2]ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः ॥ ७६॥

उद्विजन्ते हि तान् दृष्ट्वा धारकास्त्वर्थकारणात् ।
अतिवृद्धिर्न कर्तव्या दरिद्रेभ्यो यथेष्टतः ॥ ७७॥

---

1. अ—उत्कोचन

2. ख—ब्राह्मणार्थमभि + पूर्वकम्

[1]ये श्वभिः क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसां तथा देवि कुर्वन्ति च यतस्ततः ॥ ७८॥
येषां गृहेषु वै श्वानस् त्रासयन्ति वृथा नरान् ॥ ७९
एवंयुक्तसमाचाराः कालधर्मगताः पुनः ।
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ८०
कथञ्चित् प्राप्य मानुष्यं तत्र ते दुःखसंयुताः ॥ ८०॥
कुदेशे दुःखभूयिष्ठे व्याघातशतसङ्कुले ।
जायन्ते तत्र शोचन्तस् सोद्वेगाश्च यतस्ततः ॥ ८१॥

उमा—

भगवन् मानुषाः केचिद् ऐश्व[2]र्यज्ञानसंयुताः ।
म्लेच्छभूमिषु दृश्यन्ते म्लेच्छैश्वर्यसमन्विताः ॥ ८२॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ८३

श्रीमहेश्वरः—

ये पुरा मनुजा देवि धनधान्यसमन्विताः ।
अयथावत् प्रयच्छन्ति श्रद्धावर्जितमेव वा ॥ ८४
अपात्रेभ्यश्च ये दानं शौचमङ्गलवर्जिताः ।
ददत्येव च ये मूर्खाश् श्लाघयाऽवज्ञयाऽपि वा ॥ ८५

1. ख—ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः ।
[ अधिकः पाठः ]

2. ख—र्याज्ञान

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कुदेशे म्लेच्छभूयिष्ठे दुर्गमे वनसङ्कटे ॥ ८६
[1]म्लेच्छाधिपत्यं सम्प्राप्य जायन्ते तत्र तत्र वै ॥ ८६॥

उमा—

भगवन् भगनेत्रघ्न मानुषेषु च केचन ।
क्लीबा नपुंसकाश्चैव दृश्यन्ते षण्डकास्तथा ॥ ८७॥
नीचकर्मरता नीचा नीचसख्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ८८॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ ८९
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपुंस्त्वोपघातेन जीवन्ति च रमन्ति च ॥ ९०
पुंस्त्वोपघातिनश्चैव नराणां कोपकारणात् ।
ये धूर्तास्स्त्रीषु गच्छन्ति अयथावद्यथेष्टतः ॥ ९१
कामविघ्नकरा ये तु द्वेषपैशुन्यकारणात् ।
एवंयुक्तसमाचाराः कालधर्मं गतास्तु ते ॥ ९२
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ९२॥
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।

1. ब—राज्याधिपत्यं

क्लीबा वर्षवराश्चैव षण्डकाश्च भवन्ति ते ॥ ९३॥

नीचकर्मरता लोके निर्लज्जा वीतसम्भ्रमाः ।
परान् दीनान् बहिष्कृत्य ते भवन्ति स्वकर्मणा ॥ ९४॥

यदि चेत् सम्प्रपश्येरंस् ते मुच्यन्ते हि कल्मषात् ।
अत्रापि ते प्रमाद्येयुः पतन्ति नरकालये ॥ ९५॥

स्त्रीणामपि तथा देवि [1]यथा पुंसां तु कर्मजम् ।
इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ ९६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
[ अस्मिन्नध्याये ९६॥ श्लोकाः ]

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

## ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

ईश्वरेणोमां प्रति स्त्रीणां पुंश्चलीत्वादिदोषहेतुभूतदुष्कर्मकथनम् ॥ १ ॥ तथा प्राणिसाधारण्येन दास्यादिप्रयोजकदुष्कर्मकथनम् ॥ २ ॥

उमा—

भगवन् देवदेवेश शूलपाणे वृषध्वज ।
पुंश्चल्य इव या स्त्रीषु नीचवृत्तिरतस्मृताः ॥ १
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १॥

श्रीमहेश्वरः—

याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः ।
कामरागसमायुक्ताः पतीनतिचरन्ति वै ॥ २॥
प्रतिकूलपरा यास्तु पतीन् प्रति यथा तथा ।
शौचं लज्जां तु विस्मृत्य यथेष्टपरिचारणाः ॥ ३॥
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
यदि वै मानुषं जन्म लभेरंस्तास्तथाविधाः ॥ ४॥
बहुसाधारणा एव पुंश्चल्यश्च भवन्ति ताः ॥ ५
पौंश्चल्यं यत्तु तद्वृत्तं स्त्रीणां कष्टतमं स्मृतम् ।
ततःप्रभृति ता देवि पतन्त्येव न संशयः ॥ ६
शोचन्ति चेत्तु तद्वृत्तं मनसा हितमाप्नुयुः ॥ ६॥

उमा—

भगवन् देवदेवेश प्रमदा विधवा भृशम् ।
दृश्यन्ते मानुषे लोके सर्वकल्याणवर्जिताः ॥ ७॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ८

श्रीमहेश्वरः—

याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः ।
कुटुम्बं तत्र वै पत्युर् नाशयन्ति वृथा तथा ॥ ९
विषदाश्चाग्निदाश्चैव पतीन् प्रति सुनिर्दयाः ।
अन्यासां हि पतीन् यान्ति स्वपतीन् द्वेष्यकारणात् ॥ १०
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
निरयस्थाश्चिरं कालं कथञ्चित् प्राप्य मानुषम् ॥ ११
तत्र ता भोगरहिता विधवाश्च भवन्ति वै ॥ ११॥

उमा—

भगवन् प्रमदा लोके पत्यौ ज्ञातिषु सत्सु च ।
लिङ्गिन्यस्सम्प्रदृश्यन्ते पाषण्डमतमाश्रिताः ॥ १२॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३

श्रीमहेश्वरः—

याः पुरा भावदोषेण लोभमोहसमन्विताः ।
परद्रव्यहरा लोभात् परेषां द्रव्यहारकाः ॥ १४

अभ्यसूयापरा यास्तु सपत्नीनां प्रदूषकाः ।
ईर्ष्यापराः कोपनाश्च बन्धूनां विफलास्सदा ॥ १५

एवंयुक्तसमाचाराः पुनर्जन्मनि तास्त्रियः ।
अलक्षणसमायुक्ताः पाषण्डं धर्ममाश्रिताः ॥ १६

स्त्रियः प्रव्राजशीलाश्च भवन्त्येव न संशयः ॥ १६॥

उमा—

भगवन् मानुषाः केचित् कारुवृत्तिं समाश्रिताः ।
प्रदृश्यन्ते मनुष्येषु नीचकर्मरतास्तथा ॥ १७॥

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १८

श्रीमहेश्वरः—

ये पुरा मनुजा देवि स्तब्धमानयुता भृशम् ।
दर्पाहङ्कारसंयुक्ताः केवलात्मपरायणाः ॥ १९

तादृशा मानुषा देवि पुनर्जन्मनि शोभने ।
कारवो नटगन्धर्वास् सम्भवन्ति यथा तथा ॥ २०

नापिता बन्दिनश्चैव तथा वैतालिकाः प्रिये ।
एवम्भूतास्त्वधोवृत्तिं जीवन्त्याश्रित्य मानवाः ॥ २१

परप्रसाधनकरास् ते परैः कृतवेतनाः ।
परावमानस्य फलं भुञ्जते पौर्वदैहिकम् ॥ २२

उमा—

भगवन् देवदेवेश मानुषेष्वेव केचन ।
दासभूताः प्रदृश्यन्ते सर्वकर्मपरा भृशम् ॥ २३

आघातभर्त्सनसहाः पीड्यमानाश्च सर्वशः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ २४

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ २४॥
ये पुरा मनुजा देवि परेषां वित्तहारकाः ॥ २५

[1]ऋणवृद्धिकरं क्रौर्यान्न्यासदत्तं तथैव च ।
निक्षेपकारणाद्दत्तपरद्रव्यापहारिणः ॥ २६

प्रमादाद्विस्मृतं नष्टं परेषां धनहारकाः ।
वधबन्धपरिक्लेशैर् दासत्वं कुर्वते परान् ॥ २७

तादृशा मरणं प्राप्ता दण्डिता यमशासनैः ।
कथञ्चित् प्राप्य मानुष्यं तत्र ते देवि सर्वथा ॥ २८
दासभूता भविष्यन्ति जन्मप्रभृति मानवाः ॥ २८॥

तेषां कर्माणि कुर्वन्ति येषां ते धनहारकाः ।
[2]आसमाप्तेस्स्वपापस्य कुर्वन्तीति विनिश्चयः ॥ २९॥

---

1. अ—अर्धत्रयं नास्ति
2. अ—इदमर्धद्वयं नास्ति

पशुभूतास्तथा चान्ये भवन्ति धनहारकाः ।
तत्तथा क्षीयते कर्म तेषां पूर्वापराधजम् ॥ ३०॥

अतोऽन्यथा न तच्छक्यं कर्म भोक्तुं सुरासुरैः ॥ ३१

किन्तु मोक्षविधिस्तेषां सर्वथा तत्प्रसादनम् ।
अयथावन्मोक्षकामः पुनर्जन्मनि चेष्यते ॥ ३२

मोक्षकामी यथान्यायं कुर्वन् कर्माणि सर्वशः ।
भर्तुः प्रसादमाकाङ्क्षेद् आयासान् सर्वथा सहन् ॥ ३३

प्रीतिपूर्वं तु यो भर्त्रा मुक्तो मुक्तस्स [1]पावनः ।
तथाभूतान् कर्मकरान् सदा सन्तोषयेत् पतिः ॥ ३४

यथार्हं कारयेत् कर्म दण्डं कारणतः क्षिपेत् ।
वृद्धान् बालांस्तथा क्षीणान् पालयन् धर्ममाप्नुयात् ॥ ३५

इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि* ॥ ३५॥

उमा—

भगवन् मानुषेष्वेव मानुषास्समदर्शनाः ।
चण्डाला इव दृश्यन्ते स्पर्शमात्रे विदूषिताः ॥ ३६॥

नीचकर्मरता देव सर्वेषां मलहारकाः ।
दुर्गताः क्लेशभूयिष्ठा विरूपा दुष्टचेतसः ॥ ३७॥

---

1. क—पापतः

* अ-क-घ—कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ३८

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि तदेकाग्रमनाश्शृणु ॥ ३८॥

ये पुरा मनुजा देवि अतिमानयुता भृशम् ।

आत्मसम्भावनायुक्तास् स्तब्धा दर्पसमन्विताः ॥ ३९॥

प्रणामं तु न कुर्वन्ति गुरूणामपि पामराः ॥ ४०

ये स्वधर्मार्पणं कार्यम् अतिमानान्न कुर्वते ।

परान् सन्नामयन्त्येव आत्मनाऽऽत्मनि ये बलात् ॥ ४१

ऋद्धियोगात् परान् नित्यम् अवमन्यन्ति मानवान् ।

पानपास्सर्वभक्षाश्च परुषाः कटुका नराः ॥ ४२

एवंयुक्तसमाचारा दण्डिता यमशासनैः ।

कथञ्चित् प्राप्य मानुष्यं चण्डालास्सम्भवन्ति ते ॥ ४३

नीचकर्मरताश्चैव सर्वेषां मलहारकाः ।

परेषां वन्दनपरास् ते भवन्त्येव मानिनः ॥ ४४

विरूपाः पापयोनिस्थास् स्पर्शनादिविवर्जिताः ।

कुवृत्तिमुपजीवन्ति भूत्वा ते रजकादयः ॥ ४५

पुराऽतिमानदोषात्तु भुञ्जते स्वकृतं फलम् ॥ ४५॥

[1]तानवस्थाप्य कृपणांश् चण्डालानपि बुद्धिमान् ।

---

1. अ-क-घ—अर्धद्वयं नास्ति

न निन्देन्नातिकुप्येत भुञ्जते स्वकृतं फलम् ॥ ४६॥

चण्डाला अपि तां जातिं शोचन्तश्शुद्धिमाप्नुयुः ॥ ४७

उमा—

भगवन् मानुषाः केचिद् आशापाशशतैर्वृताः ।
परेषां द्वारि तिष्ठन्ति प्रतिषिद्धाः प्रवेशने ॥ ४८

द्रष्टुं ज्ञापयितुं चैव न लभन्ते च यत्नतः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ४९

श्रीमहेश्वरः—

ये पुरा [1]मानुषा देवि ऐश्वर्यस्थानसंयुताः ।
संवादं तु न कुर्वन्ति परैरैश्वर्यमोहिताः ॥ ५०

द्वाराणि न ददत्येव लोभमोहादिभिर्वृताः ।
अवस्थामोहसंयुक्तास् स्वार्थमात्रपरायणाः ॥ ५१

सर्वभोगयुता वाऽपि सर्वेषां निष्फला भृशम् ।
अपि [2]शप्ता न कुर्युस्ते परानुग्रहकारणात् ॥ ५२

निर्दयाश्चैव निर्द्वारा भोगैश्वर्यगतिं प्रति ॥ ५२॥

एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ॥ ५३॥

दुर्गता दुरवस्थाश्च कर्मण्याक्षेपसंयुताः ।

1. क-ख-घ—मनुजा 2. ख-घ—शक्ता

अभिधावन्ति ते सर्वे तमर्थमभिवेदिनः ॥ ५४॥
राज्ञां वा राजमात्राणां द्वारि तिष्ठन्ति वारिताः ॥ ५५
कर्म विज्ञापितुं द्रष्टुं न लभन्ते कथञ्चन ।
प्रवेष्टुमपि ते द्वारं बहिस्तिष्ठन्ति काङ्क्षया ॥ ५६

उमा—

भगवन् मानुषाः केचिन्मनुष्येषु बहुष्वपि ।
सहसा नष्टसर्वस्वा नष्टकोशपरिग्रहाः ॥ ५७
दृश्यन्ते मानुषाः केचिद् राजचोरोदकादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ५८

श्रीमहेश्वरः—

ये पुरा मानुषा देवि आसुरं भावमाश्रिताः ।
परेषां वृत्तिनाशं तु कुर्वते द्वेषलोभतः ॥ ५९
[1]उत्कोचनपराश्चैव पिशुनाश्च तथाविधाः ।
परद्रव्यहरा घोराश् चौर्याद्वाऽन्येन कर्मणा ॥ ६०
निर्दया निरनुक्रोशाः परेषां वृत्तिनाशकाः ।
नास्तिकानृतभूयिष्ठाः परद्रव्यापहारिणः ॥ ६१
एवंयुक्तसमाचारा दण्डिता यमशासनैः ।
निरयस्थाश्चिरं कालं तत्र दुःखसमन्विताः ॥ ६२

1. क-ख—उत्क्रोशन

यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्रस्थाः प्राप्नुवन्त्यत्र सहसा द्रव्यनाशनम् ॥ ६३

कष्टं तत् प्राप्नुवन्त्येव कारणाकारणादपि ।
नाशं विनाशं द्रव्याणाम् उपघातं च सर्वशः ॥ ६४

उमा—

भगवन् मानुषाः केचिद् बान्धवैस्सहसा पृथक् ।
कारणादेव सहसा सर्वेषां प्राणनाशनम् ॥ ६५

शस्त्रेण वाऽन्यथा वाऽपि प्राप्नुवन्ति वधं नराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ६६

श्रीमहेश्वरः—

ये पुरा मनुजा देवि घोरकर्मरतानृताः ।
आसुराः प्रायशो मूर्खाः प्राणिहिंसाप्रिया भृशम् ॥ ६७

निर्दयाः प्राणिहिंसायां तथा प्राणिविघातकाः ।
विश्वस्तघातकाश्चैव तथा सुप्तविघातकाः ॥ ६८

प्रायशोऽनृतभूयिष्ठा नास्तिका मांसभोजनाः ॥ ६८॥

एवंयुक्तसमाचाराः कालधर्मं गताः पुनः ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ६९॥

तिर्यग्योनिं पुनः प्राप्य तत्र दुःखपरिक्षयात् ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ॥ ७०॥

तत्र ते प्राप्नुवन्त्येव वधबन्धान् यथा तथा ॥ ७१

आढ्या वा दुर्गता वाऽपि भुञ्जते स्वकृतं फलम् ।
सुप्ता मत्ताश्च विश्वस्तास् तथा ते प्राप्नुवन्त्युत ॥ ७२

[1]प्राणबाधकृतं दुःखं बान्धवैस्सहसा पृथक् ।
पुत्रदारविनाशं वा शस्त्रेणान्येन वा वधम् ॥ ७३

उमा—

भगवन् मानुषाः केचिद् राजभिर्नीतिकोविदैः ।
दण्ड्यन्ते मानुषे लोके मानुषास्सर्वतोभयाः ॥ ७४

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ ७४॥

श्रीमहेश्वरः—

ये पुरा मनुजा देवि मानुषांश्चेतराणि वा ।
क्लिष्टघातेन निघ्नन्ति प्राणान् प्राणिषु निर्दयाः ॥ ७५॥

आसुरा घोरकर्माणः क्रूरदण्डवधप्रियाः ॥ ७६

ये दण्डयन्त्यदण्ड्यांश्च राजानः कोपमोहिताः ।
हिंसाहङ्कारपरुषा मांसादा नास्तिकाशुभाः ॥ ७७

केचित् स्त्रीपुरुषघ्नाश्च गुरुघ्नाश्च तथा प्रिये ॥ ७७॥

एवंयुक्तसमाचाराः प्राणिधर्मं गताः पुनः ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ ७८॥

1. ख—इदमर्धद्वयं नास्ति

पूर्वजन्मकृतं कर्म भुञ्जते तदिह प्रजाः ॥ ७९

इहैव यत् कर्म कृतं तत् परत्र फलत्युत ।
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ॥ ८०

न चर्षीणां न देवानाम् अमृतत्वात्तपोबलात् ।
तैरेकेन शरीरेण भुज्यते कर्मणः फलम् ॥ ८१

न तथा मानुषाणां स्याद् अन्तर्धाय भवेद्धि तत् ॥ ८१॥

उमा—

किमर्थं मानुषा लोके दण्ड्यन्ते पृथिवीश्वरैः ।
कृतापराधमुद्दिश्य हन्ता हर्ताऽयमित्युत ॥ ८२॥

पुत्रार्थी पुत्रकामेष्ट्या इहैव लभते सुतान् ।
तैरेव हि शरीरेण भुञ्जन्तः कर्मणां फलम् ॥ ८३॥

दृश्यन्ते मानुषा लोके तद्भवान् नानुमन्यते ।
एतन्मे संशयस्थानं तन्मे त्वं छेत्तुमर्हसि ॥ ८४॥

श्रीमहेश्वरः—

स्थाने संशयितं देवि तत्त्वं शृणु समाहिता ।
कर्म कर्मफलं चेति युगपद्भुवि नेष्यते ॥ ८५॥

ये त्वयाऽभिहिता देवि हन्ता हर्ताऽयमित्यपि ।
तेषां तत्पूर्वकं कर्म दण्ड्यते यत्र राजभिः ॥ ८६॥

देवि कर्म कृतं चैषां हेतुर्भवति शासने ।

अपराधापदेशेन राजा दण्डयति प्रजाः ॥ ८७॥

इह लोके व्यवस्थार्थं राजभिर्दण्डनं स्मृतम् ।
उद्वेजनार्थं शेषाणाम् अपराधं तमुद्दिशन् ॥ ८८॥

पुराकृतफलं दण्डो दण्ड्यमानस्य तद्ध्रुवम् ।
प्रागेव च मया प्रोक्तं तत्र निस्संशया भव ॥ ८९॥

उमा—

भगवन् भुवि मर्त्यानां दण्डितानां नरेश्वरैः ।
दण्डेनैव कृतेनेह पापनाशो भवेन्न वा ॥ ९०॥

एतन्मया संशयितं तद्भवांश्छेत्तुमर्हति ॥ ९१

श्रीमहेश्वरः—

स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ॥ ९१॥

ये नृपैर्दण्डिता भूमावपराधापदेशतः ।
यमलोके न दण्ड्यन्ते तत्र ते यमदण्डनैः ॥ ९२॥

अदण्डिता वा ये तथ्या मिथ्या वा दण्डिता भुवि ।
तान् यमो दण्डयत्येव स हि वेद कृताकृतम् ॥ ९३॥

नातिक्रमेद्यमं कश्चित् कर्म कृत्वेह मानुषः ।
राजा यमश्च कुर्वाते दण्डमात्रं तु शोभने ॥ ९४॥

उभाभ्यां यमराजाभ्यां दण्डितोऽदण्डितोऽपि वा ।
पश्चात् कर्मफलं भुङ्क्ते नरके मानुषेषु वा ॥ ९५॥

नास्ति कर्मफलच्छेत्ता कश्चिल्लोकत्रयेऽपि च ।
इति ते कथितं सर्वं निर्विशङ्का भव प्रिये ॥ ९६॥

उमा—

किमर्थं दुष्कृतं कृत्वा मानुषा भुवि नित्यशः ।
पुनस्तत्कर्मनाशाय प्रायश्चित्तानि कुर्वते ॥ ९७॥

सर्वपापहरं चेति हयमेधं वदन्ति च ।
प्रायश्चित्तानि चान्यानि पापनाशाय कुर्वते ॥ ९८॥

तस्मान्मया संशयितं त्वं तच्छेत्तुमिहार्हसि ॥ ९९

श्रीमहेश्वरः—

स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ।
संशयो हि महानेव पूर्वेषां च मनीषिणाम् ॥ १००

द्विधा तु क्रियते पापं सद्भिश्चासद्भिरेव च ।
अभिसन्धाय वा नित्यम् अन्यथा वा यदृच्छया ॥ १०१

केवलं चाभिसन्धाय संरम्भाच्च करोति यत् ।
कर्मणस्तस्य नाशस्तु न कथञ्चन विद्यते ॥ १०२

अभिसन्धिकृतस्यैव [1]नैव नाशोऽस्ति कर्मणः ।
अश्वमेधसहस्रैश्च प्रायश्चित्तशतैरपि ॥ १०३

1. क-घ—अर्थनाशोऽस्ति; अ—विनाशे सति

अन्यथा यत् कृतं पापं प्रमादाद्वा यदृच्छया ।
प्रायश्चित्ताश्वमेधाभ्यां श्रेयसा तत् प्रणश्यति ॥ १०४

लोकसंव्यवहारार्थं प्रायश्चित्तादिरिष्यते ।
विद्ध्येवं पापके कार्ये निर्विशङ्का भव प्रिये ॥ १०५

इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ १०५॥

उमा—

भगवन् देवदेवेश मानुषाश्चेतरा अपि ।
म्रियन्ते मानुषा लोके कारणाकारणादपि ॥ १०६॥

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १०७

श्रीमहेश्वरः—

ये पुरा मनुजा देवि कारणाकारणादपि ।
यथाऽसुभिर्वियुज्यन्ते प्राणिनः प्राणिनिर्दयैः ॥ १०८

तथैव ते प्राप्नुवन्ति यथैवात्मकृतं फलम् ।
विषदास्तु विषेणैव शस्त्रैश्शस्त्रेण घातकाः ॥ १०९

एवमेव यथा लोके मानुषान् घ्नन्ति मानुषाः ।
कारणेनैव तेनाथ तथा स्वप्राणनाशनम् ॥ ११०

प्राप्नुवन्ति पुनर्देवि नास्ति तत्र विचारणा ॥ ११०॥

इति ते कथितं सर्वं कर्मपाककलं प्रिये ।
भूयस्तव समासेन कथयिष्यामि तच्छृणु ॥ १११॥

सत्यप्रमाणकरणान्नित्यमव्यभिचारि च ।
यैः पुरा मनुजैर्देवि यस्मिन् काले यथा कृतम् ॥ ११२॥
येनैव कारणेनापि कर्म यत्तु शुभाशुभम् ॥ ११३
तस्मिन् काले तथा देवि कारणेनैव तेन तु ।
प्राप्नुवन्ति नराः प्रेत्य निस्सन्देहं शुभाशुभम् ॥ ११४
इति सत्यं प्रजानीहि लोके तत्र विधिं प्रति ॥ ११४॥
कर्मकर्ता नरो भोक्ता स नास्ति दिवि वा भुवि ।
न शक्यं कर्म चाभोक्तुं सदेवासुरमानुषैः ॥ ११५॥
कर्मणा ग्रथितो लोक आदिप्रभृति वर्तते ।
एतदुद्देशतः प्रोक्तं कर्मपाकफलं प्रति ॥ ११६॥
यदन्यच्च मया नोक्तं यस्मिंस्ते कर्मसङ्ग्रहे ।
बुद्धितर्केण तत् सर्वं तथा वेदितुमर्हसि ॥ ११७॥
कथितं श्रोतुकामाया भूयश्श्रोतुं किमिच्छसि* ॥ ११८

उमा—

[1]भगवन् देवदेवेश लोकपालनमस्कृत ।
प्रसादात्ते महादेव श्रुता मे कर्मणां गतिः ॥ ११९
सङ्गृहीतं च तत् सर्वं तत्त्वतोऽमृतसन्निभम् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. ख—भगवन् सर्वदेवेश

कर्मणा ग्रथितं सर्वम् इति वेद्मि शुभाशुभम् ॥ १२०

गोवत्सवच्च जननीं निम्नं सलिलवत्तथा ।
कर्तारं स्वकृतं कर्म नित्यं तदनुधावति ॥ १२१

कृतस्य कर्मणश्चेह नाशो नास्तीति निश्चयः ।
अशुभस्य शुभस्यापि तदप्युपगतं मया ॥ १२२

भूय एव महादेव वरद प्रीतिवर्धन ।
कर्मणां गतिमाश्रित्य संशयान्मोक्तुमर्हसि ॥ १२३

श्रीमहेश्वरः—

यत्ते विवक्षितं देवि गुह्यमप्यसितेक्षणे ।
तत् सर्वं निर्विशङ्का त्वं पृच्छ मां शुभलक्षणे ॥ १२४

उमा—

एवं व्यवस्थिते लोके कर्मणां वृषभध्वज ।
कृत्वा तत् पुरुषः कर्म शुभं वा यदि वेतरत् ॥ १२५

कर्मणस्सुकृतस्येह कदा भुङ्क्ते फलं पुनः ।
इह वा प्रेत्य वा देव तन्मे शंसितुमर्हसि ॥ १२६

श्रीमहेश्वरः—

स्थाने संशयितं देवि तद्धि गुह्यतमं नृषु ।
त्वत्प्रियार्थं प्रवक्ष्यामि देवि गुह्यं शुभानने ॥ १२७

पूर्वदेहकृतं कर्म भुञ्जते तदिह प्रजाः ।

इहैव यत् कृतं पुंसां तत् परत्र फलिष्यते ॥ १२८
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ॥ १२८॥
देवानामसुराणां च अमरत्वात्तपोबलात् ।
एकेनैव शरीरेण भुज्यते कर्मणां फलम् ॥ १२९॥
मानुषैर्न तथा देवि अन्तरं त्वेतदिष्यते* ॥ १३०

उमा—

भगवन् भगनेत्रघ्न मानुषाणां विचेष्टितम् ।
सर्वमात्मकृतं चेति श्रुतं मे भगवन्मतम् ॥ १३१
लोके ग्रहकृतं सर्वं मत्वा कर्म शुभाशुभम् ।
तदेव ग्रहनक्षत्रं प्रायशः पर्युपासते ॥ १३२
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि ॥ १३२॥

श्रीमहेश्वरः—

स्थाने संशयितं देवि शृणु तत्त्वविनिश्चयम् ॥ १३३
नक्षत्राणि ग्रहाश्चैव शुभाशुभनिवेदकाः ।
मानवानां महाभागे न तु कर्मकरास्स्वयम् ॥ १३४
प्रजानां तु हितार्थाय शुभाशुभविधिं प्रति ।
अनागतमतिक्रान्तं ज्योतिश्चक्रेण बोध्यते ॥ १३५
किंतु तत्र शुभं कर्म सुग्रहैस्तु निवेद्यते ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

दुष्कृतस्याशुभैरेव समवायो भवेदिति ॥ १३६

तस्मात्तु ग्रहवैषम्ये विषमं कुरुते जनः ।
ग्रहसाम्ये शुभं कुर्याज्ज्ञात्वाऽऽत्मानं तथा कृतम् ॥ १३७

केवलं ग्रहनक्षत्रं न करोति शुभाशुभम् ।
सर्वमात्मकृतं कर्म लोकवादो ग्रहा इति ॥ १३८

पृथग्ग्रहाः पृथक्कर्ता कर्त्रा स्वं भुज्यते फलम् ।
इति ते कथितं सर्वं विशङ्कां जहि शोभने ॥ १३९

उमा—

भगवन् विविधं कर्म कृत्वा जन्तुश्शुभाशुभम् ।
किं तयोः पूर्वकतरं भुङ्क्ते जन्मान्तरे पुनः ॥ १४०

एष मे संशयो देव तं मे [1]त्वं छेत्तुमर्हसि ॥ १४०॥

श्रीमहेश्वरः—

स्थाने संशयितं देवि तत्ते वक्ष्यामि तत्त्वतः ॥ १४१

अशुभं पूर्वमित्याहुर् अपरे शुभमित्यपि ।
मिथ्या तदुभयं प्रोक्तं केवलं तद्ब्रवीमि ते ॥ १४२

मानुषे तु पदे कर्म युगपद्भुज्यते सदा ।
यथाकृतं यथायोगम् उभयं भुज्यते क्रमात् ॥ १४३

भुञ्जानाश्चापि दृश्यन्ते क्रमशो भुवि मानवाः ।

1. क—शंसितुम ; ख-घ—छेत्तुं त्वम

ऋद्धिं हानिं सुखं दुःखं तत्सर्वमुभयं भयम् ॥ १४४

दुःखान्यनुभवन्त्याढ्या दरिद्राश्च सुखानि च ।
यौगपद्याद्धि भुञ्जाना दृश्यन्ते लोकसाक्षिकम् ॥ १४५

नरके स्वर्गलोके च न तथा संस्थितिः प्रिये ।
नित्यं दुःखं हि नरके स्वर्गे नित्यं सुखं तथा ॥ १४६

शुभाशुभानामाधिक्यं कर्मणां तत्र सेव्यते ।
निरन्तरं सुखं दुःखं स्वर्गे च नरके भवेत् ॥ १४७

तत्रापि सुमहद्भुक्त्वा पूर्वमल्पं पुनश्शुभे ।
एतत्ते सर्वमाख्यातं किं भूयश्श्रोतुमिच्छसि ॥ १४८

उमा—

भगवन् प्राणिनो लोके म्रियन्ते केन हेतुना ।
जाता जाता न तिष्ठन्ति तन्मे शंसितुमर्हसि ॥ १४९

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु सत्यं समाहिता ।
आत्मा कर्मक्षयादेहं यथा मुञ्चति तच्छृणु ॥ १५०

शरीरात्मसमाहारो जन्तुरित्यभिधीयते ।
तत्रात्मानं नित्यमाहुर् अनित्यं क्षेत्रमुच्यते ॥ १५१

एवं कालेन सङ्क्रान्तं शरीरं जर्झरीकृतम् ।

अकर्मयोग्यं [1]संशीर्णं त्यक्त्वा देही ततो व्रजेत् ॥ १५२

नित्यस्यानित्यसंत्यागाल्लोके तन्मरणं विदुः ।
कालं नातिक्रमेरन् हि सदेवासुरमानवाः ॥ १५३

यथाऽऽकाशे न तिष्ठेत द्रव्यं किञ्चिदचेतनम् ।
तथा धावति कालोऽयं क्षणं किञ्चिन्न तिष्ठति ॥ १५४

स पुनर्जायतेऽन्यत्र शरीरं नवमाविशन् ।
एवं लोकगतिर्नित्यम् आदिप्रभृति वर्तते ॥ १५५

उमा—

भगवन् प्राणिनो बाला दृश्यन्ते मरणं गताः ।
अतिवृद्धाश्च जीवन्तो दृश्यन्ते चिरजीविनः ॥ १५६

केवलं कालमरणं न प्रमाणं महेश्वर ।
तस्मान्मे संशयं ब्रूहि प्राणिनां जीवकारणम् ॥ १५७

श्रीमहेश्वरः—

शृणु तत् कारणं देवि निर्णयस्त्वेक एव सः ।
जीर्णत्वमात्रं कुरुते कालो देहं न पातयेत् ॥ १५८

जीर्णे [2]कर्माणि सङ्घातस् स्वयमेव विशीर्यते ।
पूर्वकर्मप्रमाणेन जीवितं मृत्युरेव वा ॥ १५९

---

1. क-ख—संकीर्णं त्यक्त्वा देवि ; घ—संकीर्णं
2. अ—तु कर्मसङ्घाते

यावत् पूर्वकृतं कर्म तावज्जीवति मानवः ।
तत्र कर्मवशाद्बाला म्रियन्ते कालसङ्क्षयात् ॥ १६०

चिरं जीवन्ति वृद्धाश्च तथा कर्मप्रमाणतः ।
इति ते कथितं देवि निर्विशङ्का भव प्रिये ॥ १६१

उमा—

भगवन् केन वृत्तेन भवन्ति चिरजीविनः ।
अल्पायुषो नराः केन तन्मे शंसितुमर्हसि ॥ १६२

श्रीमहेश्वरः—

शृणु तत् सर्वमखिलं गुह्यं पथ्यतरं नृणाम् ।
येन वृत्तेन सम्पन्ना भवन्ति चिरजीविनः ॥ १६३

अहिंसा सत्यवचनम् अक्रोधः क्षान्तिरार्जवम् ।
गुरूणां नित्यशुश्रूषा वृद्धानामपि पूजनम् ॥ १६४

[1]शौचादकार्यसन्त्यागस् सदा पथ्यस्य भोजनम् ।
एवमादिगुणं वृत्तं नराणां दीर्घजीविनाम् ॥ १६५

तपसा ब्रह्मचर्येण रसायननिषेवणात् ।
उदग्रसत्त्वा बलिनो भवन्ति चिरजीविनः ॥ १६६

स्वर्गे वा मानुषे वाऽपि चिरं तिष्ठन्ति धार्मिकाः ॥ १६६॥

अपरे पापकर्माणः प्रायशोऽनृतवादिनः ।

1. ख—शौचं चाकार्यसंत्यागः

हिंसाप्रिया गुरुद्विष्टा निष्क्रियाश्शौचवर्जिताः ॥ १६७॥
नास्तिका घोरकर्माणस् सततं मांसपानपाः ।
पापाचारा गुरुद्विष्टाः कोपनाः कलहप्रियाः ॥ १६८॥
एवमेवाशुभाचारास् तिष्ठन्ति निरये चिरम् ।
तिर्यग्योनौ तथाऽत्यन्तम् अल्पास्तिष्ठन्ति मानवाः ॥ १६९॥
तस्मादल्पायुषो मर्त्यास् तादृशास्सम्भवन्ति ते ॥ १७०
अगम्यदेशगमनाद् अपथ्यानां च भोजनात् ।
आयुःक्षयो भवेन्नृणाम् आयुःक्षयकरा हि ते ॥ १७१
भवन्त्यल्पायुषस्तैस्तैर् अन्यथा चिरजीविनः ।
एतत् ते कथितं सर्वं भूयश्श्रोतुं किमिच्छसि* ॥ १७२

उमा—

देवदेव महादेव श्रुतं मे भगवन्निदम् ।
आत्मनो जातिसम्बन्धं ब्रूहि स्त्रीपुरुषान्तरे ॥ १७३
स्त्रीप्राणः पुरुषप्राण एकस्स पृथगेव वा ।
एष मे संशयो देव तं मे [1]छेत्तुं त्वमर्हसि ॥ १७४

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-घ—शंसितु

स्त्रीत्वं पुंस्त्वमिति प्राणे स्थितिर्नास्ति शुभेक्षणे ॥ १७५

निर्विकारस्सदैवात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि ।
कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते ॥ १७६

कृत्वा तु पौरुषं कर्म स्त्री पुमानपि जायते ।
स्त्रीभावयुक्पुमान् कृत्वा कर्मणा प्रमदा भवेत् ॥ १७७

उमा—

भगवन् सर्वलोकेश कर्मात्मा न करोति चेत् ।
कोऽन्यः कर्मकरो देहे तन्मे त्वं वक्तुमर्हसि ॥ १७८

श्रीमहेश्वरः—

शृणु भामिनि कर्तारम् आत्मा हि न च कर्मकृत् ।
प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यशः ॥ १७९

शरीरं प्राणिनां लोके यथा पित्तकफानिलैः ।
व्याप्तमेभिस्त्रिभिर्दोषैस् तथा व्याप्तं त्रिभिर्गुणैः ॥ १८०

सत्त्वं रजस्तमश्चैव गुणास्त्वेते शरीरिणः ।
प्रकाशात्मकमेतेषां सत्त्वं सततमिष्यते ॥ १८१

रजो दुःखात्मकं तत्र तमो मोहात्मकं स्मृतम् ।
त्रिभिरेतैर्गुणैर्युक्तं लोके कर्म प्रवर्तते ॥ १८२

सत्यं प्राणिदया शौचं श्रेयः प्रीतिः क्षमा दमः ।
एवमादि तथाऽन्यच्च कर्म सात्त्विकमुच्यते ॥ १८३

दाक्ष्यं कर्मपरत्वं च लोभो मोहो विधिं प्रति ।
कलत्रसङ्गो माधुर्यं नित्यमैश्वर्यलुब्धता ॥ १८४

रजसश्चोद्भवं चैतत् कर्म नानाविधं सदा ॥ १८४॥

अनृतं चैव पारुष्यं धृतिर्विद्वेषिता भृशम् ।
हिंसाऽसत्यं च नास्तिक्यं निद्रालस्यभयानि च ॥ १८५॥

तमसश्चोद्भवं चैतत् कर्म पापयुतं तथा ॥ १८६

तस्माद्गुणमयस्सर्वः कार्यारम्भश्शुभाशुभः ।
तस्मादात्मानमव्यग्रं विद्ध्यकर्तारमव्ययम् ॥ १८७

सात्त्विकाः पुण्यलोकेषु राजसा मानुषे पदे ।
तिर्यग्योनौ च नरके तिष्ठेयुस्तामसा नराः ॥ १८८

उमा—

किमर्थमात्मा भिन्नेऽस्मिन् देहे शस्त्रेण वा हते ।
स्वयं प्रयास्यति तदा तन्मे शंसितुमर्हसि ॥ १८९

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
एत [1]न्नैर्मापिकैश्चापि मुह्यन्ते सूक्ष्मबुद्धिभिः ॥ १९०

कर्मक्षये तु सम्प्राप्ते प्राणिनां जन्मधारिणाम् ।
उपद्रवो भवेद्देहे येन केनापि हेतुना ॥ १९१

1. घ—न्नैर्मायिकैश्चापि

तन्निमित्तं शरीरी तु शरीरं प्राप्य सङ्क्षयम् ।
अपयाति परित्यज्य ततः कर्मवशेन सः ॥ १९२

[1]देहः क्षयति नैवात्मा वेदनाभिर्न चाल्यते ।
तिष्ठेत् कर्मफलं यावद् व्रजेत् कर्मक्षये पुनः ॥ १९३

आदिप्रभृति लोकेऽस्मिन्नेवमात्मगतिस्स्मृता ।
एतत्ते कथितं देवि किं भूयश्श्रोतुमिच्छसि ॥ १९४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
[ अस्मिन्नध्याये १९४ श्लोकाः ]

---

1. घ—देहक्षयेऽपि

## ॥ षड्विंशत्यधिकशततमोऽध्यायः ॥

ईश्वरेणोमां प्रति प्राणिनामुद्भिदादिभेदेन चातुर्विध्यादिनिरूपणम् ॥१॥ तथा शास्त्रजन्यज्ञानस्य श्रेयस्साधनत्वाद्युक्तिः ॥ २ ॥

उमा—

भगवन् देवदेवेश कर्मणैव शुभाशुभम् ।
यथायोगं फलं जन्तुः प्राप्नोतीति विनिश्चयः ॥ १

परेषां विप्रियं कुर्वन् यथा सम्प्राप्नुयाच्छुभम् ।
यद्येतदस्मिंश्चेद्देहे तन्मे शंसितुमर्हसि ॥ २

श्रीमहेश्वरः—

तदप्यस्ति महाभागे अभिसन्धिबलान्नृणाम् ।
हितार्थं दुःखमन्येषां कृत्वा सुखमवाप्नुयात् ॥ ३

[1]दण्डयन् भर्त्सयन् राजा प्रजाः पुण्यमवाप्नुयात् ।
गुरुस्सन्तर्जयन् शिष्यान् भर्ता भृत्यजनान् स्वकान् ॥ ४
उन्मार्गप्रतिपन्नांश्च शास्ता धर्मफलं लभेत् ॥ ४॥

चिकित्सकश्च दुःखानि जनयन् हितमाप्नुयात् ।
यज्ञार्थं पशुहिंसां च कुर्वन्नपि न लिप्यते ॥ ५॥

1. अ—इदमर्धं नास्ति

एवमन्ये सुमनसो हिंसकास्स्वर्गमाप्नुयुः ॥ ६

एकस्मिन् निहते भद्रे बह्वस्सुखमाप्नुयुः ।
तस्मिन् हते भवेद्धर्मः कुत एव तु पातकम् ॥ ७

अभिसन्धेरजिह्मत्वाच् छुद्धे धर्मस्य गौरवात् ।
एतत् कृत्वा तु पापेभ्यो न दोषं प्राप्नुयुः क्वचित् ॥ ८

उमा—

चतुर्विधानां जन्तूनां कथं ज्ञानमिह स्मृतम् ।
कृत्रिमं तत्स्वभावं वा तन्मे शंसितुमर्हसि ॥ ९

श्रीमहेश्वरः—

स्थावरं जङ्गमं चेति जगद्द्विविधमुच्यते ।
चतस्रो योनयस्तत्र प्रजानां क्रमशो यथा ॥ १०

तेषामुद्भिदजा वृक्षा लतावल्ल्यश्च वीरुधः ।
दंशयूकादयश्चान्ये स्वेदजाः क्रिमिजातयः ॥ ११

पक्षिणश्छिद्रकर्णाश्च प्राणिनस्त्वण्डजा मताः ।
मृगव्यालमनुष्यांश्च विद्धि तेषां जरायुजान् ॥ १२

एवं चतुर्विधां जातिम् आत्मा [1]संसृत्य तिष्ठति ॥ १२॥

स्पर्शेनैकेन्द्रियेणात्मा तिष्ठत्युद्भिदजेषु वै ।
शरीरस्पर्शरूपाभ्यां स्वेदजेष्वपि तिष्ठति ॥ १३॥

1. ख—संश्रित्य

पञ्चभिश्चेन्द्रियद्वारैर् जीवन्त्यण्डजरायुजाः ॥ १४

तथा भूम्यम्बुसंयोगाद् भवन्त्युद्भिदजाः प्रिये ।
शीतोष्णयोस्तु संयोगाज् जायन्ते स्वेदजाः प्रिये ॥ १५

अण्डजाश्चापि जायन्ते संयोगात् क्लेदबीजयोः ।
शुक्लशोणितसंयोगात् सम्भवन्ति जरायुजाः ॥ १६
जरायुजानां सर्वेषां मानुषं पदमुत्तमम् ॥ १६॥

अतःपरं तमोत्पत्तिं शृणु देवि समाहिता ।
द्विविधं हि तमो लोके शार्वरं देहजं तथा ॥ १७॥

ज्योतिर्भिश्च तमो लोके नाशं गच्छति शार्वरम् ।
देहजं तु तमो लोके तैस्समस्तैर्न शाम्यति ॥ १८॥

तमसस्तस्य नाशार्थं नोपायमधिजग्मिवान् ।
तपश्चचार विपुलं लोककर्ता पितामहः ॥ १९॥

चरतस्तु समुद्भूता वेदास्साङ्गास्सहोत्तराः ।
ताँल्लब्ध्वा मुमुदे ब्रह्मा लोकानां हितकाम्यया ॥ २०॥
देहजं तत् तमो घोरं [1]वेदैरेव विनाशितम् ॥ २१

कार्याकार्यमिदं चेति वाच्यावाच्यमिदं त्विति ।
यदि चेन्न भवेल्लोके श्रुतं चारित्रदैशिकम् ॥ २२
पशुभिर्निर्विशेषं तु चेष्टन्ते मानुषा अपि ॥ २२॥

1. अ-क—भूतैरेव

यज्ञादीनां समारम्भश् श्रुतेनैव विधीयते ।
यज्ञस्य फलयोगेन देवलोकस्समृद्ध्यते ॥ २३॥

प्रीतियुक्ताः पुनर्देवा मानुषाणां भवन्त्युत ।
एवं नित्यं प्रवर्धेते रोदसी च परस्परम् ॥ २४॥

लोक[1]सन्धारणं तस्माच् छ्रुतमित्यवधारय ।
ज्ञानाद्विशिष्टं जन्तूनां नास्ति लोकत्रयेऽपि च ॥ २५॥

सहजं तत् प्रधानं स्याद् अपरं कृत्रिमं श्रुतम् ।
उभयं यत्र सम्पन्नं भवेत्तत्र तु शोभनम् ॥ २६॥

सम्प्रगृह्य श्रुतं सर्वं कृतकृत्यो भवत्युत ।
उपर्युपरि मर्त्यानां देववत् सम्प्रकाशते ॥ २७॥

कामं क्रोधं भयं दर्पम् अज्ञानं चैव बुद्धिजम् ।
तच्छ्रुतं नुदति क्षिप्रं यथा वायुर्वलाहकान् ॥ २८॥

अल्पमात्रं कृतो धर्मो भवेज्ज्ञानवता महान् ।
महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत् ॥ २९॥

परावरज्ञो भूतानां ज्ञानवांस्तत्त्वविद्भवेत् ।
एवं शुभफलं सर्वं कथितं ते शुभेक्षणे ॥ ३०॥

उमा—

भगवन् मानुषाः केचिज् जातिस्मरणसंयुताः ।

1 क-घ—सन्तारणं

किमर्थमभिजायन्ते जानन्तः पौर्वदैहिकम् ॥ ३१॥

एतन्मे तत्त्वतो देव मानुषेषु वदस्व भो ॥ ३२

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ॥ ३२॥

ये मृतास्सहसा मर्त्या जायन्ते सहसा पुनः ।
तेषां पौराणिकोऽभ्यासः कञ्चित् कालं हि तिष्ठति ॥ ३३॥

तस्माज्जातिस्मरा लोके जायन्ते बोधसंयुताः ।
तेषां विवर्धतां संज्ञा स्वप्नवत् सा प्रणश्यति ॥ ३४॥

परलोकस्य चास्तित्वे [1]मूढानां कारणं त्विदम् ॥ ३५

उमा—

भगवन् मानुषाः केचिन्मृता भूत्वाऽपि सम्प्रति ।
निवर्तमाना दृश्यन्ते देहेष्वेव पुनर्नराः ॥ ३६

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि कारणं शृणु शोभने ॥ ३६॥

प्राणैर्वियुज्यमानानां बहुत्वात् प्राणिनां क्षये ।
तथैव नामसामान्याद् यमदूता नृणां प्रति ॥ ३७॥

वहन्ति ते क्वचिन्मोहाद् अन्यं मर्त्यं तु धार्मिकाः ।
निर्विकारं हि तत् सर्वं यमो वेद कृताकृतम् ॥ ३८॥

---

1. क-ख-घ—लोकानां+तत्

तस्मात् संयमनीं प्राप्य यमेनैकेन [1]मोक्षिताः ।
पुनरेव निवर्तन्ते शेषं भोक्तुं स्वकर्मणः ॥ ३९॥

स्वकर्मण्यसमाप्ते तु निवर्तन्ते हि मानवाः ॥ ४०

उमा—

भगवन् सुप्तमात्रेण [2]प्राणिनां स्वप्नदर्शनम् ।
किं तत् स्वभावमन्यद्वा तन्मे शंसितुमर्हसि ॥ ४१

श्रीमहेश्वरः—

सुप्तानां तु मनश्चेष्टा स्वप्न इत्यभिधीयते ।
अनागतमतिक्रान्तं पश्यते सञ्चरन् मनः ॥ ४२

[3]निमित्तं च भवेत्तस्मात् प्राणिनां स्वप्नदर्शनम् ।
एतत्ते कथितं देवि भूयश्श्रोतुं किमिच्छसि * ॥ ४३

उमा—

भगवन् सर्व[4]भूतेश लोके कर्मक्रियापथे ।
दैवात् प्रवर्तते सर्वम् इति केचिद्व्यवस्थिताः ॥ ४४

अपरे चेष्टया चेति दृष्ट्वा प्रत्यक्षतः क्रियाम् ।
पक्षभेदे द्विधा चास्मिन् संशयस्थं मनो मम ॥ ४५

1. ख—तोषिताः 2. मर्त्यानां स्व
3. अ—इदमर्धं नास्ति
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
4. क—लोकेश

तत्त्वं वद महादेव श्रोतुं कौतूहलं हि मे ॥ ४५॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ।
तदेवं कुरुते कर्म [1]लोके देवि शुभाशुभम् ॥ ४६॥

लक्ष्यते द्विविधं कर्म मानुषेष्वेव तच्छृणु ।
पुराकृतं तयोरेकम् ऐहिकं त्वितरत्तथा ॥ ४७॥

अदृष्टपूर्वं यत् कर्म तद्दैवमिति लक्ष्यते ।
विहीनं दृष्टकरणं तन्मानुषमिति स्मृतम् ॥ ४८॥

मानुषं तु क्रियामात्रं दैवात् सम्भवते फलम् ।
एवं तदुभयं कर्म मानुषं विद्धि तच्छृणु ॥ ४९॥

लौकिकं तु प्रवक्ष्यामि दैवमानुषनिर्मितम् ।
कृषौ तु दृश्यते कर्म कर्षणं वपनं तथा ॥ ५०॥

रोपणं चैव लवनं यच्चान्यत् पौरुषं स्मृतम् ।
दैवादसिद्धिश्च भवेद् दुष्कृतं चास्ति पौरुषे ॥ ५१॥

सुयत्ना[2]ल्लभ्यते कीर्तिर् दुर्यत्नादयशस्तथा ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ॥ ५२॥

1. ख—इतः षट् पादा न सन्ति

2. क-ख-घ—लभते कीर्तिं

उमा—

भगवन् सर्वलोकेश सुरासुरनमस्कृत ।
कथमात्मा सदा गर्भं संविशेत् कर्मकारणात् ॥ ५३॥
तन्मे वद महादेव तद्धि गुह्यं परं मतम् ॥ ५४

श्रीमहेश्वरः—

शृणु भामिनि तत् सर्वं गुह्यानां परमं प्रिये ।
देवगुह्यादपि परम् आत्मगुह्यमिति स्मृतम् ॥ ५५

देवासुरास्तन्न विदुर् आत्मनो हि [1]गतागतम् ।
अदृश्यो हि सदैवात्मा शैघ्र्यात् सौक्ष्म्यान्निराश्रयात् ॥ ५६

अतिमायेति मायानाम् आत्ममाया सदेष्यते ।
सोऽयं चतुर्विधां जातिं संविशत्यात्ममायया ॥ ५७
मैथुनं शोणितं बीजं दैवमेवात्र कारणम् ॥ ५७॥

बीजशोणितसंयोगो यदा सम्भवते शुभे ।
तदाऽऽत्मा विशते गर्भम् एवमण्डजरायुजे ॥ ५८॥
एवं संयोगकाले तु आत्मा गर्भत्वमेयिवान् ॥ ५९

कलिलाज्जायते पिण्डं पिण्डात् पेश्यर्बुदं भवेत् ।
व्यक्तिभावगतं चैव कर्म त्वाश्रयते क्रमात् ॥ ६०

1. ख—हिताहितम्

एवं विवर्धमानेन [1]कर्मणाऽऽत्मा स वर्धते ।
एवमात्मगतं विद्धि यन्मां पृच्छसि सुप्रभे ॥ ६१
रोपणं चैव लवनं यच्चान्यत् पौरुषं स्मृतम् ॥ ६१॥
काले [2]वृष्टिस्सुवापं च प्ररोहः पङ्क्तिरेव च ।
एवमादि तु यच्चान्यत् तद्दैवतमिति स्मृतम् ॥ ६२॥
पञ्चभूतस्थितिश्चैव ज्योतिषामयनं तथा ।
अबुद्धिगम्यं यन्मर्त्यैर् हेतुभिर्वा न विद्यते ॥ ६३॥
तादृशं कारणं दैवं शुभं वा यदि वेतरत् ।
यादृशं चात्मना शक्यं तत् पौरुषमिति स्मृतम् ॥ ६४॥
केवलं फलनिष्पत्तिर् एकेन तु न शक्यते ।
पौरुषेणैव दैवेन युगपद्ग्रथितं प्रिये ॥ ६५॥
तयोस्समाहितं कर्म शीतोष्णं युगपत्तथा ।
पौरुषं तु तयोः पूर्वम् आरब्धव्यं विजानता ॥ ६६॥
आत्मना तु न शक्यं हि तथा कीर्तिमवाप्नुयात् ॥ ६७
खननान्मथनाल्लोके जलाग्निप्रापणं तथा ।
तथा पुरुषकारे तु दैवसम्पत् समाहिता ॥ ६८
नरस्याकुर्वतः कर्म दैवसम्पन्न लभ्यते ।

---

1. अ-क-ग-घ—कर्मात्मा सह वर्धते

2. क-घ—वृत्तिः

तस्मात् सर्वसमारम्भो दैवमानुषनिर्मितः ॥ ६९

असुरा राक्षसाश्चैव मन्यन्ते लोकनाशनाः ।
पश्यन्ते न च ते पापाः केवलं मांसभक्षणाः ॥ ७०

प्रच्छादितं हि तत् सर्वं गूढमाया हि देवताः ।
तदहं ते प्रवक्ष्यामि देवि गुह्यं पुरातनम् ॥ ७१

आदिकाले नरास्सर्वे कृत्वा कर्म शुभाशुभम् ।
भुञ्जते पश्यमानास्ते वृत्तान्तं लोकयोर्द्वयोः ॥ ७२

यथैवात्मकृतं विद्युर् देशान्तरगता नराः ।
विद्युस्तथैवान्तकाले सुकृतं पौर्वदैहिकम् ॥ ७३

एवं व्यवस्थिते लोके सर्वे धर्मरता भवन् ।
अचिरेणैव कालेन स्वर्गस्सम्पूरितस्तदा ॥ ७४

देवानामपि सम्बाधं दृष्ट्वा ब्रह्माऽप्यचिन्तयत् ।
सञ्चरन्ते कथं स्वर्गं मानुषाः प्रविशन्ति हि ॥ ७५

इत्येवमनुचिन्त्यैव मानुषान् सममोहयत् ।
तदाप्रभृति ते मर्त्या न विदुस्ते पुराकृतम् ॥ ७६

कामक्रोधौ तु तत्काले मानुषेष्ववपातयत् ।
ताभ्यामभिहता मर्त्यास् स्वर्गलोकं न पेदिरे ॥ ७७

पुराकृतस्याविज्ञानात् कामक्रोधाभिपीडिताः ।

नैतदस्तीति मन्वाना विकारांश्चक्रिरे पुनः ॥ ७८

अकार्यादिमहादोषान् आहरन्त्यात्मकारणात् ।
विस्मृत्य धर्मकार्याणि परलोकभयं तथा ॥ ७९

एवं व्यवस्थिते लोके कश्मलं समपद्यत ।
लोकानां चैव देवानां क्षयायैव तथा प्रिये ॥ ८०

नरकाः पूरिताश्चासन् प्राणिभिः पापकारिभिः ॥ ८०॥

पुनरेव तु तान् दृष्ट्वा लोककर्ता पितामहः ।
अचिन्तयत् तमेवार्थं लोकानां हितकारणात् ॥ ८१॥

समत्वेन कथं लोके वर्तेतेति मुहुर्मुहुः ॥ ८२

चिन्तयित्वा तदा ब्रह्मा ज्ञानेन तपसा प्रिये ।
अकरोज्ज्ञानदृश्यं तत् परलोकं न चक्षुषा ॥ ८३

उमा—

भगवन् मृतमात्रस्तु योऽयं जात इति स्मृतः ।
तथैव दृश्यते जातस् तत्रात्मा तु कथं भवेत् ॥ ८४

गर्भादावेव संविष्ट आत्मा तु भगवन् मम ।
एष मे संशयो देव तन्मे छेत्तुं त्वमर्हसि ॥ ८५

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता ॥ ८५॥

अन्यो गर्भगतो भूत्वा तत्रैव निधनं गतः ।

पुनरन्यच्छरीरं तत् प्रविश्य भुवि जायते ॥ ८६॥

तत्त्वविन्नैव सर्वस्तु दैवयोगस्तु सम्भवेत् ॥ ८७

सूतिकाया हितार्थं च मोहनार्थं च देहिनाम् ।
समकर्मविधानत्वाद् इत्येवं विद्धि शोभने ॥ ८८

काङ्क्षमाणास्तु नरकं भुक्त्वा केचित् प्रयान्ति हि ।
मायासंयामिका नाम यज्जन्ममरणान्तरे ॥ ८९

इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि ॥ ८९॥

उमा—

भगवन् सर्वलोकेश लोकनाथ वृषध्वज ।
नास्त्यात्मा कर्मभोक्तेति मृतो जन्तुर्न जायते ॥ ९०॥

स्वभावाज्जायते सर्वं यथा वृक्षफलं तथा ।
यथोर्मयस्सम्भवन्ति तथैव जगदाकृतिः ॥ ९१॥

तपोदानानि यत् कर्म तत्र तद्दृश्यते वृथा ।
नास्ति पौनर्भवं जन्म इति केचिद्व्यवस्थिताः ॥ ९२॥

परोक्षवचनं श्रुत्वा न प्रत्यक्षस्य दर्शनात् ।
तत् सर्वं नास्ति नास्तीति संशयस्थास्तथा परे ॥ ९३॥

पक्षभेदान्तरे चास्मिस् तत्त्वं मे वक्तुमर्हसि ।
उक्तं भगवता यत्तु तत्तु लोकस्य संस्थितिः ॥ ९४॥

नारदः—

प्रश्नमेतत्तु पृच्छन्त्या रुद्राण्या [1]परिषत्तदा ।
कौतूहलयुता श्रोतुं [2]समाहितमनाऽभवत् ॥ ९५॥

श्रीमहेश्वरः—

नैतदस्ति महाभागे यद्वदन्तीह नास्तिकाः ।
एतदेवाभिशस्तानां श्रुतविद्वेषिणां मतम् ॥ ९६॥
सर्वमर्थं श्रुतं दृष्टं यत् प्रागुक्तं मया तव ।
तदाप्रभृति मर्त्यानां श्रुतमाश्रित्य पण्डिताः ॥ ९७॥
कामान् सञ्छिद्य परिघान् धृत्या वै परमासनाः ।
अभियान्त्येव ते स्वर्गं पश्यन्तः कर्मणः फलम् ॥ ९८॥
एवं श्रद्धाभवं लोके परतस्सुमहत् फलम् ।
बुद्धिश्श्रद्धा च विनयः कारणानि हितैषिणाम् ॥ ९९॥
तस्मात् स्वर्गाभिगन्तारः कतिचित्त्वभवन् नराः ।
अन्ये करणहीनत्वान्नास्तिक्यं भावमाश्रिताः ॥ १००॥
श्रुतविद्वेषिणो मूर्खा नास्तिका दृढनिश्चयाः ।
निष्क्रियास्तु निरन्नादाः पतन्त्येवाधमां गतिम् ॥ १०१॥
नास्त्यस्तीति पुनर्जन्म कवयोऽप्यत्र मोहिताः ।
नाधिगच्छन्ति तन्नित्यं हेतुवादशतैरपि ॥ १०२॥

1. ख—शङ्करोऽवदत्
2. ख—सा समाहितमानसा

एषा ब्रह्मकृता माया दुर्विज्ञेया सुरासुरैः ।
किम्पुनर्मानवैर्लोके ज्ञातुकामैः कुबुद्धिभिः ॥ १०३॥
केवलं श्रद्धया देवि श्रुतिमात्रानिविष्टया ।
ततोऽस्तीत्येव मन्तव्यं तथा हितमवाप्नुयात् ॥ १०४॥
दैवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः ।
बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ॥ १०५॥
एतत्ते कथितं देवि ऋषिगुह्यं प्रजाहितम् ॥ १०६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
[ अस्मिन्नध्याये १०६ श्लोकाः ]

## ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥

महादेवेन देवीं प्रति यमनगरतन्मार्गादिप्रतिपादनपूर्वकं पापिनां यातनानुभवप्रकारादिप्रतिपादनम् ॥ १ ॥ तथा रौरवादिनरकविभजनपूर्वकं प्राणिनां दुष्कृततारतम्येन तेषु यातनानुभवप्रकारकथनम् ॥२॥ तथा यातनानुभवानन्तरं कर्मशेषफलतया नानानीचयोनिप्राप्त्यादिकथनम् ॥ ३ ॥

उमा—

भगवन् सर्वलोकेश त्रिपुरार्दन शङ्कर ।
कीदृशा यमदण्डास्ते कीदृशाः परिचारकाः ॥ १

कथं मृतास्ते गच्छन्ति प्राणिनो यम[1]सादनम् ।
कीदृशं भवनं तस्य कथं दण्डयति प्रजाः ॥ २

एतत् सर्वं महादेव श्रोतुमिच्छाम्यहं प्रभो ॥ २॥

श्रीमहेश्वरः—

शृणु कल्याणि तत् सर्वं यत्ते देवि मनःप्रियम् ।
दक्षिणस्यां दिशि शुभे यमस्य सदनं महत् ॥ ३॥

विचित्रं रमणीयं च नानाभावसमन्वितम् ।
पितृभिः प्रेतसङ्घैश्च यमदूतैश्च सन्ततम् ॥ ४॥

प्राणिसङ्घैश्च बहुभिः कर्मवश्यैश्च पूरितम् ।
तत्रास्ते दण्डयन् नित्यं यमो लोकहिते रतः ॥ ५॥

1. क-ख—शासनम्

मायया सततं वेत्ति प्राणिनां यच्छुभाशुभम् ।
मायया संहरंस्तत्र प्राणिसङ्घान् यतस्ततः ॥ ६॥

तस्य मायामयाः पाशा न वेद्यन्ते सुरासुरैः ।
को हि मानुषमात्रस्तु [1]देवस्य चरितं महत् ॥ ७॥

एवं संवसतस्तस्य यमस्य परिचारकाः ।
गृहीत्वा सन्नयन्त्येव प्राणिनः क्षीणकर्मणः ॥ ८॥

येन केनापदेशेन त्वपदेशस्तदुद्भवः ॥ ९

कर्मणा प्राणिनो लोके उत्तमाधममध्यमाः ।
[2]यथार्हं तान् समादाय नयन्ति यमसादनम् ॥ १०

धार्मिकानुत्तमान् विद्धि स्वर्गिणस्ते यथाऽमराः ।
[3]नृषु जन्म लभन्ते ये कर्मणा मध्यमास्स्मृताः ॥ ११

तिर्यङ्नरकगन्तारो ह्यधमास्ते नराधमाः ॥ ११॥

पन्थानस्त्रिविधा दृष्टास् सर्वेषां गतजीविनाम् ।
रमणीयं निराबाधं दुर्दर्शमिति नामतः ॥ १२॥

रमणीयं तु यन्मार्गं पताकाध्वजसङ्कुलम् ।
धूपितं सिक्तसम्मृष्टं पुष्पमालाभिसङ्कुलम् ॥ १३॥

मनोहरं सुखस्पर्शं गच्छतामेव तद्भवेत् ।

---

1. ख—इतः षट् पादा न सन्ति  2. क—अर्धचतुष्टयं नास्ति
3. घ—विशु

निराबाधं यथालोकं सुप्रशस्तं कृतं भवेत् ॥ १४॥

तृतीयं यत्तु दुर्दर्शं दुर्गन्धि तमसा वृतम् ।
परुषं शर्कराकीर्णं श्वदंष्ट्राबहुलं भृशम् ॥ १५॥

क्रिमिकीटसमाकीर्णं भजतामतिदुर्गमम् ॥ १६

मार्गैरेवं त्रिभिर्नित्यम् उत्तमाधममध्यमान् ।
सन्नयन्ति यथा काले तन्मे शृणु शुचिस्मिते ॥ १७

उत्तमानन्तकाले तु यमदूतास्सुसंवृताः ।
नयन्ति सुखमादाय रमणीयपथेन वै ॥ १८

उमा—

भगवंस्तत्र चात्मानं त्यक्तदेहं [1]गतश्रियम् ।
अदृश्यं कथमादाय संनयन्ति यमान्तिकम् ॥ १९

श्रीमहेश्वरः—

शृणु भामिनि तत् सर्वं त्रिविधं देहकारणम् ।
कर्मवश्यं भोगवश्यं दुःखवश्यमिति प्रिये ॥ २०

मानुषं कर्मवश्यं स्याद् द्वितीयं भोगसाधनम् ।
तृतीयं यातनावश्यं शरीरं मायया कृतम् ॥ २१

यमलोके न चान्यत्र दृश्यते यातनायुतम् ॥ २१॥

शरीरैर्यातनावश्यैर् जीवानामुच्य भामिनि ।
नयन्ति यामिकास्तत्र प्राणिनो मायया मृतान् ॥ २२॥

1. क-घ—श्रियाश्रयम्; ख—निराश्रयम्

मध्यमान् योधवेषेण मध्यमेन पथा तथा ॥ २३

चण्डालवेषास्त्वधमान् गृहीत्वा [1]भर्त्सतर्जनैः ।

आकर्षन्तस्तथा पाशैर् दुर्दर्शेन नयन्ति तान् ॥ २४

त्रिविधानेवमादाय नयन्ति यमसादनम् ॥ २४॥

धर्मासनगतं दक्षं भ्राजमानं स्वतेजसा ।

लोकपालं सभाध्यक्षं तथैव परिषद्गतम् ॥ २५॥

दर्शयन्ति महाभागे [2]यामिकास्तं निवेद्य ते ॥ २६

पूजयन् दण्डयन् कांश्चित् तेषां शृण्वञ् शुभाशुभम् ।

व्यावृतो बहुसाहस्रैस् तत्रास्ते सततं यमः ॥ २७

गतानां तु यमस्तेषाम् उत्तमानभिपूजयेत् ।

अभिसङ्गृह्य विधिवत् पृष्ट्वा स्वागतकौशलम् ॥ २८

प्रस्तुत्य तत् कृतं तेषां लोकं सन्दिशते यमः ॥ २८॥

यमेनैवमनुज्ञाता यान्ति पश्चात् त्रिविष्टपम् ॥ २९

मध्यमानां यमस्तेषां श्रुत्वा कर्म यथातथम् ।

जायन्तां मानुषेष्वेव इति सन्दिशते च तान् ॥ ३०

अधमान् पाशसंयुक्तान् यमो नावेक्षते गतान् ।

यमस्य पुरुषा घोराश् चण्डालसमदर्शनाः ॥ ३१

यातनाः प्रापयन्त्येताँल्लोकपालस्य शासनात् ॥ ३१॥

---

1. ब—हस्त 2. घ—धार्मिकास्तान्

भिन्दन्तश्च तुदन्तश्च प्रकर्षन्तो यतस्ततः ।
क्रोशन्तः पातयन्त्येतान् मिथो गर्तेष्ववाङ्मुखान् ॥ ३२॥
[1]संयामिन्यशिलाश्चैषां पतन्ति शिरसि प्रिये ।
अयोमुखाः कङ्कवला भक्षयन्ति सुदारुणाः ॥ ३३॥
असिपत्रवने घोरे चारयन्ति तथा परान् ।
तीक्ष्णदंष्ट्रास्तथा श्वानः कांश्चित्तत्र ह्यदन्ति वै ॥ ३४॥
तत्र वैतरणी नाम नदी ग्राहसमाकुला ।
दुष्प्रवेशा च घोरा च मूत्रशोणितवाहिनी ॥ ३५॥
तस्यां सम्मज्जयन्त्येते तृषितान् पाययन्ति तान् ।
आरोपयन्ति वै कांश्चित् तत्र कण्टकशल्मलीम् ॥ ३६॥
यन्त्रचक्रेषु तिलवत् पीड्यन्ते तत्र केचन ।
अङ्गारेषु च दह्यन्ते तथा दुष्कृतकारिणः ॥ ३७॥
कुम्भीपाकेषु पच्यन्ते [2]पच्यन्ते सिकतासु वै ।
पाट्यन्ते तरुवच्छस्त्रैः पापिनः क्रकचादिभिः ॥ ३८॥
भिद्यन्ते भागशश्शूलैस् तुद्यन्ते सूक्ष्मसूचिभिः ॥ ३९
एवं त्वया कृतो दोषस् तदर्थं दण्डनं त्विति ।
वाचैवं घोषयन्ति स्म दण्डमानास्समन्ततः ॥ ४०

1. क-ख-ग—सङ्घाति
2. ख—भर्ज्यन्ते

एवं ते यातनां प्राप्य शरीरैर्यातनाशयैः ।
प्रसहन्तश्च तद्दुःखं स्मरन्तस्स्वापराधजम् ॥ ४१

क्रोशन्तश्च रुदन्तश्च न मुच्यन्ते कथञ्चन ।
स्मरन्तस्तत्र तप्यन्ते पापमात्मकृतं भृशम् ॥ ४२

एवं बहुविधा दण्डा भुज्यन्ते पापकारिभिः ।
यातनाभिश्च पच्यन्ते नरकेषु पुनः पुनः ॥ ४३

अपरे यातना भुक्त्वा मुच्यन्ते तत्र किल्बिषात् ॥ ४३॥

पापदोषक्षयकरा यातना संस्मृता नृणाम् ।
बहु तप्तं यथा लोहम् अमलं तत्तथा भवेत्* ॥ ४४॥

उमा—

भगवंस्ते कथं तत्र दण्ड्यन्ते नरकेषु वै ।
कति ते नरका घोराः कीदृशास्ते [1]महेश्वर ॥ ४५॥

श्रीमहेश्वरः—

शृणु भामिनि तत् सर्वं पञ्चैते नरकास्स्मृताः ।
भूमेरधस्ताद्विहिता घोरा दुष्कृतकर्मणाम् ॥ ४६॥

प्रथमं रौरवं नाम शतयोजनमायतम् ।
तावत्प्रमाणविस्तीर्णं तामसं पापपीडितम् ॥ ४७॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. ख—वद प्रभो

भृशं दुर्गन्धि परुषं क्रिमिभिर्दारुणैर्युतम् ।
अतिघोरमनिर्देश्यं प्रतिकूलं ततस्ततः ॥ ४८॥

ते चिरं तत्र तिष्ठन्ति न तत्र शयनासने ।
क्रिमिभिर्भक्ष्यमाणाश्च विष्ठागन्धसमायुताः ॥ ४९॥

एवं प्रमाणमुद्विग्ना यावत्तिष्ठन्ति तत्र ते ।
यातनाभ्यो दशगुणं नरके दुःखमिष्यते ॥ ५०॥

तत्र चात्यन्तिकं दुःखम् इष्यते च शुभेक्षणे ।
क्रोशन्तश्च रुदन्तश्च वेदनास्तत्र भुञ्जते ॥ ५१॥

भ्रमन्ति दुःखमोक्षार्थं ज्ञाता कश्चिन्न विद्यते ।
दुःखस्यान्तरमात्रं तु [1]ज्ञानं वा न च लभ्यते ॥ ५२॥

महारौरवसंज्ञं तु द्वितीयं नरकं प्रिये ।
तस्माद्द्विगुणितं विद्धि माने दुःखे च रौरवात् ॥ ५३॥

तृतीयं नरकं तत्र कण्टकावनसंज्ञितम् ।
[2]ततो द्विगुणितं तच्च पूर्वाभ्यां दुःखमानयोः ॥ ५४॥

महापातकसंयुक्ता घोरास्तस्मिन् विशन्ति हि ॥ ५५

अग्निकुण्डमिति ख्यातं चतुर्थं नरकं प्रिये ।
एतद्द्विगुणितं तस्माद् यथाऽनिष्टसुखं तथा ॥ ५६

1. ख—द्वारं
2. घ—ततोऽष्टद्विगुणं

ततो दुःखं हि सुमहद् अमानुषमिति स्मृतम् ।
[1]भुञ्जते तत्र तत्रैव दुःखं दुष्कृतकारिणः ॥ ५७

पञ्चकष्टमिति ख्यातं नरकं पञ्चमं प्रिये ।
तत्र दुःखमनिर्देश्यं महाघोरं यथातथम् ॥ ५८

पञ्चेन्द्रियैरसह्यत्वात् पञ्चकष्टमिति स्मृतम् ।
भुञ्जते तत्र तत्रैवं दुःखं दुष्कृतकारिणः ॥ ५९

अमानुषार्हजं दुःखं महाभूतैश्च भुज्यते ।
अतिघोरं चिरं कृत्वा महाभूतानि यान्ति तम् ॥ ६०

पञ्चकष्टेन हि समं नास्ति दुःखं तथा परम् ।
दुःखस्थानमिति प्राहुः पञ्चकष्टमिति प्रिये ॥ ६१

एवं त्वेतेषु तिष्ठन्ति प्राणिनो दुःखभागिनः ।
अन्ये च नरकास्सन्ति अवीचिप्रमुखाः प्रिये ॥ ६२

क्रोशन्तश्च रुदन्तश्च वेदनार्ता भृशातुराः ।
केचिद्भ्रमन्तश्चेष्टन्ते केचिद्धावन्ति चातुराः ॥ ६३

आधावन्तो निवार्यन्ते शूलहस्तैर्यतस्ततः ।
रुजार्दितास्तृषायुक्ताः प्राणिनः पापकारिणः ॥ ६४

यावत् पूर्वकृतं तावन्न मुच्यन्ते कथञ्चन ।
क्रिमिभिर्भक्ष्यमाणाश्च वेदनार्तास्तृषान्विताः ॥ ६५

1. अ—अर्धचतुष्टयं नास्ति

संस्मरन्तस्त्वकं पापं कृतमात्मापराधजम् ।
शोचन्तस्तत्र तिष्ठन्ति यावत् पापक्षयं प्रिये ॥ ६६
एवं भुक्त्वा तु नरकं मुच्यन्ते पापसङ्क्षयात् ॥ ६६॥

उमा—

भगवन् कतिकालं ते तिष्ठन्ति नरकेषु वै ।
[1]एतद्वेदितुमिच्छामि तन्मे ब्रूहि महेश्वर ॥ ६७॥

श्रीमहेश्वरः—

शतवर्षसहस्राणाम् आदिं कृत्वा हि जन्तवः ।
तिष्ठन्ति नरकावासाः प्रलयान्तमिति स्थितिः ॥ ६८॥

उमा—

भगवंस्तेषु के तत्र तिष्ठन्तीति वद प्रभो ॥ ६९

श्रीमहेश्वरः—

रौरवे शतसाहस्रं वर्षाणामिति संस्थितिः ।
मातुघ्नाः कृतघ्नाश्च तथैवानृतवादिनः ॥ ७०
द्वितीये द्विगुणं कालं पच्यन्ते तादृशा नराः ।
महापातकयुक्तास्तु तृतीये दुःखमाप्नुयुः ॥ ७१
एतावन्मानुषसहं परमन्येषु लक्ष्यते ॥ ७१॥
यक्षविद्याधराश्चैव काद्रवेयाश्च किन्नराः ।

1. क-ख-घ—इदमर्धं नास्ति

गन्धर्वा भूतसङ्घाश्च तेषां पापयुता भृशम् ॥ ७२॥

[1]चतुर्थे परिपच्यन्ते तादृशा नरकास्स्मृताः ।
चतुर्थे परितप्यन्ते यावद्युगविपर्ययः ॥ ७३॥

सहन्तस्तादृशं घोरं पञ्चकष्टे तु यादृशम् ।
तत्रास्य चिरदुःखस्य ह्यधोऽन्यान् विद्धि मानुषान् ॥ ७४॥

एवं ते नरकान् भुक्त्वा तत्र क्षपितकल्मषाः ।
नरकेभ्यो विमुक्ताश्च जायन्ते क्रिमिजातिषु ॥ ७५॥

उद्भेद्जेषु वा केचिद् अत्रापि क्षीणकल्मषाः ।
पुनरेव प्रजायन्ते मृगपक्षिषु शोभने ॥ ७६॥

मृगपक्षिषु तद्भुक्त्वा लभन्ते मानुषं पदम् ॥ ७७

उमा—

नानाजातिषु केनैव जायन्ते पापकारिणः ॥ ७७॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि [2]शोभने ।
सर्वदाऽऽत्मा कर्मवशो नानाजातिषु जायते ॥ ७८॥

यश्च मांसप्रियो नित्यं काकगृध्रान् स संस्पृशेत् ।
[3]सुरापस्सततं मर्त्यस् सूकरत्वं व्रजेद्ध्रुवम् ॥ ७९॥

1. क—इदमर्धं नास्ति
2. ख—भामिनि
3. अ—अर्धचतुष्टयं नास्ति

अभक्ष्यभक्षणो मर्त्यः काकजातिषु जायते ।
[1]आत्मघ्नो यो नरः कोपात् प्रेतजातिषु तिष्ठति ॥ ८०॥

पैशुन्यात् परिवादाच्च कुक्कुटत्वमवाप्नुयात् ।
नास्तिकश्चैव यो मूर्खो मृगजातिं स गच्छति ॥ ८१॥

हिंसाविहारस्तु नरः क्रिमिकीटेषु जायते ।
अतिमानयुतो नित्यं प्रेत्य गर्दभतां व्रजेत् ॥ ८२॥

अगम्यागमनाच्चैव परदारनिषेवणात् ।
मूषिकत्वं व्रजेन्मर्त्यो नास्ति तत्र विचारणा ॥ ८३॥

कृतघ्नो मित्रघाती च सृगालवृकजातिषु ।
कृतघ्नः पुत्रघाती च स्थावरेष्वथ तिष्ठति ॥ ८४॥

[2]एवमाद्यशुभं कृत्वा नरा निरयगामिनः ।
[3]तां तां योनिं प्रपद्यन्ते स्वकृतस्यैव कारणात् ॥ ८५॥

---

1. ख—अर्धचतुष्टयं नास्ति

2. ख—परोद्वेगकरो नित्यं व्यालजातिषु जायते।
आत्मघ्ना ये नराः कोपात् प्रेतजातिषु तिष्ठति ? ॥
पैशुन्यात् परिवादाच्च कुक्कुटत्वं समश्नुयात् ।
नास्तिकश्चैव यो मूर्खो मृगजातिं स गच्छति ॥
हिंसाविहारस्तु नरः क्रिमिकीटेषु जायते ।
[ अधिकः पाठः ]

3. ख—तांस्तान् गर्भान्

एवं जातिषु निर्दिष्टाः प्राणिनः पापकारिणः ।
कथञ्चित् पुनरुत्पद्य लभन्ते मानुषं पदम् ॥ ८६॥

वहुशश्चाग्निसङ्क्रान्तं लोहं शुचिमयं यथा ।
बहुदुःखाभिसन्तप्तस् तथाऽऽत्मा शोध्यते बलात् ॥ ८७॥

तस्मात् सुदुर्लभं चेति विद्धि जन्मसु मानुषम् ॥ ८८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
[ अस्मिन्नध्याये ८८ श्लोकाः ]

---

## ॥ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

परमेश्वरेण पार्वतीं प्रति शुभाशुभकर्मणां मानसिकत्वादिभेदेन त्रैविध्यकथनपूर्वकं तत्तत्फलनिरूपणम् ॥ १ ॥ तथा मद्योत्पत्तिकारणादिकथनपूर्वकं तत्पानजदोषादिप्रतिपादनम् ॥ २ ॥ सुकृतस्य त्रेधा विभजनेन तल्लक्षणादिकथनम् ॥ ३ ॥ मांसभक्षणाभक्षणयोर्दोषगुणकथनम् ॥ ४ ॥ गुरुप्रशंसनपूर्वकं तत्पूजादिफलकथनम् ॥ ५ ॥ तथा तीर्थस्नानोपवासादिफलकथनम् ॥ ६ ॥ दानस्य षाड्गुण्यप्रतिपादनपूर्वकं तत्फलकथनम् ॥ ७ ॥ अन्नस्वर्णगोभूकन्याविद्यादानानां महिमप्रतिपादनम् ॥ ८ ॥ तिलदानप्रकारतत्फलयोः कथनम् ॥ ९ ॥ तथा जलान्नादिनानादानफलकथनम् ॥ १० ॥ तथा सेतुकूपतटाकनिर्मापणादिधर्मफलकथनम् ॥ ११ ॥ यज्ञप्रशंसनम् ॥ १२ ॥ तथा देवानां पूजादिफलकथनम् ॥ १३ ॥ तथा देवानां मनुष्यचिन्तितविज्ञानसामर्थ्यकथनम् ॥ १४ ॥

---

उमा—

भगवन् देवदेवेश शूलपाणे वृषध्वज ।
श्रुतं मे परमं गुह्यं प्रसादात्ते वरप्रद ॥ १

श्रोतुं भूयोऽहमिच्छामि प्रजानां हितकारणात् ।
शुभाशुभमिति प्रोक्तं कर्म स्वं स्वं समासतः ॥ २

तन्मे विस्तरतो ब्रूहि शुभाशुभविधिं प्रति ।
अशुभं कीदृशं कर्म प्राणिनो यन्निपातयेत् ॥ ३

शुभं वाऽपि कथं देव प्रजानामूर्ध्वदं भवेत् ।
एतन्मे वद देवेश श्रोतुकामाऽस्मि कीर्तय ॥ ४

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि तत् सर्वं शृणु शोभने ।
सुकृतं दुष्कृतं चेति द्विविधं कर्मविस्तरम् ॥ ५
तयोर्यद्दुष्कृतं कर्म तच्च सञ्जायते त्रिधा ।
मनसा कर्मणा वाचा बुद्धिमोहसमुद्भवात् ॥ ६
मनःपूर्वं तु वा कर्म वर्तते वाङ्मयं ततः ।
जायते वै क्रियायोगम् अनु चेष्टाक्रमः प्रिये ॥ ७
अभिद्रोहोऽभ्यसूया च परार्थेषु च स्पृहा ।
शुभाशुभानां मर्त्यानां वर्तनं परिवारितम् ॥ ८
धर्मकार्ये यदाऽश्रद्धा पापकर्मणि हर्षणम् ।
एवमाद्यशुभं कर्म मनसा पापमुच्यते ॥ ९
अनृतं यच्च परुषम् [1]अबद्धं यच्च शङ्करि ।
असत्यं परिवादश्च पापमेतत्तु वाङ्मयम् ॥ १०
अगम्यागमनं चैव परदारनिषेवणम् ।
वधबन्धपरिक्लेशैः परप्राणोपतापनम् ॥ ११
चौर्यं परेषां द्रव्याणां हरणं नाशनं तथा ।

1. ख—अबद्धवचनं कटु

अभक्ष्यभक्षणं चैव व्यसनेष्वभिषङ्गता ॥ १२

दर्पात् स्तम्भाभिमानाच्च परेषामुपतापनम् ।
अकार्याणां च करणम् अशौचं पानसेवनम् ॥ १३

दौश्शील्यं पापसम्पर्के साहाय्यं पापकर्मणि ।
अधर्म्यमयशस्यं च कार्यं तस्य निषेवणम् ॥ १४

एवमाद्यशुभं चान्यच् छारीरं पापमुच्यते ॥ १४॥

मानसाद्वाङ्मयं पापं विशिष्टमिति लक्ष्यते ।
[1]वाङ्मयादपि वै पापाच् छारीरं गण्यते बहु ॥ १५॥

एवं पापयुतं कर्म त्रिविधं पातयेन्नरम् ।
[2]परोपतापजननम् अत्यन्तं पातकं स्मृतम् ॥ १६॥

त्रिविधं तत् कृतं पापं कर्तारं पापकं नयेत् ।
पातकं चापि यत् कर्म कर्मणा बुद्धिपूर्वकम् ॥ १७॥

सापदेशमवश्यं तु कर्तव्यमिति तत् कृतम् ।
कथञ्चित्तत् कृतमपि कर्ता तेन न लिप्यते ॥ १८॥

अवश्यं पापदेशेन प्रतिहन्येत कारणम् ॥ १९

---

1. अ-ख-घ—शत्रुमुद्यतशस्त्रं वा पूर्वं तेन हतोऽपि वा ।
[ अधिकः पाठः ]

2. क-ख-घ—परापकार

उमा—

भगवन् पापकं कर्म यथा कृत्वा न लिप्यते[1] ॥ १९॥

श्रीमहेश्वरः—

यो नरोऽनपराधी च स्वात्मप्राणस्य रक्षणात् ।
शत्रुमुद्यतशस्त्रं वा पूर्वं तेन हतोऽपि वा ॥ २०॥
प्रतिहन्यान्नरो हिंस्यान्न स पापेन लिप्यते ॥ २१

[2]चोरादधिकसन्त्रस्तस् तत्प्रतीकारचेष्टया ।
यः प्रजघ्नन्नरो हन्यान्न स पापेन लिप्यते ॥ २२

ग्रामार्थं भर्तृपिण्डार्थं दीनानुग्रहकारणात् ।
वधबन्धपरिक्लेशान् कुर्वन् पापात् प्रमुच्यते ॥ २३

दुर्भिक्षे चात्मवृत्त्यर्थम् एकायनगतस्तथा ।
अकार्यं वाऽप्यभक्ष्यं वा कृत्वा पापान्न लिप्यते ॥ २४

विधिरेष गृहस्थानां प्रायेणैवोपदिश्यते ।
अवाच्यं पापकार्यं वा देशकालवशेन तु ॥ २५

बुद्धिपूर्वं नरः कुर्वंस् तत्प्रयोजनमात्रया ।
किञ्चिदालिप्यते पापैर् अथवा न च लिप्यते ॥ २६

एवं देवि विजानीहि नास्ति तत्र विचारणा ॥ २६॥

---

1. ख—पापस्यावरणे वाऽपि तद्दोषश्च महेश्वरः । [ अधिकः पाठः ]

2. अ-क-घ—अर्धद्वयं नास्ति

उमा—

भगवन् पानदोषांश्च पेयापेयत्वकारणम् ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद महेश्वर ॥ २७॥

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि पानोत्पत्तिं शुचिस्मिते ॥ २८

पुरा सर्वेऽभवन् मर्त्या बुद्धिमन्तो नयानुगाः ।
शुचयश्च शुभाचारास् सर्वे चोन्मनसः प्रिये ॥ २९

एवंभूते तदा लोके प्रेष्यकृन्न परस्परम् ।
प्रेष्याभावान्मनुष्याणां कर्मारम्भो ननाश ह ॥ ३०

उभयोर्लोकयोर्नाशं दृष्ट्वा कर्मक्षयात् प्रभुः ।
यज्ञकर्म कथं लोके वर्तेतेति पितामहः ॥ ३१

आज्ञापयत् सुरां देवि मोहयस्वेति मानुषान् ।
तमसस्सारमुद्धृत्य पानं बुद्धिप्रणाशनम् ॥ ३२

न्यपातयन् मनुष्येषु पापदोषावहं प्रिये ॥ ३२॥

तदाप्रभृति तत्पानान्मुमुहुर्मानवा भुवि ।
कार्याकार्यमजानन्तो वाच्यावाच्यं गुणागुणम् ॥ ३३॥

केचिद्धसन्ति तत् पीत्वा श्रवदन्ति तथा परे ।
नृत्यन्ति मुदिताः केचिद् गायन्ति च शुभाशुभान् ॥ ३४॥

कलिं ते कुर्वतेऽभीष्टं प्रहरन्ति परस्परम् ।
क्वचिद्धावन्ति सहसा प्रस्खलन्ति पतन्ति च ॥ ३५॥

अयुक्तं बहु भाषन्ते यत्र क्वचन शोभने ।
नग्ना विक्षिप्य गात्राणि नष्टज्ञाना इवासते ॥ ३६॥

एवं बहुविधान् भावान् कुर्वन्ति भ्रान्तचेतनाः ।
ये पिबन्ति महामोहं पानं पापयुता नराः ॥ ३७॥

धृतिं लज्जां च बुद्धिं च पानं पीतं प्रणाशयेत् ।
तस्मान्नरास्सम्भवन्ति निर्लज्जा निरपत्रपाः ॥ ३८॥

बुद्धिसत्त्वैः परिक्षीणास् तेजोहीना मलान्विताः ।
पीत्वा पीत्वा तृषायुक्ताः पानपास्सम्भवन्ति च ॥ ३९॥

पानकामाः पानकथाः पानकालाभिकाङ्क्षिणः ।
पानार्थं [1]वश्यकामास्ते सम्भवन्ति नराधमाः ॥ ४०॥

पानकामास्तृषायोगाद् बुद्धिसत्त्वपरिक्षयात् ।
पानदानं प्रेष्यकाराः पानपास्सहसाऽभवन् ॥ ४१॥

तदाप्रभृति वै लोके दीनैः पानवशैर्नरैः ।
कारयन्ति च कर्माणि बुद्धिमन्तस्तु पानदाः ॥ ४२॥

कारुत्वमथ दासत्वं प्रेष्यतामेत्य पानपाः ।
सर्वकर्मकराश्चासन् पशुवद्रज्जु[2]बन्धिताः ॥ ४३॥

1. ख—कर्मवश्यास्ते    2. ख—पीडिताः

पानपस्तु [1]सुरां पीत्वा तदा बुद्धिप्रणाशनात् ।
कार्याकार्यस्य चाज्ञानाद् यथेष्टकरणात् स्वयम् ॥ ४४॥

विदुषामविधेयत्वात् पापमेवाभिपद्यते ॥ ४५

परिभूतो भवेल्लोके मद्यपो मित्रभेदकः ।
सर्वकालमशुद्धश्च सर्वभक्षस्तथा भवेत् ॥ ४६

विनष्टो ज्ञानविड्ब्यस् सततं [2]कलिभावगः ।
परुषं कटुकं घोरं वाक्यं वदति सर्वशः ॥ ४७

गुरूनतिवदेन्मत्तः परदारान् प्रधर्षयेत् ।
संविदं कुरुते शौण्डैर् न शृणोति हितं क्वचित् ॥ ४८

एवं बहुविधा दोषाः पानपे सन्ति शोभने ।
केवलं नरकं यान्ति नास्ति तत्र विचारणा ॥ ४९

तस्मात्तद्वर्जितं सद्भिः पानमात्महितैषिभिः ॥ ४९॥

यदि पानं [3]न वर्जेरन् सन्तश्चारित्रकारणात् ।
भवेदेतज्जगत् सर्वम् अमर्यादं च निष्क्रियम् ॥ ५०॥

तस्माद्बुद्धेर्हि रक्षार्थं सद्भिः पानं विवर्जितम् ।
इति ते दुष्कृतं सर्वं कथितं त्रिविधं प्रिये * ॥ ५१॥

---

1. क-ख-घ—सुधां दत्त्वा 2. घ—कलिलापगः
3. क—निवर्तेरन्; घ—पानान्निवर्तेरन्
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

विधानं सुकृतस्यापि भूयश्शृणु शुचिस्मिते ।
प्रोच्यते [1]तत् त्रिधा देवि सुकृतं च समासतः ॥ ५२॥

[2]यदौपरमिकं चैव सुकृतं निरुपद्रवम् ।
तथैव सोपकरणं तावता सुकृतं विदुः ॥ ५३॥

निवृत्तिः पापकर्मभ्यस् तदौपरमिकं प्रिये ।
मनोवाक्कायजा दोषास् शृणु मे वर्जनाच्छुभम् ॥ ५४॥

त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया ।
स हि प्राप्नोति सकलं सर्वदुष्कृतवर्जनात् ॥ ५५॥

प्रथमं वर्जयेद्दोषान् युगपत् पृथगेव वा ।
तथा धर्ममवाप्नोति दोषत्यागो हि दुष्करः ॥ ५६॥

दोषसाकल्यसन्त्यागान्मुनिर्भवति मानवः ॥ ५७

सौकर्यं पश्य धर्मस्य कार्यारम्भादृतेऽपि च ।
आत्मोपलब्धोपरमाल्लभन्ते सुकृतं परम् ॥ ५८

अहो नृशंसाः पच्यन्ते मानुषास्स्वल्पबुद्धयः ।
ये तादृशं न बुध्यन्ते आत्माधीनं च निर्वृताः ॥ ५९

दुष्कृतत्यागमात्रेण पदमूर्ध्वं हि लभ्यते ॥ ५९॥

1. ख—त्रिविधं देवि

2. अ-क—यदा परमिकं

पापभीरुत्वमात्रेण दोषाणां परिवर्जनात् ।
सुशोभनो भवेद्देवि ऋजुर्धर्मेऽव्यपेक्षया ॥ ६०॥

इत्यौपरमिकं देवि कथितं सुकृतं तव ॥ ६१

श्रुत्वा च बुद्धसंयोगाद् इन्द्रियाणां च निग्रहात् ।
[1]सन्तोषाच्च धृतेश्चैव शक्यते दोषवर्जनम् ॥ ६२

तदेव धर्ममित्याहुर् दोषसंयमनं प्रिये ।
यमधर्मेण धर्मोऽस्ति नान्यश्शुभतरः प्रिये ॥ ६३

यमधर्मेण यतयः प्राप्नुवन्त्युत्तमां गतिम् ॥ ६३॥

ईश्वराणां प्रभवतां दरिद्राणां च वै नृणाम् ।
सफलो दोषसन्त्यागो दानादपि शुभादपि ॥ ६४॥

तपो दानं महादेवि दोषमल्पं हि निर्हरेत् ।
सुकृतं यामिकं चोक्तं वक्ष्ये निरुपसाधनम् ॥ ६५॥

सुखाभिसन्धिर्लोकानां सत्यं शौचमथार्जवम् ।
व्रतोपवासः प्रीतिश्च ब्रह्मचर्यं दमश्शमः ॥ ६६॥

एवमादि शुभं कर्म सुकृतं नियमाश्रितम् ।
शृणु तेषां विशेषांश्च कीर्तयिष्यामि भामिनि ॥ ६७॥

सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
नास्ति सत्यात् परं दानं नास्ति सत्यात् परं ततः ॥ ६८॥

1. अ—इदमर्धं नास्ति

यथा श्रुतं यथा दृष्टम् आत्मना यद्यथा कृतम् ।
तथा तस्याविकारेण वचनं सत्यलक्षणम् ॥ ६९॥

यच्छलेनाभिसंयुक्तं सत्यरूपं मृषैव तत् ।
सत्यमेव प्रवक्तव्यं परावर्यं विजानता ॥ ७०॥

दीर्घायुश्च भवेत् सत्यात् कुलसन्तानपालकः ।
लोकसंस्थितिपालश्च भवेत् सत्येन मानवः ॥ ७१॥

उमा—

कथं सन्धारयन् मर्त्यो व्रतं शुभमवाप्नुयात् ॥ ७२

श्रीमहेश्वरः—

पूर्वमुक्तं तु यत् पापं मनोवाक्कायकर्मभिः ।
व्रतवत्तस्य सन्त्यागस् तपोव्रतमिति स्मृतम् ॥ ७३

त्याज्यं वा यदि वा जोष्यम् अव्रतेन वृथा चरन् ।
तथा फलं न लभते तस्माद्धर्मं वृथा चरेत् ॥ ७४

शुद्धकायो नरो भूत्वा स्नात्वा तीर्थे यथाविधि ।
पञ्चभूतानि चन्द्रार्कौ सन्ध्ये धर्मयमौ पितॄन् ॥ ७५

आत्मनैव तथाऽऽत्मानं निवेद्य व्रतवच्चरेत् ॥ ७५॥

व्रतमामरणाद्वाऽपि कालच्छेदेन वा हरेत् ॥ ७६

शाकादिषु व्रतं कुर्यात् तथा पुष्पफलादिषु ।
ब्रह्मचर्यव्रतं कुर्याद् उपवासव्रतं तथा ॥ ७७

एवमन्येषु बहुषु व्रतं कार्यं हितैषिणा ।
व्रतभङ्गो यथा न स्याद् रक्षितव्यं तथा बुधैः ॥ ७८

व्रतभङ्गे महत् पापम् इति विद्धि शुभेक्षणे ॥ ७८॥

औषधार्थं यदज्ञानाद् गुरूणां वचनादपि ।
अनुग्रहार्थं बन्धूनां व्रतभङ्गो न दुष्यते ॥ ७९॥

व्रतापवर्गकाले तु दैवब्राह्मणपूजनम् ।
नरेण तु यथा विद्धि कार्यसिद्धिं यथाऽऽप्नुयात् ॥ ८०॥

उमा—

कथं शौचविधिस्तत्र तन्मे शंसितुमर्हसि ॥ ८१

श्रीमहेश्वरः—

बाह्यमाभ्यन्तरं चेति द्विविधं शौचमिष्यते ।
मानसं सुकृतं यत्तच् छौचमाभ्यन्तरं स्मृतम् ॥ ८२

सदाऽऽहारविशुद्धिश्च कायप्रक्षालनं तु यत् ।
बाह्यशौचं भवेदेतत् तथैवाचमनादिना ॥ ८३

मृच्चैव शुद्धदेशस्था गोशकृन्मूत्रमेव च ।
द्रव्याणि गन्धयुक्तानि यानि पुष्टिकराणि च ॥ ८४

एतैस्सम्मार्जनैः कायम् अम्भसा च पुनः पुनः ॥ ८४॥

अक्षोभ्यं यत् प्रकीर्णं च नित्यस्रोतश्च यज्जलम् ।
प्रायशस्तादृशे मज्जेद् अन्यथा च विवर्जयेत् ॥ ८५॥

त्रिस्त्रिराचमनं श्रेष्ठं [1]निर्मलैरुद्धृतैर्जलैः ।
तथा विण्मूत्रयोरशुद्धिर् अद्भिर्बहुमृदा भवेत् ॥ ८६॥
तथैव जलसंशुद्धिर् यत् संशुद्धं तु संस्पृशेत् ॥ ८७
शकृता भूमिशुद्धिस्स्याल्लौहानां भस्मना स्मृतम् ।
तक्षणं घर्षणं चैव दारवाणां विशोधनम् ॥ ८८
दहनं मृण्मयानां च मर्त्यानां कृच्छ्रधारणम् ।
शेषाणां देवि सर्वेषाम् आतपेन जलेन च ॥ ८९
ब्राह्मणानां च वाक्येन सदा संशोधनं भवेत् ॥ ८९॥
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।
एवमापदि संशुद्धिर् एवं शौचं विधीयते ॥ ९०॥

उमा—

आहारशुद्धिस्तु कथं देवदेव महेश्वर ॥ ९१॥

श्रीमहेश्वरः—

अमांसमद्यमक्लेद्यम् अपर्युषितमेव च ।
अतिकट्वम्ललवणहीनं च शुभगन्धि च ॥ ९२॥
क्रिमिकेशमलैर्हीनं संवृतं शुद्धदर्शनम् ।
एवंविधं सदाहार्यं देवब्राह्मणसत्कृतम् ॥ ९३॥
[2]श्रुतमित्येव तज्ज्ञेयम् अन्यथा मन्यतेऽशुभम् ।

---

1. क—निष्फेनैर्निर्मलै 2. ख—श्रेष्ठ

ग्राम्यादारण्यकैस्सिद्धं श्रेष्ठमित्यवधारय ॥ ९४॥

अतिमात्रगृहीतात्तु अल्पदत्तं भवेच्छुचि ।
यज्ञशेषं हविश्शेषं पितृशेषं च निर्मलम् ॥ ९५॥

इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि* ॥ ९६

उमा—

भक्षयन्त्यपरे मांसं वर्जयन्त्यपरे विभो ।
तन्मे वद महादेव भक्ष्याभक्ष्यविनिर्णयम् ॥ ९७

श्रीमहेश्वरः—

मांसस्य भक्षणे दोषो यश्चास्याभक्षणे गुणः ।
तदहं कीर्तयिष्यामि तन्निबोध यथातथम् ॥ ९८

इष्टं दत्तमधीतं च क्रतवश्च सदक्षिणाः ।
अमांसभक्षणस्यैव कलां नार्हन्ति षोडशीम् ॥ ९९

आत्मार्थं यः परप्राणान् हिंस्यात् स्वादुफलेप्सया ।
व्यालगृध्रसृगालैश्च राक्षसैश्च समस्तु सः ॥ १००

यो वृथा नित्यमांसाशी स पुमानधमो भवेत् ।
ततः कष्टतरं नास्ति स्वयमाहृत्य भक्षणात् ॥ १०१

स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नवासं लभते यत्र यत्रोपजायते ॥ १०२

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सञ्छेदनं स्वमांसस्य यथा सञ्जनयेद्रुजम् ।
तथैव परमांसेऽपि वेदितव्यं विजानता ॥ १०३

यस्तु सर्वाणि मांसानि यावज्जीवं न भक्षयेत् ।
स स्वर्गे विपुलं स्थानं लभते नात्र संशयः ॥ १०४

यत्तु वर्षशतं पूर्णं तप्यते परमं तपः ।
यच्चापि वर्जयेन्मांसं सममेतन्न वा समम् ॥ १०५

न हि प्राणैः प्रियतमं लोके किञ्चन विद्यते ।
तस्मात् प्राणिदया कार्या यथाऽऽत्मनि तथा परे ॥ १०६

सर्वे यज्ञा न तत् कुर्युस् सर्वे देवाश्च भामिनि ।
यो मांसरसमास्वाद्य पुनर्मांसं विवर्जयेत् ॥ १०७

इत्येवं मुनयः प्राहुर् मांसस्याभक्षणे गुणान् ।
एवं बहुगुणं देवि नृणां मांसविवर्जनम् ॥ १०८

न शक्नुयाद्यदाऽतीव त्यक्तुं मांसं कथञ्चन ।
पुण्यं तन्मासमात्रं वा वर्जनीयं विशेषतः ॥ १०९

न शक्नुयादपि तथा कौमुदीमासमेव च ।
जन्मनक्षत्रतिथिषु सदा पर्वसु रात्रिषु ॥ ११०
वर्जनीयं तथा मांसं परत्र हितमिच्छता ॥ ११०॥

अशक्तः कारणान्मर्त्यो भोक्तुमिच्छेद्विधिं शृणु ।
अनेन खादन् विधिना कलुषेण न लिप्यते ॥ १११॥

[1]सूनायां च गतप्राणान् क्रीत्वा न्यायेन भामिनि ।
ब्राह्मणातिथिपूजार्थं भोक्तव्यं हितमिच्छता ॥ ११२॥
भैषज्यकारणाद्व्याधौ खादन् पापैर्न लिप्यते ।
पितृशेषं तथैवाश्नन् मांसं नाशुभमृच्छति ॥ ११३॥

उमा—

गुरुपूजा कथं देव क्रियते धर्मचारिभिः ॥ ११४

श्रीमहेश्वरः—

गुरुपूजां प्रवक्ष्यामि यथावत्तव शोभने ।
कृतज्ञानां परो धर्म इति वेदानुशासनम् ॥ ११५
तस्मात् स्वगुरवः पूज्यास् ते हि पूर्वोपकारिणः ।
गुरूणां च गरीयांसस् त्रयो लोकेषु पूजिताः ॥ ११६
उपाध्यायः पिता माता सम्पूज्यास्ते विशेषतः ।
ये पितुर्भ्रातरो ज्येष्ठा ये च तस्यानुजास्तथा ॥ ११७
पितुः पिता च सर्वे ते पूजनीयाः पिता तथा ॥ ११७॥
मातुर्या भगिनी ज्येष्ठा मातुर्या च यवीयसी ।
मातामही च धात्री च सर्वास्ता मातरस्स्मृताः ॥ ११८॥
उपाध्यायस्य यः पुत्रो यश्च तस्य भवेद्गुरुः ।
ऋत्विग्गुरुः पिता चेति गुरवस्सम्प्रकीर्तिताः ॥ ११९॥

1. अ—अर्धद्वयं नास्ति

ज्येष्ठो भ्राता नरेन्द्रश्च मातुलश्श्वशुरस्तथा ।
भयत्राता च भर्ता च गुरवस्ते प्रकीर्तिताः ॥ १२०॥

इत्येष कथितस्साध्वि गुरूणां सर्वसङ्ग्रहः ।
अनुवृत्तिं च पूजां च तेषामपि निबोध मे ॥ १२१॥

आराध्या मातापितरावुपाध्यायस्तथैव च ।
कथञ्चिन्नावमन्तव्या नरेण हितमिच्छता ॥ १२२॥

तेन प्रीणन्ति पितरस् तेन प्रीतः प्रजापतिः ।
येन प्रीणाति चेन्माता प्रीतास्स्युर्देवमातरः ॥ १२३॥

येन प्रीणात्युपाध्यायो ब्रह्मा तेनाभिपूजितः ।
अप्रीतेषु पुनस्तेषु नरो नरकमेति हि ॥ १२४॥

गुरूणां वैरनिर्बन्धो न कर्तव्यः कथञ्चन ।
नरकं स्वगुरुप्रीत्या मनसाऽपि न गच्छति ॥ १२५॥

न ब्रूयाद्विप्रियं तेषाम् अनिष्टं न प्रवर्तयेत् ।
विगृह्य न वदेत्तेषां समीपे स्पर्धया क्वचित् ॥ १२६॥

यद्यदिच्छन्ति ते कर्तुम् अस्वतन्त्रस्तदाचरेत् ।
वेदानुशासनसमं गुरुशासनमिष्यते ॥ १२७॥

कलहांश्च विवादांश्च गुरुभिस्सह वर्जयेत् ।
कैतवं परिहासांश्च मन्युकामाश्रयांस्तथा ॥ १२८॥

गुरूणां योऽनहंवादी करोत्याज्ञामतन्द्रितः ।

न तस्मात् सर्वमर्त्येषु विद्यते पुण्यकृत्तमः ॥ १२९॥

असूयामपवादं च गुरूणां परिवर्जयेत् ।
तेषां प्रियहितान्वेषी भूत्वा परिचरेत् सदा ॥ १३०॥

न तद्यज्ञफलं कुर्यात् तपो वाऽऽचरितं महत् ।
यत् कुर्यात् पुरुषस्येह गुरुपूजा सदा कृता ॥ १३१॥

अनुवृत्तेर्विना धर्मो नास्ति सर्वाश्रमेष्वपि ।
तस्मात् क्षमावृतः क्षान्तो गुरुवृत्तिं समाचरेत् ॥ १३२॥

स्वमर्थं स्वशरीरं च गुर्वर्थे सन्त्यजेद्बुधः ।
विवादं धनहेतोर्वा मोहाद्वा तैर्न रोचयेत् ॥ १३३॥

ब्रह्मचर्यमहिंसा च दानानि विविधानि च ।
गुरुभिः प्रतिषिद्धस्य सर्वमेतदपार्थकम् ॥ १३४॥

उपाध्यायं पितरं मातरं च
येऽभिद्रुह्युर्मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तेभ्यो नान्यः पापकृदस्ति लोके ॥ १३५॥

उमा—

उपवासविधिं तत्र तन्मे शंसितुमर्हसि ॥ १३६

श्रीमहेश्वरः—

शरीरमलशान्त्यर्थम् इन्द्रियोच्छोषणाय च ।

एकभुक्तोपवासैस्तु धारयन्ते व्रतं नराः ॥ १३७

लभन्ते विपुलं धर्मं तथाऽऽहारपरिक्षयात् ।
बहूनामुपरोधं तु न कुर्यादात्मकारणात् ॥ १३८

जीवोपघातं च तथा स जीवन् धन्य इष्यते ।
तस्मात् पुण्यं लभेन्मर्त्यस् स्वयमाहारकर्शनात् ॥ १३९

तद्गृहस्थैर्यथाशक्ति कर्तव्यमिति निश्चयः ॥ १३९॥

उपवासार्दिते काये आपदर्थं पयो जलम् ।
भुञ्जन्नप्रतिघाती स्याद् ब्राह्मणाननुमान्य च ॥ १४०॥

उमा—

ब्रह्मचर्यं कथं देव रक्षितव्यं विजानता ॥ १४१

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ १४१॥

ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परं तपः ।
केवलं ब्रह्मचर्येण प्राप्यते परमं पदम् ॥ १४२॥

सङ्कल्पादर्शनाच्चैव तद्युक्तवचनादपि ।
संस्पर्शादथ संयोगात् पञ्चधा रक्षितं व्रतम् ॥ १४३॥

व्रतवद्धारितं चैव ब्रह्मचर्यमकल्मषम् ।
नित्यं संरक्षितं तस्य नैष्ठिकानां विधीयते ॥ १४४॥

तदिष्यते गृहस्थानां कालमुद्दिश्य कारणम् ॥ १४५

जन्मनक्षत्रयोगेषु पुण्यवासेषु पर्वसु ।
देवताधर्मकार्येषु ब्रह्मचर्यव्रतं चरेत् ॥ १४६

ब्रह्मचर्यव्रतफलं लभेद्दारव्रती सदा ।
शौचमायुस्तथाऽऽरोग्यं लभ्यते ब्रह्मचारिभिः ॥ १४७

उमा—

तीर्थचर्याव्रतं देव क्रियते धर्मकाङ्क्षिभिः ।
कानि तीर्थानि लोकेषु तन्मे शंसितुमर्हसि ॥ १४८

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि तीर्थस्नानविधिं प्रिये ।
पावनार्थं च शौचार्थं ब्रह्मणा निर्मितं पुरा ॥ १४९

यास्तु लोके महानद्यस् तास्सर्वास्तीर्थसंज्ञिकाः ।
तासां प्राक्स्रोतसश्श्रेष्ठास् सङ्गमश्च परस्परम् ॥ १५०

तासां सागरसंयोगो वरिष्ठश्चेति विद्यते ॥ १५०॥

तासामुभयतः कूलं तत्र तत्र मनीषिभिः ।
देवैर्वा सेवितं देवि तत्तीर्थं परमं स्मृतम् ॥ १५१॥

समुद्रश्च महातीर्थं पावनं परमं शुभम् ।
तस्य कूलगतास्तीर्था महद्भिश्च समाप्लुताः ॥ १५२॥

स्रोतसां पर्वतानां च जोषितानां महर्षिभिः ।
अपि कूलं तटाकं वा सेवितं मुनिभिः प्रिये ॥ १५३॥

तत्तु तीर्थमिति ज्ञेयं प्रभावात्तु तपस्विनाम् ॥ १५४

तदाप्रभृति तीर्थत्वं लभेल्लोकहिताय वै ।
एवं तीर्थं भवेद्देवि तस्य स्नानविधिं शृणु ॥ १५५

जन्मना व्रतभूयिष्ठो गत्वा तीर्थानि काङ्क्षया ।
उपवासत्रयं कुर्याद् एकं वा नियमान्वितः ॥ १५६

पुण्यमासयुते काले पौर्णमास्यां यथाविधि ।
बहिरेव शुचिर्भूत्वा तत्तीर्थं मन्मना विशेत् ॥ १५७

त्रिराप्लुत्य जलाभ्याशे दत्त्वा ब्राह्मणदक्षिणाम् ।
अभ्यर्च्य देवायतनं ततः प्रायाद्यथागतम् ॥ १५८

एतद्विधानं सर्वेषां तीर्थं तीर्थमिति प्रिये ।
समीपतीर्थस्नानात्तु दूरतीर्थं सुपूजितम् ॥ १५९

आदिप्रभृति शुद्धस्य तीर्थस्नानं शुभं भवेत् ।
तपोर्थं पापनाशार्थं शौचार्थं तीर्थगाहनम् ॥ १६०

एवं पुण्येषु [1]तीर्थेषु तीर्थस्नानं शुभं भवेत् ।
एतन्नैयमिकं सर्वं सुकृतं कथितं तव* ॥ १६१

एतदर्थमवाप्नोति नरः प्रेत्य शुभेक्षणे ॥ १६१॥

1. क-ख—मासेषु

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

उमा—

[1]लोकसिद्धं तु यद्द्रव्यं सर्वसाधारणं भवेत् ।
तद्ददत् सर्वसामान्यं कथं धर्मं लभेन्नरः ॥ १६२॥

एवं साधारणे द्रव्ये तस्य स्वत्वं कथं भवेत् ॥ १६३

श्रीमहेश्वरः—

लोके भूतमयं द्रव्यं सर्वसाधारणं तथा ।
तथैव तद्ददन्मर्त्यो लभेत् पुण्यं स तच्छृणु ॥ १६४

दाता प्रतिग्रहीता च देयं सोपक्रमं तथा ।
देशकालौ च यत्त्वेतद् दानं षड्गुणमुच्यते ॥ १६५

तेषां सम्पद्विशेषांश्च कीर्त्यमानान् निबोध मे ॥ १६५॥

आदिप्रभृति यश्शुद्धो मनोवाक्कायकर्मभिः ।
सत्यवादी जितक्रोधस् त्वलुब्धो नाभ्यसूयकः ॥ १६६॥

श्रद्धावानास्तिकश्चैव एवं दाता प्रशस्यते ॥ १६७

[2]शुद्धो दान्तो जितक्रोधस् [3]तथाऽदीनकुलोद्भवः ।
श्रुतचारित्रसम्पन्नस् तथा बहुकलत्रवान् ॥ १६८

पञ्चयज्ञपरो नित्यं निर्विकारशरीरवान् ।
एतान् पात्रगुणान् विद्धि तादृक् पात्रं प्रशस्यते ॥ १६९

1. अ—अर्धत्रयं नास्ति
2. ब—अर्धचतुष्टयं नास्ति
3. ख—तथोदितकु

पितृदेवाग्निकार्येषु तस्य दत्तं महत् फलम् ।
यद्यदर्हति यो लोके पात्रं तस्य भवेच्च सः ॥ १७०
मुच्येदापदमापन्नो येन पात्रं तदस्य तु ॥ १७०॥

अन्नस्य क्षुधितं पात्रं तृषितं तु जलस्य वै ।
एवं पात्रेषु नानात्वम् इष्यते पुरुषं प्रति ॥ १७१॥

जारश्चोरश्च षण्डश्च हिंस्रस्समयभेदकः ।
लोकविघ्नकराश्चान्ये वर्जितास्सर्वशः प्रिये ॥ १७२॥

परोपघाताद्यद्द्रव्यं चौर्याद्वा लभ्यते नृभिः ।
निर्दयाल्लभ्यते यच्च धूर्तभावेन वै तथा ॥ १७३॥

अधर्मादर्थमोहाद्वा बहूनामुपरोधनात् ।
लभ्यते यद्धनं देवि तदत्यन्तविगर्हितम् ॥ १७४॥

तादृशेन कृतं धर्मं निष्फलं विद्धि भामिनि ।
तस्मान्न्यायागतेनैव दातव्यं शुभमिच्छता ॥ १७५॥

यद्यदात्मप्रियं नित्यं तत्तद्देयमिति स्थितिः ।
उपक्रममिमं विद्धि दातॄणां परमं हितम् ॥ १७६॥

पात्रभूतं तु दूरस्थम् अभिगम्य प्रसाद्य च ।
दाता दानं तथा दद्याद् यथा तुष्येत तेन सः ॥ १७७॥

एष दानविधिश्श्रेष्ठस् समाहूय तु मध्यमः ॥ १७८

पूर्वं च पात्रतां ज्ञात्वा समाहूय निवेद्य च ।
शौचाचमनसंयुक्तं दातव्यं श्रद्धया प्रिये ॥ १७९

याचितॄणां तु परमम् आभिमुख्यं पुरस्कृतम् ।
सम्मानपूर्वं सङ्ग्राह्यं दातव्यं देशकालयोः ॥ १८०

अपात्रेभ्योऽपि चान्येभ्यो दातव्यं भूतिमिच्छता ॥ १८०॥

पात्राणि सम्परीक्ष्यैव दात्रा वै दानमात्रया ।
अतिशक्त्या परं दानं यथाशक्त्या तु मध्यमम् ॥ १८१॥

तृतीयं चापरं दानं नानुरूपमिवात्मनः ॥ १८२

यथा सम्भावितं पूर्वं दातव्यं तत् तथैव च ।
पुण्यक्षेत्रेषु यद् दत्तं पुण्यकालेषु वा तथा ॥ १८३

तच्छोभनतरं विद्धि गौरवादेशकालयोः ॥ १८३॥

उमा—

यश्च पुण्यतमो देशस् तथा कालश्च शंस मे ॥ १८४

श्रीमहेश्वरः—

कुरुक्षेत्रं महानद्यो यच्च देवर्षिसेवितम् ।
गिरिर्वरश्च [1]तीर्थानि देशभागेषु पूजितः ॥ १८५

ग्रहीतुमीप्सिते यत्र तत्र दत्तं महाफलम् ॥ १८५॥

शरद्वसन्तकालश्च पुण्यमासस्तथैव च ।

1. व—मालां वा

शुक्लपक्षश्च पक्षाणां पौर्णमासी च पर्वसु ॥ १८६॥

पितृदैवतनक्षत्रनिर्मलो दिवसस्तथा ।
तच्छोभनतरं विद्धि चन्द्रसूर्यग्रहे तथा ॥ १८७॥

प्रतिग्रहीतुर्यः कालो मनसा कीर्तितश्शुभे ।
एवमादिषु कालेषु दत्तं दानं महद्भवेत् ॥ १८८॥

दाता देयं च पात्रं च उपक्रमयुता क्रिया ।
देशकालं तथेत्येषां सम्पच्छुद्धिः प्रकीर्तिता ॥ १८९॥

यदैव युगपत् सम्पत् तत्र दानं महद्भवेत् ॥ १९०

अत्यल्पमपि यद्दानम् एभिष्षड्भिर्गुणैर्युतम् ।
[1]भूत्वाऽनन्तं नयेत् स्वर्गं दातारं दोषवर्जितम् ॥ १९१

सुमहद्वाऽपि यद्दानं गुणैरेभिर्विनाकृतम् ।
अत्यल्पफलनिर्योगम् अफलं वा [2]फलोद्धतम् ॥ १९२

उमा—

एवंगुणयुतं दानं दत्तं च फलतां व्रजेत् ।
तदस्ति चेन्महद्देयं तन्मे शंसितुमर्हसि ॥ १९३

श्रीमहेश्वरः—

तदप्यस्ति महाभागे नराणां भावदोषतः ॥ १९३॥

कृत्वा धर्मं तु विधिवत् पश्चात्तापं करोति चेत् ।

---

1. ख—भूत्वा तं तं    2. ख—भवेद्धि तत्

श्लाघया वा यदि ब्रूयाद् वृथा संसदि यत् कृतम् ॥ १९४॥

प्रकल्पयेच्च मनसा तत् फलं प्रेत्यभावतः ॥ १९५

कर्म धर्मकृतं यच्च सततं फलकाङ्क्षया ।
एतत् कृतं वा दत्तं वा परत्र विफलं भवेत् ॥ १९६

एते दोषा विवर्ज्याश्च दातृभिः पुण्यकाङ्क्षिभिः ॥ १९६॥

सनातनमिदं वृत्तं सद्भिराचरितं तथा ।
अनुग्रहात् परेषां तु गृहस्थानामृणं हि तत् ॥ १९७॥

इत्येवं मन आविश्य दातव्यं सततं बुधैः ॥ १९८

एवमेव कृतं नित्यं सुकृतं तद्भवेन्महत् ।
सर्वसाधारणं द्रव्यम् एवं दत्त्वा महत् फलम्* ॥ १९९

उमा—

भगवन् कानि देयानि धर्ममुद्दिश्य मानवैः ।
तान्यहं श्रोतुमिच्छामि तन्मे शंसितुमर्हसि ॥ २००

श्रीमहेश्वरः—

अजस्रं धर्मकार्यं च तथा नैमित्तिकं प्रिये ।
अन्नं प्रतिश्रयो दीपः पानीयं तृणमिन्धनम् ॥ २०१

स्नेहो गन्धश्च भैषज्यं तिलाश्च लवणं तथा ।
एवमादि तथाऽन्यच्च दानमाजस्रमुच्यते ॥ २०२

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अजस्रदानात् सततम् आजस्रमिति निश्चितम् ।
सामान्यं सर्ववर्णानां दानं शृणु समाहिता ॥ २०३

अन्नं प्राणो मनुष्याणाम् अन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातुमिच्छति मानवः ॥ २०४

ब्राह्मणायाभिरूपाय यो दद्यादन्नमीप्सितम् ।
[1]निदधाति निधिश्रेष्ठं सोऽनन्तं पारलौकिकम् ॥ २०५

श्रान्तमध्वपरिश्रान्तम् अतिथिं गृहमागतम् ।
अर्चयीत प्रयत्नेन स हि यज्ञो वरप्रदः ॥ २०६

कृत्वा तु पापकं कर्म यो दद्यादन्नमर्थिनाम् ।
ब्राह्मणानां विशेषेण सोऽपहन्ति स्वकं तमः ॥ २०७

पितरस्तस्य नन्दन्ति सुवृष्ट्या कर्षका इव ।
पुत्रो यस्य तु पौत्रो वा श्रोत्रियं भोजयिष्यति ॥ २०८

अपि चण्डालशूद्राणाम् अन्नदानं न गर्ह्यते ।
तस्मात् सर्वप्रयत्नेन दद्यादन्नममत्सरः ॥ २०९

कलत्रं पीडयित्वाऽपि [2]पोषयेदतिथीन् सदा ।
जन्मापि मानुषे लोके तदर्थं हि विधीयते ॥ २१०

अन्नदानाच्च लोकांस्तान् सम्प्रवक्ष्याम्यनिन्दिते ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ २११

---

1. ख—अर्धचतुष्टयं नास्ति 2. घ—तोष

अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्चिःप्रकाशानि [1]हेमरूप्यनिभानि च ॥ २१२

नानारूपाणि संस्थानां नानारत्नमयानि च ।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥ २१३

तरुणादित्यवर्णानि स्थावराणि चराणि च ।
यथेष्टभक्ष्यभोज्यानि शयनासनवन्ति च ॥ २१४

सर्वकामफलाश्चात्र वृक्षा भवनसंस्थिताः ।
वाप्यो बह्व्यश्च कूपाश्च दीर्घिकाश्च सहस्रशः ॥ २१५

अरुजानि विशोकानि नित्यानि विविधानि च ।
भवनानि विचित्राणि प्राण[2]दानां त्रिविष्टपे ॥ २१६

विवस्वतश्च सोमस्य ब्रह्मणश्च प्रजापतेः ।
विशन्ति लोकांस्ते नित्यं जगत्यन्नोदकप्रदाः ॥ २१७

तत्र ते सुचिरं कालं विहृत्याप्सरसां गणैः ।
जायन्ते मानुषे लोके सर्वकल्याणसंयुताः ॥ २१८

बलसंहननोपेता नीरोगाश्चिरजीविनः ।
कुलीना मतिमन्तश्च भवन्त्यन्नप्रदा नराः ॥ २१९

तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
सर्वकालं च सर्वस्य सर्वत्र च सदैव च ॥ २२०

1. अ—इतष्षट् पादा न सन्ति 2. अ—दानात्

सुवर्णदानं परमं स्वर्ग्यं स्वस्त्ययनं महत् ।
तस्मात्ते वर्णयिष्यामि यथावदनुपूर्वशः ॥ २२१

अपि पापकृतं क्रूरं दत्तं रुक्मं प्रकाशयेत् ॥ २२१॥

सुवर्णं ये प्रयच्छन्ति श्रोत्रियेभ्यस्सुचेतसः ।
देवतास्ते तर्पयन्ति समस्ता इति वैदिकम् ॥ २२२॥

अग्निर्हि देवतास्सर्वास् सुवर्णं चाग्निरुच्यते ।
तस्मात् सुवर्णदानेन तृप्तास्स्युस्सर्वदेवताः ॥ २२३॥

अग्न्यभावे तु कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
तस्मात् सुवर्णदातारस् सर्वान् कामानवाप्नुयुः ॥ २२४॥

आदित्यस्य हुताशस्य लोकान् नानाविधाञ् शुभान् ।
काञ्चनं सम्प्रदायाशु प्रविशन्ति न संशयः ॥ २२५॥

अलङ्कारं कृतं चापि केवलान् प्रविशिष्यते ।
सौवर्णैर्ब्राह्मणं काले तैरलङ्कृत्य भोजयेत् ॥ २२६॥

य एतत् परमं दानं दत्त्वा सौवर्णमद्भुतम् ।
द्युतिं मेधां वपुः कीर्तिं पुनर्जाते लभेद्ध्रुवम् ॥ २२७॥

तस्मात् स्वशक्त्या दातव्यं काञ्चनं भुवि मानवैः ।
न ह्येतस्मात् परं लोकेष्वन्यत् पापात् प्रमुच्यते ॥ २२८॥

अत ऊर्ध्वं प्रवक्ष्यामि गवां दानमनिन्दिते ।

न हि गोभ्यः परं दानं विद्यते जगति प्रिये.॥ २२९॥

लोकान् सिसृक्षुणा पूर्वं गावस्सृष्टास्स्वयम्भुवा ।
वृत्त्यर्थं सर्वभूतानां तस्मात्ता मातरस्स्मृताः ॥ २३०॥

लोकज्येष्ठा लोकवृत्त्यां प्रवृत्ता
मय्यायत्तास्सोमनिष्यन्दभूताः ।
सौम्याः पुण्याः कामदाः प्राणदाश्च
तस्मात् पूज्याः पुण्यकामैर्मनुष्यैः ॥ २३१॥

धेनुं दत्त्वा निभृतां सुशीलां
कल्याणवत्सां च पयस्विनीं च ।
यावन्ति रोमाणि भवन्ति तस्यास्
तावत् समास्स्वर्गफलानि भुङ्क्ते ॥ २३२॥

प्रयच्छते यः कपिलां सचेलां
सकांस्यदोहां कनकाग्र्यशृङ्गीम् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्वम्
आसप्तमं तारयते परत्र ॥ २३३॥

अन्तर्जाताः क्रीतका द्यूतलब्धाः
प्राणक्रीतास्सोदकाश्चौजसा वा ।
कृच्छ्रोत्सृष्टाः पोषणार्थागताश्च
द्वारैरेतैस्ताः प्रलब्धाः प्रदद्यात् ॥ २३४॥

कृशाय बहुपुत्राय श्रोत्रियायाहिताग्नये ।
प्रदाय नीरुजां धेनुं लोकान् प्राप्नोत्यनुत्तमान् ॥ २३५॥

नृशंसस्य कृतघ्नस्य लुब्धस्यानृतवादिनः ।
हव्यकव्यव्यपेतस्य न दद्याद्गाः कथञ्चन ॥ २३६॥

समानवत्सां यो दद्याद् धेनुं विप्रे पयस्विनीम् ।
[1]सुवृत्तां वस्त्रसञ्छन्नां सोमलोके महीयते ॥ २३७॥

समानवत्सां यो दद्यात् कृष्णां धेनुं पयस्विनीम् ।
सुवृत्तां वस्त्रसञ्छन्नां लोकान् प्राप्नोत्यपांपतेः ॥ २३८॥

हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसम्पन्नां [2]यान्ति कौबेरसद्मनः ॥ २३९॥

वायुरेणुसवर्णां च सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसम्पन्नां वायुलोके महीयते ॥ २४०॥

समानवत्सां यो धेनुं दत्त्वा गौरीं पयस्विनीम् ।
सुवृत्तां वस्त्रसञ्छन्नाम् अग्निलोके महीयते ॥ २४१॥

युवानं बलिनं श्यामं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥ २४२॥

ऋषभं ये प्रयच्छन्ति श्रोत्रियाणां महात्मनाम् ।

---

1. अ—अर्धद्वयं नास्ति
2. क—इतः चत्वारः पादा न सन्ति

ऐश्वर्यमभिजायन्ते जायमानाः पुनःपुनः ॥ २४३॥

गवां मूत्रपुरीषाणि नोद्विजेत कदाचन ।
न चासां मांसमश्नीयाद् गोषु भक्तस्सदा भवेत् ॥ २४४॥

ग्रासमुष्टिं परगवे दद्यात् संवत्सरं शुचिः ।
अकृत्वा स्वयमाहारं व्रतं तत् सार्वकामिकम् ॥ २४५॥

गवामुभयतः काले नित्यं स्वस्त्ययनं वदेत् ।
न चासां चिन्तयेत् पापम् इति धर्मविदो विदुः ॥ २४६॥

गावः पवित्रं परमं गोषु लोकाः प्रतिष्ठिताः ।
कथञ्चिन्नावमन्तव्या गावो लोकस्य मातरः ॥ २४७॥

तस्मादेव गवां दानं विशिष्टमिति कथ्यते ।
गोषु पूजा च भक्तिश्च नरस्यायुष्यतां वहेत् ॥ २४८॥

अतःपरं प्रवक्ष्यामि भूमिदानं महाफलम् ।
भूमिदानसमं दानं लोके नास्तीति निश्चयः ॥ २४९॥

गृहयुक्क्षेत्रयुग्वाऽपि भूमिभागः प्रदीयते ।
सुखभोगं निराक्रोशं वास्तुपूर्वं प्रकल्प्य च ॥ २५०॥

ग्रहीतारमलङ्कृत्य वस्त्रपुष्पानुलेपनैः ।
सभृत्यं सपरीवारं भोजयित्वा यथेष्टतः ॥ २५१॥

यो दद्याद्दक्षिणां काले त्रिरद्भिर्गृह्यतामिति ॥ २५२

एवं भूम्यां प्रदत्तायां श्रद्धया वीतमत्सरैः ।
यावत्तिष्ठति सा भूमिस् तावत्तस्य फलं विदुः ॥ २५३

भूमिदस्स्वर्गमारुह्य रमते शाश्वतीस्समाः ।
अचला ह्यक्षया भूमिस् सर्वकामान् दुधुक्षति ॥ २५४

यत् किञ्चित् कुरुते पापं पुरुषो वृत्तिकर्शितः ।
अपि गोकर्णमात्रेण भूमिदानेन मुच्यते ॥ २५५

सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाभागे भूमिदाने प्रतिष्ठितम् ॥ २५६

भर्तुर्निश्श्रेयसे युक्तास् त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकाय संसिद्धा नातिक्रामन्ति भूमिदम् ॥ २५७

हलकृष्टां महीं दद्याद् यस्सबीजफलान्विताम् ।
सुकूपशरणां वाऽपि सा भवेत् सर्वकामदा ॥ २५८

निष्पन्नसस्यां पृथिवीं यो ददाति द्विजन्मनाम् ।
विमुक्तः कलुषैस्सर्वैश् शक्रलोकं स गच्छति ॥ २५९

यथा जनित्री क्षीरेण स्वपुत्रमभिवर्धयेत् ।
एवं सर्वफलैर्भूमिर् दातारमभिवर्धयेत् ॥ २६०

ब्राह्मणं वृत्तसम्पन्नम् आहिताग्निं शुचिव्रतम् ।
ग्राहयित्वा निजां भूमिं न यान्ति यमसादनम् ॥ २६१

यथा चन्द्रमसो वृद्धिर् अहन्यहनि दृश्यते ।
तथा भूमेः कृतं दानं सस्येसस्ये विवर्धते ॥ २६२

यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानगुणार्जिताः ॥ २६३

पितरः पितृलोकस्था देवताश्च दिवि स्थिताः ।
सन्तर्पयन्ति भोगैस्तं यो ददाति वसुन्धराम् ॥ २६४

दीर्घायुष्यं वराङ्गत्वं स्फीतां च श्रियमुत्तमाम् ।
परत्र लभते मर्त्यस् सम्प्रदाय वसुन्धराम् ॥ २६५

एतत् सर्वं मयोद्दिष्टं भूमिदानस्य यत् फलम् ।
श्रद्दधानैर्नरैर्नित्यं श्राव्यमेतत् सनातनम् ॥ २६६

अतः परं प्रवक्ष्यामि कन्यादानं यथाविधि ।
कन्या देया महादेवि परेषामात्मनोऽपि वा ॥ २६७

कन्यां शुद्धव्रताचारां कुलरूपसमन्विताम् ।
यस्मै दित्सति पात्राय तेनापि भृशकामिताम् ॥ २६८

प्रथमं [1]तां समाकल्प्य [2]बन्धुभिः कृतनिश्चयाम् ।
कारयित्वा गृहं पूर्वं दासीदासपरिच्छदैः ॥ २६९

गृहोपकरणैश्चैव पशुधान्येन संयुताम् ।

1. क-ख-ब—तत्स
2. ख—बहुभिः + यः

तदर्थिने तदर्हाय कन्यां तां समलङ्कृताम् ॥ २७०
सविवाहं यथान्यायं प्रयच्छेदग्निसाक्षिकम् ॥ २७०॥
वृत्त्यायतीं यथा कृत्वा सद्गृहे तौ निवेशयेत् ॥ २७१

एवं कृत्वा वधूदानं तस्य दानस्य गौरवात् ।
प्रेत्यभावे महीयेत स्वर्गलोके यथासुखम् ॥ २७२
पुनर्जातश्च सौभाग्यं कुलवृद्धिं तथाऽऽप्नुयात् ॥ २७२॥

विद्यादानं तथा देवि पात्रभूताय वै ददत् ।
प्रेत्यभावे लभेन्मर्त्यो मेधां बुद्धिं धृतिं स्मृतिम् ॥ २७३॥

अनुरूपाय शिष्याय यश्च विद्यां प्रयच्छति ।
यथोक्तस्य प्रदानस्य फलमानन्त्यमश्नुते ॥ २७४॥

दापनं त्वथ विद्यानां दरिद्रेभ्योऽर्थवेदनैः ।
स्वयं दत्तेन तुल्यं स्याद् इति विद्धि शुभानने ॥ २७५॥

एवं ते कथितान्येव महादानानि मानिनि ।
त्वत्प्रियार्थं मया देवि भूयश्श्रोतुं किमिच्छसि* ॥ २७६॥

उमा—

भगवन् देवदेवेश कथं देयं तिलान्वितम् ।
तस्य तस्य फलं ब्रूहि दत्तस्य च कृतस्य च ॥ २७७॥

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

श्रीमहेश्वरः—

तिलकल्पविधिं देवि तन्मे शृणु समाहिता ॥ २७८

समृद्धैरसमृद्धैर्वा तिला देया विशेषतः ।
तिलाः पवित्राः पापघ्नास् सुपुण्या इति संस्मृताः ॥ २७९

न्यायतस्तु तिलाञ् शुद्धान् संहृत्याथ स्वशक्तितः ।
तिलराशिं पुनः कुर्यात् पर्वताभं सरत्नकम् ॥ २८०

महान्तं यदि वा स्तोकं नानाद्रव्यसमन्वितम् ॥ २८०॥

सुवर्णरजताभ्यां च मणिमुक्ताप्रवालकैः ।
अलङ्कृत्य यथायोगं सपताकं सवेदिकम् ॥ २८१॥

सभूषणं सवस्त्रं च शयनासनसम्मितम् ॥ २८२

प्रायशः कौमुदीमासे पौर्णमास्यां विशेषतः ।
भोजयित्वा च विधिवद् ब्राह्मणानर्हतो बहून् ॥ २८३

स्वयं कृतोपवासश्च वृत्तशौचसमन्वितः ।
दद्यात् प्रदक्षिणीकृत्य तिलराशिं सदक्षिणम् ॥ २८४

एकस्यापि बहूनां वा दातव्यं भूतिमिच्छता ।
तस्य दानफलं देवि अग्निष्टोमेन संयुतम् ॥ २८५

केवलं वा तिलैरेव भूमौ कृत्वा गवाकृतिम् ।
सवस्त्रकं सरत्नं च पुंसा गोदानकाङ्क्षिणा ॥ २८६

तदर्हाय प्रदातव्यं तस्य गोदानतः फलम् ॥ २८६॥

शरावांस्तिलसम्पूर्णान् सहिरण्यान् सचम्पकान् ।
नृपो ददद्ब्राह्मणाय स पुण्यफलभाग्भवेत् ॥ २८७॥

एवं तिलमयं देयं नरेण हितमिच्छता ।
नानादानफलं भूयश् शृणु देवि समाहिता ॥ २८८॥

बलमायुष्यमारोग्यम् अन्नदानाल्लभेन्नरः ।
पानीयदस्तु सौभाग्यं रसज्ञानं लभेन्नरः ॥ २८९॥

वस्त्रदानाद्वपुश्शोभाम् अलङ्कारं लभेन्नरः ।
दीपदो बुद्धिवैशद्यं द्युतिशोभां लभेन्नरः ॥ २९०॥

[1]राजपीडाविमोक्षं तु छत्रदो लभते फलम् ।
दासीदासप्रदानात्तु भवेत् कर्मान्तभाङ्नरः ॥ २९१॥

दासीदासं च विविधं लभेत् प्रेत्य गुणान्वितम् ॥ २९२

यानानि वाहनं चैव तदर्हाय ददन्नरः ।
पादरोगपरिक्लेशान् मुक्तश्श्वसनवाहवान् ॥ २९३

विचित्रं रमणीयं च लभते यानवाहनम् ॥ २९३॥

प्रतिश्रयप्रदानं च तदर्हाय तदिच्छते ।
वर्षाकाले तु रात्रौ वा लभेत् पक्षबलं शुभम् ॥ २९४॥

सेतुकूपतटाकानां कर्ता तु लभते नरः ।
दीर्घायुष्यं च सौभाग्यं तथा प्रेत्य गतिं शुभाम् ॥ २९५॥

---

1. ख—अर्धचतुष्टयं नास्ति

वृक्षसंरोपको यस्तु छायापुष्पफलप्रदः ।
प्रेत्यभावे लभेत् पुण्यम् अभिगम्यो भवेन्नरः ॥ २९६॥

यस्तु सङ्क्रमकृल्लोके नदीषु जलहारिणाम् ।
लभेत् पुण्यफलं प्रेत्य व्यसनेभ्यो विमोक्षणम् ॥ २९७॥

मार्गकृत् सततं मर्त्यो भवेत् सन्तानवान् पुनः ।
कायदोषविमुक्तस्तु तीर्थकृत् सततं भवेत् ॥ २९८॥

औषधानां प्रदानात्तु सततं कृपयाऽन्वितः ।
भवेद्व्याधिविहीनश्च दीर्घायुश्च विशेषतः ॥ २९९॥

अनाथान् पोषयेद्यस्तु कृपणान्धकपङ्गुकान् ।
स तु पुण्यफलं प्रेत्य लभते कृच्छ्रमोक्षणम् ॥ ३००॥

वेदगोष्ठास्सभाश्शाला भिक्षूणां च प्रतिश्रयम् ।
यः कुर्याल्लभते नित्यं नरः प्रेत्य शुभं फलम् ॥ ३०१॥

प्रासादवासं विविधं पक्षशोभां लभेत् पुनः ॥ ३०२

विविधं विविधाकारं भक्ष्यभोज्यगुणान्वितम् ।
रम्यं सदैव [1]गोवाटं यः कुर्याल्लभते नरः ॥ ३०३

प्रेत्यभावे शुभां जातिं व्याधिमोक्षं तथैव च ॥ ३०३॥

एवं नानाविधं द्रव्यं दानकर्ता लभेत् फलम् ॥ ३०४

1. क—गोवासं ख—गोपालं

उमा—

कृतं दत्तं यथा यावत् तस्य तल्लभते फलम् ।
एतन्मे देवदेवेश तत्र कौतूहलं महत् ॥ ३०५

श्रीमहेश्वरः—

प्रेत्यभावे शृणु फलं दत्तस्य च कृतस्य च ।
दानं षड्गुणयुक्तं तु तदर्हाय यथाविधि ॥ ३०६
यथाविभवतो दानं दातव्यमिति मानवैः ॥ ३०६॥
बुद्धिमायुष्यमारोग्यं बलं भाग्यं तथाऽऽगमम् ।
रूपेण सप्तधा भूत्वा मानुष्यं फलति ध्रुवम् ॥ ३०७॥
इदं दत्तमिदं देयम् इत्येवं फलकाङ्क्षया ।
यद्दत्तं तत्तदेव स्यान्न तु किञ्चन लभ्यते ॥ ३०८॥
ध्रुवं देव्युत्तमे दाने मध्यमे त्वधमं फलम् * ॥ ३०९

उमा—

भगवन् देवदेवेश विशिष्टं यज्ञमुच्यते ।
लौकिकं वैदिकं चैव तन्मे शंसितुमर्हसि ॥ ३१०

श्रीमहेश्वरः—

देवतानां तु पूजा या यज्ञेष्वेव समाहिता ।
यज्ञा वेदेष्वधीताश्च वेदा ब्राह्मणसंयुताः ॥ ३११

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

इदं तु सकलं [1]द्रव्यं दिवि वा भुवि वा प्रिये ।
यज्ञार्थं विद्धि तत् सृष्टं लोकानां हितकाम्यया ॥ ३१२

एवं विज्ञाय तत् कर्ता सदारस्सततं द्विजः ।
प्रेत्यभावे लभेल्लोकान् ब्रह्मकर्मसमाधिना ॥ ३१३

ब्राह्मणेष्वेव तद्ब्रह्म नित्यं देवि समाहितम् ॥ ३१३॥

तस्माद्विप्रैर्यथाशास्त्रं विधिदृष्टेन कर्मणा ।
यज्ञकर्म कृतं सर्वं देवता अभितर्पयेत् ॥ ३१४॥
ब्राह्मणाः क्षत्रियाश्चैव यज्ञार्थं प्रायशस्स्मृताः ॥ ३१५

अग्निष्टोमादिभिर्यज्ञैर् वेदेषु परिकल्पितैः ।
सुशुद्धैर्यजमानैश्च ऋत्विग्भिश्च यथाविधि ॥ ३१६

शुद्धैर्द्रव्योपकरणैर् यष्टव्यमिति निश्चयः ॥ ३१६॥

तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत् ।
तुष्टेषु सर्वदेवेषु यज्वा यज्ञफलं लभेत् ॥ ३१७॥

देवास्सन्तोषिता यज्ञैर् लोकान् संवर्धयन्त्युत ।
उभयोर्लोकयोः प्रीतिर् देवि यज्ञे प्रदृश्यते ॥ ३१८॥

तस्माद्यज्वा दिवं गत्वा अमरैस्सह मोदते ।
नास्ति यज्ञसमं दानं नास्ति यज्ञसमो निधिः ॥ ३१९॥

सर्वधर्मसमुद्देशो देवि यज्ञे समाहितः ।

---

1. अ-क-ख—दिव्यं

एषा यज्ञकृता पूजा लौकिकीमपरां शृणु ॥ ३२०॥

देवसत्कारमुद्दिश्य क्रियते लौकिकोत्सवः ॥ ३२१

देवगोष्ठेऽधिसंस्कृत्य चोत्सवं यः करोति वै ।

यागान् देवोपहारांश्च शुचिर्भूत्वा यथाविधि ॥ ३२२

देवान् सन्तोषयित्वा स देवि धर्ममवाप्नुयात् ॥ ३२२॥

गन्धमाल्यैश्च विविधैः परमान्नेन धूपनैः ।

बह्वीभिस्स्तुतिभिश्चैव स्तुवद्भिः प्रयतैर्नरैः ॥ ३२३॥

नृत्तैर्वाद्यैश्च गान्धर्वैर् अन्यैर्दृष्टिविलोभनैः ।

देवसत्कारमुद्दिश्य कुर्वते ये नरा भुवि ॥ ३२४॥

तेषां भक्तिकृतेनैव सत्कारेणैव पूजिताः ।

तेनैव तोषं संयान्ति देवि देवास्त्रिविष्टपे ॥ ३२५॥

मानुषैश्चोप[1]चारैर्वा शुचिभिस्सत्परायणैः ।

ब्रह्मचर्यपरैरेतत् कृतं धर्मफलं लभेत् ॥ ३२६॥

केवलैस्स्तुतिभिर्देवि गन्धमाल्यसमाहितैः ।

प्रयतैश्शुद्धगात्रैस्तु शुद्धदेशे सुपूजिताः ॥ ३२७॥

सन्तोषं यान्ति ते देवा भक्तैस्सम्पूजितास्तथा ॥ ३२८

देवान् सन्तोषयित्वैव देवि धर्ममवाप्नुयात् ॥ ३२८॥

---

1. क-ख-घ—कारै

उमा—

त्रिविष्टपस्था वै भूमौ देवा मानुषचेष्टितम् ।

कथं ज्ञास्यन्ति विधिवत् तन्मे शंसितुमर्हसि ॥ ३२९॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि यथा तैर्ज्ञायते प्रिये ॥ ३३०

प्राणिनां तु शरीरेषु अन्तरात्मा व्यवस्थितः ।

आत्मानं परमं देवम् इति विद्धि शुभेक्षणे ॥ ३३१

आत्मा मनोऽव्यवस्थानात् सर्वं वेत्ति शुभाशुभम् ।

आत्मैव देवास्तद्विद्युर् अव्यग्रमनसा कृतम् ॥ ३३२

सतां मनोऽव्यवस्थानाच् छुभं भवति वै नृणाम् ।

तस्माद्देवा हि सम्पूज्या ब्राह्मणानां तथैव च ॥ ३३३

यज्ञाश्च धर्मकार्याणि गुरुपूजा च शोभने ॥ ३३३॥

शुद्धगात्रैर्व्रतयुतैस् तन्मयैस्तत्परायणैः ।

एवं व्यवस्थितैर्नित्यं कर्तव्यमिति निश्चयः ॥ ३३४॥

एवं कृत्वा शुभाकाङ्क्षी परत्रेह च मोदते ।

अन्यथा मन आवेश्य कृतं न फलति प्रिये ॥ ३३५॥

कृतेऽपि तु मनो देवि अशुभं फलति ध्रुवम् ॥ ३३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

[ अस्मिन्नध्याये ३३६ श्लोकाः ]

## ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति श्राद्धविधानादिकथनम् ॥ १ ॥ तथा दानवैविध्यात्तत्फलवैविध्यादिकथनम् ॥ २ ॥ दानफलस्य पञ्चविधत्वप्रतिपादनम् ॥ ३ ॥ नानाधर्मतत्फलप्रतिपादनम् ॥ ४ ॥ भद्राश्वकेतुमालादिखण्डानां सुकृतिनां भोगस्थानत्वादिप्रतिपादनम् ॥ ५ ॥

उमा—

[1]पितृमेधः कथं देव तन्मे शंसितुमर्हसि ।
सर्वेषां पितरः पूज्यास् सर्वसम्पत्प्रदायिनः ॥ १

श्रीमहेश्वरः—

पितृमेधं प्रवक्ष्यामि यथावत्तन्मनाश्शृणु ।
देशकालौ विधानं च तत् क्रियायाश्शुभाशुभम् ॥ २

लोकेषु पितरः पूज्या देवतानां च देवताः ।
शुचयो निर्मलाः पुण्या दक्षिणां दिशमाश्रिताः ॥ ३

यथा वृष्टिं प्रतीक्षन्ते भूमिष्ठास्सर्वजन्तवः ।
पितरश्च तथा लोके पितृमेधं शुभेक्षणे ॥ ४

तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती ।
प्रभासं पुष्करं चेति तेषु दत्तं महाफलम् ॥ ५

तीर्थानि सरितः पुण्या विविक्तानि वनानि च ।
नदीनां पुलिनानीति देशाश्श्राद्धस्य पूजिताः ॥ ६

1. ख—देवदेव जगन्नाथ भगवन् प्राणनायक । [ अधिकः पाठः ]

माघप्रोष्ठपदौ मासौ श्राद्धकर्मणि पूजितौ ।
पक्षयोः कृष्णपक्षश्च पूर्वपक्षात् प्रशस्यते ॥ ७
अमावास्यां त्रयोदश्यां नवम्यां प्रतिपत्सु च ।
तिथिष्वेतासु तुष्यन्ति दत्तेनेह पितामहाः ॥ ८
पूर्वाह्णे शुक्लपक्षे च रात्रौ जन्मदिनेषु वा ।
युग्मेष्वहस्सु च श्राद्धं न च कुर्वीत पण्डितः ॥ ९
एष कालो मया प्रोक्तः पितृमेधस्य पूजितः ।
यस्मिंश्च ब्राह्मणं पात्रं पश्येत् कालस्स च स्मृतः ॥ १०
अपाङ्क्तेया द्विजा वर्ज्या ग्राह्यास्ते पङ्क्तिपावनाः ।
भोजयेद्यदि पापिष्ठान् श्राद्धेषु नरकं व्रजेत् ॥ ११
वृत्तश्रुतकुलोपेतान् सकलत्रान् गुणान्वितान् ।
तदर्हाञ् श्रोत्रियान् विद्धि ब्राह्मणानयुजश्शुभे ॥ १२
एतान् निमन्त्रयेद् विद्वान् पूर्वेद्युः प्रातरेव वा ।
ततश्श्राद्धक्रियां पश्चाद् आरभेत यथाविधि ॥ १३
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ॥ १४
कुतपः खड्गपात्रं च कुशा दर्भास्तिला मधु ।
कालशाकं गजच्छाया पवित्रं श्राद्धकर्मसु ॥ १५
तिलानवाकिरेत् तत्र नानावर्णान् समन्ततः ।

[1]अशुद्धमपवित्रं च तिलैश्शुध्यति शोभने ॥ १६

नीलकाषायवस्त्रं च भिन्नवर्णं नवव्रणम् ।
हीनाङ्गमशुचिं वाऽपि वर्जयेत्तत्र दूरतः ॥ १७

कुक्कुटांश्च वराहांश्च नग्नं क्लीबं रजस्वलाम् ।
आयसं त्रपु सीसं च श्राद्धकर्मणि वर्जयेत् ॥ १८

मांसैः प्रीणन्ति पितरो मुद्गमाषयवैरिह ।
शशरौरवमांसेन षण्मासं तृप्तिरिष्यते ॥ १९

[2]संवत्सरं च गव्येन हविषा पायसेन च ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ २०

आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
पायसं सतिलं क्षौद्रं खड्गमांसेन सम्मितम् ॥ २१

महाशकलिनो मत्स्याश्छागो वा सर्वलोहितः ।
कालशाककमित्येव तदानन्त्यं प्रकल्पितम् ॥ २२

सापूपं सामिषं स्निग्धम् आहारमुपकल्पयेत् ।
उपकल्प्य तदाहारं ब्राह्मणानर्चयेत्ततः ॥ २३

श्मश्रुकर्मशिरस्स्नातान् समारोप्यासनं क्रमात् ।
सुगन्धमाल्याभरणैस् स्रग्भिरेतान् विभूषयेत् ॥ २४

1. क-ख-ब—अशुद्धपितृकश्चेति

2. अ-ख—इदमर्धं नास्ति

अलङ्कृत्योपविष्टांस्तान् पिण्डावापं निवेदयेत् ॥ २४॥

ततः प्रस्तीर्य दर्भाणां प्रस्तरं दक्षिणामुखम् ।
तत्समीपेऽग्निमिद्ध्वा च स्वधां च जुहुयात्ततः ॥ २५॥

समीपे त्वग्नीषोमाभ्यां पितृभ्यो जुहुयात् तदा ॥ २६

तथा दर्भेषु पिण्डांस्त्रीन् निर्वपेद्दक्षिणामुखः ।
अपसव्यमपाङ्गुष्ठं नामधेयपुरस्कृतम् ॥ २७

एतेन विधिना दत्तं पितृणामक्षयं भवेत् ।
ततो विप्रान् यथाशक्ति पूजयेन्नियतश्शुचिः ॥ २८

सदक्षिणं ससम्भारं यथा तुष्यन्ति ते द्विजाः ॥ २८॥

यत्र तत् क्रियते तत्र न जल्पेन्न जपेन्मिथः ।
नियम्य वाचं देहं च श्राद्धकर्म समारभेत् ॥ २९॥

ततो निर्वपने वृत्ते तान् पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत् ॥ ३०॥

पत्नीं वा मध्यमं पिण्डं पुत्रकामां हि प्राशयेत् ।
आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ॥ ३१॥

तृप्तानुत्थाप्य तान् विप्रान् अन्नशेषं निवेदयेत् ।
तच्छेषं बहुभिः पश्चात् सभृत्यो भक्षयेन्नरः ॥ ३२॥

एष प्रोक्तस्समासेन पितृयज्ञस्सनातनः ।
पितरस्तेन तुष्यन्ति कर्ता च फलमाप्नुयात् ॥ ३३॥

अहन्यहनि वा कुर्यान्मासे मासेऽथवा पुनः ।
संवत्सरं[1] द्विः कुर्याच्च चतुर्वाऽपि स्वशक्तितः ॥ ३४॥

दीर्घायुश्च भवेत् स्वस्थः पितृमेधेन [2]वा पुनः ।
[3]सपुत्रो बहुभृत्यश्च प्रभूतधनधान्यवान् ॥ ३५॥

श्राद्धदस्स्वर्गमाप्नोति निर्मलं विविधात्मकम् ।
अप्सरोगणसङ्घुष्टं विरजस्कमनन्तरम् ॥ ३६॥

श्राद्धानि पुष्टिकामा वै ये प्रकुर्वन्ति पण्डिताः ।
तेषां पुष्टिं प्रजां चैव दास्यन्ति पितरस्सदा ॥ ३७॥

धन्यं यशस्यमायुष्यं स्वर्ग्यं शत्रुविनाशनम् ।
कुलसन्धारकं चेति श्राद्धमाहुर्मनीषिणः ॥ ३८॥

उमा—

भगवन् देवदेवेश मृतास्ते भुवि जन्तवः ।
नानाजातिषु जायन्ते शीघ्रं कर्मवशात् पुनः ॥ ३९॥

पितरस्त्वस्ति ते तत्र कथं तिष्ठन्ति देववत् ।
पितॄणां कतमो देशः पिण्डानश्नन्ति ते कथम् ॥ ४०॥

अन्ने दत्ते मृतानां तु कथमाप्यायनं भवेत् ।
एवं मया संशयितं भगवन् वक्तुमर्हसि ॥ ४१॥

---

1. ख—संवत्सरस्य द्विः कुर्यात्; अ—द्विजः कुर्यात्
2. क-घ—मानवः
3. ख—सुपुत्रो बहुपुत्रश्च

नारदः—

एतद्विरुद्धं पृच्छन्त्यां रुद्राण्यां परिषद्भृशम् ।
बभूव सर्वा मुदिता श्रोतुं हि परमं हितम् ॥ ४२॥

श्रीमहेश्वरः—

स्थाने संशयितं देवि शृणु कल्याणि तत्त्वतः ।
गुह्यानां परमं गुह्यं हितानां परमं हितम् ॥ ४३॥

यथा देवगणा देवि तथा पितृगणाः प्रिये ।
दक्षिणस्यां दिशि शुभे सर्वे पितृगणास्स्थिताः ॥ ४४॥

प्रेतानुद्दिश्य या पूजा क्रियते मानुषैरिह ।
तेन तुष्यन्ति पितरो न प्रेताः पितरस्स्मृताः ॥ ४५॥

उत्तरस्यां यथा देवा रमन्ते यज्ञकर्मभिः ।
दक्षिणस्यां तथा देवि तुष्यन्ति विविधैर्मखैः ॥ ४६॥

द्विविधं क्रियते कर्म हव्यकव्यसमाश्रितम् ।
तयोर्हव्यक्रिया देवान् कव्यमाप्यायते पितॄन् ॥ ४७॥

प्रसव्यं मङ्गलैर्द्रव्यैर् हव्यकर्म विधीयते ।
[1]अपसव्यममङ्गल्यैः कव्यं चापि विधीयते ॥ ४८॥

सदेवासुरगन्धर्वाः पितॄनभ्यर्चयन्ति च ।
आप्यायन्ते च ते श्राद्धैः पुनराप्याययन्ति तान् ॥ ४९॥

---

1. ख—इदमर्धं नास्ति

अनिष्ट्वा च पितॄन् पूर्वं यः क्रियां प्रकरोति चेत् ।
रक्षांसि च पिशाचाश्च फलं भोक्ष्यन्ति तस्य तत् ॥ ५०॥

हव्यकव्यक्रियास्तस्मात् कर्तव्या भुवि मानुषैः ।
कर्मक्षेत्रं हि मानुष्यं तदन्यत्र न विद्यते ॥ ५१॥

कव्येन सन्ततिर्दृष्टा हव्ये भूतिः पृथग्विधा ।
इति ते कथितं देवि देवगुह्यं सनातनम् * ॥ ५२॥

उमा—

एवं कृतस्य धर्मस्य श्रोतुमिच्छाम्यहं प्रभो ।
प्रमाणं फलमानानां तन्मे शंसितुमर्हसि ॥ ५३॥

श्रीमहेश्वरः—

प्रमाणकल्पनां देवि दानस्य शृणु भामिनि ॥ ५४

यत्सारस्तु नरो लोके तद्दानं चोत्तमं स्मृतम् ।
सर्वदानविधिं प्राहुस् तदेव भुवि शोभने ॥ ५५

प्रस्थं [1]धनं दरिद्रस्य शतं कोटिधनस्य च ।
प्रस्थसारस्तु तत् प्रस्थं ददन्महदवाप्नुयात् ॥ ५६

कोटिसारस्तु तां कोटिं ददन्महदवाप्नुयात् ।
उभयं तन्महत्तच्च फलेनैव समं स्मृतम् ॥ ५७

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते
1. क-ख-घ—सारं

धर्मार्थकामभोगेषु शक्त्यभावस्तु मध्यमम् ।
स्वद्रव्यादतिहीनं तु तद्दानमधमं स्मृतम् ॥ ५८

शृणु दत्तस्य वै देवि पञ्चधा फलकल्पनाम् ।
आनन्त्यं च महच्चैव समं हीनं हि पातकम् ॥ ५९

तेषां विशेषं वक्ष्यामि शृणु देवि समाहिता ।
दुस्त्यजस्य च वै दानं पात्र आनन्त्यमुच्यते ॥ ६०

दानं षड्गुणयुक्तं तु महदित्यभिधीयते ।
यथाश्रद्धं तु वै दानं यथार्हं सममुच्यते ॥ ६१

गुणतस्तु तथा हीनं दानं हीनमिति स्मृतम् ।
दानं पातकमित्याहुष् षड्गुणानां विपर्यये ॥ ६२

देवलोके महत् कालम् आनन्त्यस्य फलं विदुः ।
महतस्तु तथा कालं स्वर्गलोके तु पूज्यते ॥ ६३

समस्य तु तदा दानं मानुष्यं भोगमावहेत् ।
दानं निष्फलमित्याहुर् विहीनं क्रियया शुभे ॥ ६४

अथवा म्लेच्छदेशेषु तत्र तत्फलतां व्रजेत् ।
नरकं प्रेत्य तिर्यक्षु गच्छेदशुभदानतः ॥ ६५

उमा—

अशुभस्यापि दानस्य शुभं स्याच्च फलं कथम् ॥ ६५॥

श्रीमहेश्वरः—

मनसा तत्त्वतश्शुद्धम् आनृशंस्यपुरस्सरम् ।
प्रीत्या तु सर्वदानानि दत्त्वा फलमवाप्नुयात् ॥ ६६॥

रहस्यं सर्वदानानाम् एतद्विद्धि शुभेक्षणे ।
अन्यानि धर्मकार्याणि शृणु सद्भिः कृतानि च ॥ ६७॥

आरामदेवगोष्ठानि सङ्क्रमाः कूप एव च ।
गोवाटश्च तटाकश्च सभा शाला च सर्वशः ॥ ६८॥

पाषण्डावसथश्चैव पानीयं गोतृणानि च ।
व्याधितानां च भैषज्यम् अनाथानां च पोषणम् ॥ ६९॥

अनाथशवसंस्कारस् तीर्थमार्गविशोधनम् ।
व्यसनाभ्यवपत्तिश्च सर्वेषां च स्वशक्तितः ॥ ७०॥

एतत् सर्वं समासेन धर्मकार्यमिति स्मृतम् ।
तत् कर्तव्यं मनुष्येण स्वशक्त्या श्रद्धया शुभे ॥ ७१॥

प्रेत्यभावे लभेत् पुण्यं नास्ति तत्र विचारणा ।
रूपं सौभाग्यमारोग्यं बलं सौख्यं लभेन्नरः ॥ ७२॥

[1]स्वर्गे वा मानुषे वाऽपि तैस्तैराप्यायते हि सः ॥ ७३

उमा—

भगवन् लोकपालेश [2]धर्मस्तु कतिभेदकः ।

---

1. क-घ—अर्धत्रयं नास्ति   2. ख—दानस्य कति

दृश्यते परितस्सद्भिस् तन्मे शंसितुमर्हसि ॥ ७४

श्रीमहेश्वरः—

शृणु देवि समुद्देशान् नानात्वं धर्मसङ्कटे ।
धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः ॥ ७५

स्मृतिधर्मश्च बहुधा सद्भिराचार इष्यते ॥ ७५॥

देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ।
जातिधर्माश्च वै धर्मा गणधर्माश्च शोभने ॥ ७६॥

शरीरकालवैषम्याद् आपद्धर्मश्च दृश्यते ।
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः ॥ ७७॥

कारणात् तत्रतत्रैव फलं धर्मस्य चेष्यते ।
तत्कारणसमायोगे लभेत् कुर्वन् फलं नरः ॥ ७८॥

अन्यथा न लभेत् पुण्यम् [1]अतदर्हस्समाविशेत् ।
एवं धर्मस्य नानात्वं फलं कुर्वँल्लँभेन्नरः ॥ ७९॥

श्रौतस्मार्तस्तु धर्माणां प्रकृतो धर्म उच्यते ।
इति ते कथितं देवि भूयश्श्रोतुं किमिच्छसि* ॥ ८०॥

उमा—

भगवन् सर्वभूतेश पुरमर्दन शङ्कर ।
श्रुतं पापकृतं दुःखं यमलोके वरप्रद ॥ ८१॥

---

1. ख—एतदेभ्यस्समा

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

श्रोतुमिच्छाम्यहं देव नृणां सुकृतकर्मणाम् ।
कथं ते भुञ्जते लोकान् स्वर्गलोके महेश्वर ॥ ८२॥

कथिताः कीदृशा लोका नृणां सुकृतकारिणाम् ।
एतन्मे वद देवेश श्रोतुं कौतूहलं हि मे ॥ ८३॥

श्रीमहेश्वरः—

शृणु कल्याणि तत् सर्वं यत्त्वमिच्छसि शोभने ।
विविधाः पुण्यलोकास्ते कर्मकर्मण्यतां गताः ॥ ८४॥

मेरुं हि कनकात्मानं परित[1]स्सर्वतोदिशम् ।
भद्राश्वः केतुमालश्च उत्तराः कुरवस्तथा ॥ ८५॥

जम्बूवनादयस्स्वर्गा इत्येते कर्मवर्जिताः ।
तेषु भूत्वा स्वयम्भूताः प्रदृश्यन्ते यतस्ततः ॥ ८६॥

योजनानां सहस्रं च एकैकं मानमात्रया ।
नित्यं पुष्पफलोपेतास् तत्र वृक्षास्समन्ततः ॥ ८७॥

आसक्तवस्त्राभरणास् सर्वे कनकसन्निभाः ।
द्विरेफाश्चाण्डजास्तत्र प्रवालमणिसन्निभाः ॥ ८८॥

विचित्राश्च मनोज्ञाश्च कूजितैश्शोभयन्ति तान् ॥ ८९

कुशेशयवनच्छन्ना नलिन्यश्च मनोरमाः ।
तत्र वात्यनिलो नित्यं दिव्यगन्धसुखावहः ॥ ९०

1. घ—स्सर्वशोभितम्

सर्वे चाम्लानमाल्याश्च विरजोम्बरसंवृताः ।
एवं बहुविधा देवि दिव्यभोगास्सुखावहाः ॥ ९१

स्त्रियश्च पुरुषाश्चैव सर्वे सुकृतकारिणः ।
रमन्ते तत्र चान्योन्यं कामरागसमन्विताः ॥ ९२

मनोहरा महाभागास् सर्वे ललितकुण्डलाः ।
एवं तत्र स्थिता मर्त्याः प्रमदाः प्रियदर्शनाः ॥ ९३

नानाभावसमायुक्ता यौवनस्थास्सदैव तु ।
युवत्यः कल्पितास्तत्र कामज्ञा ललितास्तथा ॥ ९४

मनोनुकूला मधुरा भोगिनामुपकल्पिताः ।
प्रमदाश्चोद्भवन्त्येव स्वर्गलोके यथा तथा ॥ ९५

एवंविधास्स्त्रियश्चात्र पुरुषाश्च परस्परम् ।
रमन्ते चेन्द्रियैस्स्वस्थैश् शरीरैर्भोगसंस्कृतैः ॥ ९६

कामहर्षगुणाभ्यस्ता नान्ये क्रोधादयः प्रिये ।
क्षुत्पिपासा न चास्त्यत्र गात्रक्लेशाश्च शोभने ॥ ९७

सर्वतो रमणीयं च सर्वत्र कुसुमान्वितम् ।
यावत् पुण्यफलं तावद् दृश्यन्ते तेषु सङ्गताः ॥ ९८
निरन्तरं भोगयुता रमन्ते स्वर्गवासिनः ॥ ९८॥

तत्र भोगान् यथायोगं भुक्त्वा पुण्यक्षयात् पुनः ।
नश्यन्ति जायमानास्ते शरीरैस्सहसा प्रिये ॥ ९९॥

स्वर्गलोकात् परिभ्रष्टा जायन्ते मानुषे पुनः ।
पूर्वपुण्यावशेषेण विशिष्टास्सम्भवन्ति ते ॥ १००॥

एषा स्वर्गगतिः प्रोक्ता पृच्छन्त्यास्तव भामिनि ।
अत ऊर्ध्वं पदान्यष्टौ स्वकर्माणि शृणु प्रिये ॥ १०१॥

भोगयुक्तानि पुण्यानि उच्छ्रितानि परस्परम् ॥ १०२

विद्याधराः किम्पुरुषा यक्षगन्धर्वकिन्नराः ।
अप्सरो दानवा देवा यथाक्रममुदाहृताः ॥ १०३

तेषु स्थानेषु जायन्ते प्राणिनः पुण्यकर्मणः ।
तेषामपि च ते लोकास् स्वर्गलोकोपमास्स्मृताः ॥ १०४

स्वर्गवत्तत्र ते भोगान् भुञ्जते च रमन्ति च ।
रूपसत्त्वबलोपेतास् सर्वे दीर्घायुषस्तथा ॥ १०५

तेषां सर्वक्रियारम्भो मानुषेष्विव दृश्यते ।
अतिमानुषमैश्वर्यम् अत्र मायाबलात्कृतम् ॥ १०६

जराप्रसूतिमरणं तेषु स्थानेषु दृश्यते ।
गुणदोषाश्च सन्त्यत्र आकाशगमनं तथा ॥ १०७

अन्तर्धानबलं सत्त्वम् आयुश्च चिरजीविता ।
तपोविशेषाज्जायन्ते यथा कर्मणि भामिनि ॥ १०८

देवलोके प्रवृत्तिस्तु तेषामेव विधीयते ।

न तथा देवलोको हि तद्विशिष्टास्सुरास्स्मृताः ॥ १०९

तत्र भोगमनिर्देश्यम् अमृतत्वं च विद्यते ।
विमानगमनं नित्यम् अप्सरोगणसेवितम् ॥ ११०

एवमन्यच्च तत् कर्म दैवतेभ्यो विशिष्यते ।
प्रत्यक्षं तव तत् सर्वं देवलोके प्रवर्तनम् ॥ १११

तस्मान्न वर्णये देवि विदितं च त्वया शुभे ।
तत् सर्वं सुकृतैरेव प्राप्यते चोत्तमं पदम् ॥ ११२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
[ अस्मिन्नध्याये ११२ श्लोकाः ]

## ॥ त्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति प्राणिनां शुभाशुभत्वनिश्चायकलिङ्गकथनम् ॥ १ ॥ प्राणिनां मरणस्य स्वाभाविकत्वयत्नसाध्यत्वभेदेन द्वैविध्यकथनपूर्वकं द्वितीयस्य योगादिना शरीरत्यागादिभेदेन चातुर्विध्यकथनेन तस्य महाफलहेतुत्वकथनम् ॥ २ ॥ कामक्रोधादिना शरीरत्यागस्य नरकभोगहेतुत्वकथनम् ॥ ३ ॥

---

उमा—

मानुषेष्वेव जीवत्सु गतिर्विज्ञायते न वा ।
यथा शुभगतिर्जीवन् नासौ त्वशुभभागिति ॥ १
एतदिच्छाम्यहं श्रोतुं तन्मे शंसितुमर्हसि ॥ १॥

श्रीमहेश्वरः—

तदहं ते प्रवक्ष्यामि जीवितं विद्यते यथा ।
द्विविधाः प्राणिनो लोके दैवासुरसमाश्रिताः ॥ २॥
मनसा कर्मणा वाचा प्रतिकूला भवन्ति ये ।
तादृशानासुरान् विद्धि मर्त्यास्ते नरकालयाः ॥ ३॥
हिंस्राश्चोराश्च धूर्ताश्च परदाराभिमर्शकाः ।
नीचकर्मरता ये च शौचमङ्गलवर्जिताः ॥ ४॥
शुचिविद्वेषिणः पापा लोकचारित्रदूषकाः ।
एवंयुक्तसमाचारा जीवन्तो नरकालयाः ॥ ५॥

लोकोद्वेगकराश्चान्ये पशवश्च सरीसृपाः ।
वृक्षाः कण्टकिनो रूक्षास् तादृशान् विद्धि चासुरान् ॥ ६॥
अपरान् देवपक्षांस्तु शृणु देवि समाहिता ॥ ७
मनोवाक्कर्मभिर्नित्यम् अनुकूला भवन्ति ये ।
तादृशानमरान् विद्धि ते नरास्स्वर्गगामिनः ॥ ८
[1]शौचार्जवपरा धीराः परार्थान् न हरन्ति ये ।
ये समास्सर्वभूतेषु ते नरास्स्वर्गगामिनः ॥ ९
[2]धार्मिकाश्शौचसम्पन्नाश् शुक्ला मधुरवादिनः ।
नाकार्यं मनसेच्छन्ति ते नरास्स्वर्गगामिनः ॥ १०
दरिद्रा अपि ये केचिद् याचिताः प्रीतिपूर्वकम् ।
ददत्येव च यत् किञ्चित् ते नरास्स्वर्गगामिनः ॥ ११
आस्तिका मङ्गलपरास् सततं वृद्धसेविनः ।
पुण्यकर्मपरा नित्यं ते नरास्स्वर्गगामिनः ॥ १२
निर्ममा निरहङ्कारास् सानुक्रोशास्स्वबन्धुषु ।
दीनानुकम्पिनो नित्यं ते नरास्स्वर्गगामिनः ॥ १३
स्वदुःखमिव मन्यन्ते परेषां दुःखवेदनम् ।
गुरुशुश्रूषणपरा देवब्राह्मणपूजकाः ॥ १४
कृतज्ञाः कृतविद्याश्च ते नरास्स्वर्गगामिनः ॥ १४॥

1. ख—अर्धद्वयं नास्ति 2. अ-क-ख—अर्धद्वयं नास्ति

जितेन्द्रिया जितक्रोधा जितमानमदास्तथा ।
लोभमात्सर्यहीना ये ते नरास्स्वर्गगामिनः ॥ १५॥

[1]शक्त्या चाभ्यवपद्यन्ते ते नरास्स्वर्गगामिनः ॥ १६

व्रतिनो दानशीलाश्च धर्मशीलाश्च मानवाः ।
ऋजवो मृदवो नित्यं ते नरास्स्वर्गगामिनः ॥ १७

ऐहिकेन तु वृत्तेन पारत्रमनुमीयते ।
एवंविधा नरा लोके जीवन्तस्स्वर्गगामिनः ॥ १८

यदन्यच्च शुभं लोके प्रजानुग्रहकारि च ।
पशवश्चैव वृक्षाश्च प्रजानां हितकारिणः ॥ १९

तादृशान् देवपक्षस्थान् इति विद्धि शुभानने ॥ १९॥

शुभाशुभमयं लोके सर्वं स्थावरजङ्गमम् ।
दैवं शुभमिति प्राहुर् आसुरं चाशुभं प्रिये* ॥ २०॥

उमा—

भगवन् मानुषाः केचित् कालधर्ममुपस्थिताः ।
प्राणमोक्षं कथं कृत्वा परत्र हितमाप्नुयुः ॥ २१॥

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
द्विविधं मरणं लोके स्वभावाद्यत्नतस्तथा ॥ २२॥

---

1. अ-क-घ—नास्तीदमर्धम्

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तयोस्स्वभावं नापायं यत्नतः करणोद्भवम् ।
एतयोरुभयोर्देवि विधानं शृणु शोभने ॥ २३॥

कल्याकल्यशरीरस्य यत्नजं द्विविधं स्मृतम् ।
यत्नजं नाम मरणम् आत्मत्यागो मुमूर्षया ॥ २४॥

[1]तत्राकल्यशरीरस्य जरा व्याधिश्च कारणम् ।
महाप्रस्थानगमनं तथा प्रायोपवेशनम् ॥ २५॥

जलावगाहनं चैव अग्निचित्याप्रवेशनम् ।
एवं चतुर्विधः प्रोक्त आत्मत्यागो मुमूर्षताम् ॥ २६॥

एतेषां क्रमयोगेन विधानं शृणु शोभने ॥ २७

स्वधर्मयुक्तं गार्हस्थ्यं चिरमूढ्वा विधानतः ।
तत्रानृण्यं च सम्प्राप्य वृद्धो वा व्याधितोऽपि वा ॥ २८

दर्शयित्वा स्वदौर्बल्यं सर्वानेवानुमान्य च ।
[2]सर्वं विहाय बन्धूंश्च कर्मणां भरणं तथा ॥ २९

दानानि विधिवत् कृत्वा धर्मकार्यार्थमात्मनः ।
अनुज्ञाप्य जनं सर्वं वाचा मधुरया ब्रुवन् ॥ ३०

अहतं वस्त्रमाच्छाद्य बद्ध्वा तत् कुशरज्जुना ।
उपस्पृश्य प्रतिज्ञाय व्यवसायपुरस्सरम् ॥ ३१

---

1. ख—अर्धचतुष्टयं नास्ति
2. ख—सर्वान् + क्रमणं भरणं तथा

परित्यज्य ततो ग्राम्यं धर्मं कुर्याद्यथेप्सितम् ॥ ३१॥

महाप्रस्थानमिच्छेच्चेत् प्रतिष्ठेतोत्तरां दिशम् ॥ ३२

भूत्वा तावन्निराहारो यावत् प्राणविमोक्षणम् ।
चेष्टाहानौ शयित्वाऽपि तन्मनाः प्राणमुत्सृजेत् ॥ ३३

एवं पुण्यकृतां लोकान् अमलान् प्रतिपद्यते ॥ ३३॥

प्रायोपवेशनं चेच्छेत् तेनैव विधिना नरः ।
देशे पुण्यतमे श्रेष्ठे निराहारस्तु संविशेत् ॥ ३४॥

आप्राणान्तं शुचिर्भूत्वा कुर्वन् दानं स्वशक्तितः ।
[1]हरिं स्मरंस्त्यजेत् प्राणान् एष धर्मस्सनातनः ॥ ३५॥

एवं कलेबरं त्यक्त्वा स्वर्गलोके महीयते ॥ ३६

अग्निप्रवेशनं चेच्छेत् तेनैव विधिना शुभे ।
कृत्वा काष्ठमयं चित्यं पुण्यक्षेत्रे नदीषु वा ॥ ३७

दैवतेभ्यो नमस्कृत्वा कृत्वा चापि प्रदक्षिणम् ।
भूत्वा शुचिर्व्यवसितस् [2]स्मरन्नारायणं हरिम् ॥ ३८

ब्राह्मणेभ्यो नमस्कृत्वा प्रविशेदग्निसंस्तरम् ॥ ३८॥

सोऽपि लोकान् यथान्यायं प्राप्नुयात् पुण्यकर्मणाम् ॥ ३९

जलावगाहनं चेच्छेत् तेनैव विधिना शुभे ।

---

1. अ-क-घ—पुण्यं परित्यजेत् प्राणान्
2. अ-क-घ—अयं पादोऽनन्तरश्च न स्तः

ख्याते पुण्यतमे तीर्थे निमज्जेत् सुकृतं स्मरन् ॥ ४०
सोऽपि पुण्यतमाँल्लोकान् निसर्गात् प्रतिपद्यते ॥ ४०॥
ततः कल्यशरीरस्य सन्त्यागं शृणु तत्त्वतः ॥ ४१
रक्षार्थं क्षत्रियस्येष्टः प्रजापालनकारणात् ।
योधानां भर्तृपिण्डार्थं गुर्वर्थं ब्रह्मचारिणाम् ॥ ४२
गोब्राह्मणार्थं सर्वेषां प्राणत्यागो विधीयते ॥ ४२॥
स्वराज्यरक्षणार्थं वा कुनृपैः पीडिताः प्रजाः ।
मोक्तुकामस्त्यजेत् प्राणान् युद्धमार्गे यथाविधि ॥ ४३॥
सुसन्नद्धो व्यवसितस् सम्प्रविश्यापराङ्मुखः ॥ ४४
एवं राजा मृतस्सद्यस् स्वर्गलोके महीयते ।
तादृशी सुगतिर्नास्ति क्षत्रियस्य विशेषतः ॥ ४५
भृत्यो वा भर्तृपिण्डार्थं भर्तृकर्मण्युपस्थिते ।
कुर्वंस्तत्र तु साहाय्यम् आत्मप्राणानपेक्षया ॥ ४६
स्वाम्यर्थे सन्त्यजेत् प्राणान् पुण्याँल्लोकान् स गच्छति ॥ ४६॥
स्पृहणीयस्सुरगणैस् तत्र नास्ति विचारणा ।
एवं गोब्राह्मणार्थं वा दीनार्थं वा त्यजेत्तनुम् ॥ ४७॥
सोऽपि पुण्यमवाप्नोति आनृशंस्यव्यपेक्षया ।
इत्येते जीवितत्यागे मार्गास्ते समुदाहृताः ॥ ४८॥
कामात् क्रोधाद्भयाद्वाऽपि यदि चेत् सन्त्यजेत्तनुम् ।

सोऽनन्तं नरकं याति आत्महन्तृत्वकारणात् ॥ ४९॥

स्वभावं मरणं नाम न तु चात्मेच्छया भवेत् ।
यथा मृतानां यत् कार्यं तन्मे शृणु यथाविधि ॥ ५०॥

तत्रापि मरणं त्यागो मूढत्यागाद्विशिष्यते ।
भूमौ संवेशयेद्देहं नरस्य विनशिष्यतः ॥ ५१॥

निर्जीवं वृणुयात् सद्यो वाससा तु कलेवरम् ।
माल्यगन्धैरलङ्कृत्य सुवर्णेन च भामिनि ॥ ५२॥

श्मशाने दक्षिणे देशे चिताग्नौ प्रदहेन्मृतम् ।
अथवा निक्षिपेद्भूमौ शरीरं जीववर्जितम् ॥ ५३॥

दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षूणां प्रशस्तानि विपरीतं तु गर्हितम् ॥ ५४॥

औदकं चाष्टकाश्राद्धं बहुभिर्बहुभिः कृतम् ।
आप्यायनं मृतानां तत् परलोके भवेच्छुभम् ॥ ५५॥

एतत् सर्वं मया प्रोक्तं मानुषाणां हितं वचः ॥ ५६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
[अस्मिन्नध्याये ५६ श्लोकाः]

## ॥ एकत्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति नानाधर्माणामपि प्रत्येकं साफल्यकथनेन तेषु मोक्षधर्मस्यैव श्रैष्ठ्यप्रतिपादनम् ॥ १ ॥ तथा ज्ञानस्य मोक्षसाधनत्वकथनपूर्वकं तत्प्राप्त्युपायकथनम् ॥ २ ॥ जरामरणतारणस्य निर्वाणैकसाध्यत्वोक्त्या तस्य ज्ञानैकसाध्यत्वप्रतिपादनेनेन्द्रियनिग्रहादिना वैराग्यस्य तत्कारणत्वोक्तिः ॥ ३ ॥

उमा—

देवदेव नमस्तेऽस्तु कालसूदन शङ्कर ।
लोकेषु विविधा धर्मास् त्वत्प्रसादान्मया श्रुताः ॥ १

विशिष्टं सर्वधर्मेभ्यश् शाश्वतं ध्रुवमव्ययम् ।
श्रोतुमिच्छाम्यहं सर्वम् अत्र मुह्यति मे मनः ॥ २

केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थं पुनः केचिद् गार्हस्थ्यं केचिदाश्रमम् ॥ ३

राजधर्माश्रयं केचित् केचित् स्वाध्यायमेव च ।
ब्रह्मचर्याश्रमं केचित् केचिद्वाक्संयमाश्रयम् ॥ ४

मातरं पितरं केचित् सेवमाना दिवं गताः ।
अहिंसया परस्स्वर्गे सत्येन च महीयते ॥ ५

आहवेऽभिमुखाः केचिन्निहतास्त्रिदिवं गताः ।

केचिदुञ्छव्रतैस्सिद्धास् स्वर्गमार्गं समाश्रिताः ॥ ६

आर्जवेनापरे युक्ता महतां पूजने रताः ।
ऋजवो नाकपृष्ठे तु शुद्धात्मानः प्रतिष्ठिताः ॥ ७

एवं बहुविधैर्लोके [1]धर्माचारैस्सुसंवृतैः ।
ममापि मतिराविद्धा मेघलेखेव वायुना ॥ ८

एतस्मिन् संशयस्थाने संशयच्छेदकारि यत् ।
वचनं ब्रूहि देवेश निश्चयज्ञानसंज्ञितम् ॥ ९

नारदः—

एवं पृष्टस्त्वया देव्या महादेवः पिनाकधृक् ।
प्रोवाच मधुरं वाक्यं सूक्ष्ममध्यात्मसंश्रितम् ॥ १०

श्रीमहेश्वरः—

न्यायतस्त्वं महाभागे श्रोतुकामाऽसि निश्चयम् ।
एतदेव विशिष्टं ते यत्त्वं पृच्छसि मां प्रिये ॥ ११

सर्वत्र विहितो धर्मस् स्वर्गलोकफलाश्रितः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ १२

यस्मिन् यस्मिंश्च विषये यो यो याति विनिश्चयम् ।
तं तमेवाभिजानाति नान्यं धर्मं शुचिस्मिते ॥ १३

शृणु देवि समासेन मोक्षद्वारमनुत्तमम् ।

---

1. ख-घ—धर्मद्वा

एतद्धि सर्वधर्माणां विशिष्टं शुभमव्ययम् ॥ १४

नास्ति मोक्षात् परं देवि नास्ति मोक्षात् परा गतिः ।
सुखमात्यन्तिकं श्रेष्ठम् अनिवृत्तं च तद्विदुः ॥ १५

नात्र देवि जरा मृत्युश् शोको वा दुःखमेव वा ।
अनुत्तममचिन्त्यं च तद्देवि परमं सुखम् ॥ १६

ज्ञानानामुत्तमं ज्ञानं मोक्षज्ञानं विदुर्बुधाः ।
ऋषिभिर्देवसङ्घैश्च प्रोच्यते परमं पदम् ॥ १७

नित्यमक्षरमक्षोभ्यम् अजेयं शाश्वतं शिवम् ।
[1]विशन्ति तत् पदं प्राज्ञास् स्पृहणीयं सुरासुरैः ॥ १८

दुःखादिश्च दुरन्तश्च संसारोऽयं प्रकीर्तितः ।
शोकव्याधिजरादोषैर् मरणेन च संयुतः ॥ १९

यथा ज्योतिर्गणा व्योम्नि निवर्तन्ते पुनः पुनः ।
[2]एवं जीवा अमी लोके निवर्तन्ते पुनः पुनः ॥ २०

तस्य मोक्षस्य मार्गोऽयं श्रूयतां शुभलक्षणे ॥ २०॥

ब्रह्मादिस्थावरान्तश्च संसारो यः प्रकीर्तितः ।
संसारे प्राणिनस्सर्वे निवर्तन्ते यथा पुनः ॥ २१॥

तत्र संसारचक्रस्य मोक्षो ज्ञानेन दृश्यते ।
अध्यात्मतत्त्वविज्ञानं ज्ञानमित्यभिधीयते ॥ २२॥

1. ब—उशन्ति 2. क-ख-ब—इदमर्धद्वयं नास्ति

ज्ञानस्य ग्रहणोपायम् आचारं ज्ञानिनस्तथा ।
यथावत् सम्प्रवक्ष्यामि तत्त्वमेकमनाश्शृणु ॥ २३॥

ब्राह्मणः क्षत्रियो वाऽपि भूत्वा पूर्वं गृहे स्थितः ।
आनृण्यं सर्वतः प्राप्य ततस्तान् सन्त्यजेद्गृहान् ॥ २४॥

ततस्सन्त्यज्य गार्हस्थ्यं निश्चितो वनमाश्रयेत् ॥ २५

वने गुरुं समाज्ञाय दीक्षितो विधिपूर्वकम् ।
दीक्षां प्राप्य यथान्यायं स्ववृत्तं परिपालयेत् ॥ २६

गृह्णीयादप्युपाध्यायान्मोक्षज्ञानमनिन्दितः ।
द्विविधं च पुनर्मोक्षं साङ्ख्यं योगमिति स्मृतिः ॥ २७

पञ्चविंशतिविज्ञानं साङ्ख्यमित्यभिधीयते ।
ऐश्वर्यं देवसारूप्यं योगशास्त्रस्य निर्णयः ॥ २८

तयोरन्यतरं ज्ञानं शृणुयाच्छिष्यतां गतः ॥ २८॥

नाकालो नाप्यकाषायी नाप्यसंवत्सरोषितः ।
नासाङ्ख्ययोगो नाश्राद्धं गुरुणा स्नेहपूर्वकम् ॥ २९॥

समश्शीतोष्णहर्षादीन् विषहेत स वै मुनिः ॥ ३०

अमृष्यः क्षुत्पिपासाभ्याम् उचितेभ्यो निवर्तयेत् ।
त्यजेत् सङ्कल्पजान् ग्रन्थीन् सदा ध्यानपरो भवेत् ॥ ३१

कुण्डिका चमसं शिक्यं छत्रं यष्टिमुपानहौ ।

चेलमित्येव नैतेषु स्थापयेत् स्वाम्यमात्मनः ॥ ३२

गुरोः पूर्वं समुत्तिष्ठेज् जघन्यं तस्य संविशेत् ।
नैवाविज्ञाप्य भर्तारम् आवश्यकमपि व्रजेत् ॥ ३३

द्विरह्नि स्नानशाटेन सन्ध्ययोरभिषेचनम् ।
एककालाशनं चास्य विहितं यतिभिः पुरा ॥ ३४

भैक्षं सर्वत्र गृह्णीयाच् चिन्तयेत् सततं निशि ।
कारणे चापि सम्प्राप्ते न कुप्येत कदाचन ॥ ३५

ब्रह्मचर्यं वने वासश् शौचमिन्द्रियसंयमः ।
दया च सर्वभूतेषु तस्य धर्मस्सनातनः ॥ ३६

विमुक्तस्सर्वपापेभ्यो लघ्वाहारो जितेन्द्रियः ।
आत्मयुक्तः परां बुद्धिं लभते पापनाशिनीम् ॥ ३७

यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ३८

अनिष्ठुरोऽनहङ्कारो निर्द्वन्द्वो वीतमत्सरः ।
वीतशोकभयाबाधः पदं प्राप्नोत्यनुत्तमम् ॥ ३९

तुल्यनिन्दास्तुतिर्मौनी समलोष्टाश्मकाञ्चनः ।
समश्शत्रौ च मित्रे च निर्वाणमधिगच्छति ॥ ४०

एवंयुक्तसमाचारस् तत्परोऽध्यात्मचिन्तकः ।

ज्ञानाभ्यासेन तेनैव प्राप्नोति परमां गतिम्* ॥ ४१

अनुद्विग्नमतेर्जन्तोर् अस्मिन् संसारमण्डले ।
शोकव्याधिजरादुःखैर् निर्वाणं नोपपद्यते ॥ ४२

तस्मादुद्वेगजननं मनोऽवस्थापनं तथा ।
ज्ञानं ते सम्प्रवक्ष्यामि तन्मूलममृतं हि वै ॥ ४३

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढम् आविशन्ति न पण्डितम् ॥ ४४

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायञ् शोकस्य पदमाव्रजेत् ॥ ४५

द्रव्येषु समतीतेषु ये शुभास्तान् न चिन्तयेत् ।
ताननाद्रियमाणस्य शोकबन्धः प्रणश्यति ॥ ४६

सम्प्रयोगादनिष्टस्य विप्रयोगात् प्रियस्य च ।
मानुषा मानसैर्दुःखैस् संयुज्यन्तेऽल्पबुद्धयः ॥ ४७

मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
सन्तापेन च युज्येत तच्चास्य न निवर्तते ॥ ४८

उत्पन्नमिह मानुष्ये गर्भप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥ ४९

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तयोरेकतरो मार्गो यद्येनमभिसंनमेत् ।
सुखं प्राप्य न संहृष्येन्न दुःखं प्राप्य सञ्ज्वरेत् ॥ ५०

दोषदर्शी भवेत्तत्र यत्र स्नेहः प्रवर्तते ।
अनिष्टेनान्वितं पश्येद् यथा क्षिप्रं विरज्यते ॥ ५१

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वज्ज्ञातिसमागमः ॥ ५२

अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
स्नेहस्तत्र न कर्तव्यो विप्रयोगो हि तैर्ध्रुवः ॥ ५३

कुटुम्बपुत्रदाराश्च शरीरं धनसञ्चयः ।
ऐश्वर्यं स्वस्थता चेति न मुह्येत्तत्र पण्डितः ॥ ५४

सुखमेकान्ततो नास्ति शक्रस्यापि त्रिविष्टपे ।
तत्रापि सुमहद्दुःखं सुखमल्पतरं भवेत् ॥ ५५

न नित्यं लभते दुःखं न नित्यं लभते सुखम् ।
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ॥ ५६

[1]क्षयान्ता निचयास्सर्वे पतनान्तास्समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ५७

उच्छ्रयान् विनिपातांश्च दृष्ट्वा प्रत्यक्षतस्स्वयम् ।
अनित्यमसुखं चेति व्यवस्येत् सर्वमेव च ॥ ५८

---

1. ख—अर्धद्वयं नास्ति

अर्थानामार्जने दुःखम् आर्जितानां तु रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ ५९

अर्थवन्तं नरं नित्यं पञ्चाभिघ्नन्ति शत्रवः ।
[1]राजा चोरश्च दायादा भूतानि क्षय एव च ॥ ६०

अर्थमेवमनर्थस्य मूलमित्यवधारय ।
न ह्यनर्थाः प्रबाधन्ते नरमर्थविवर्जितम् ॥ ६१

अर्थप्राप्तिर्महद्दुःखम् आकिञ्चिन्यं परं सुखम् ।
उपद्रवेषु चार्थानां दुःखं हि नियतं भवेत् ॥ ६२

धनलोभेन तृष्णाया न तृप्तिरुपलभ्यते ।
लब्धाश्रयो विवर्धेत समिद्ध इव पावकः ॥ ६३

जित्वाऽपि पृथिवीं कृत्स्नां चतुस्सागरमेखलाम् ।
सागराणां पुनः पारं जेतुमिच्छत्यसंशयम् ॥ ६४

अलं परिग्रहेणेह दोषवान् हि परिग्रहः ।
कोशकारः क्रिमिर्देवि बध्यते हि परिग्रहात् ॥ ६५

एकोऽपि पृथिवीं कृत्स्नाम् एकच्छत्रां प्रशास्ति च ।
एकस्मिन्नेव राष्ट्रे तु स चापि निवसेन्नृपः ॥ ६६

तस्मिन् राष्ट्रेऽपि नगरम् एकमेवाधितिष्ठति ।
नगरेऽपि गृहं चैकं भवेत्तस्य निवेशनम् ॥ ६७

---

1. अ—दाराश्चोरश्च

एक एव प्रदिष्टस्स्याद् आवासस्तद्गृहेऽपि च ।
आवासे शयनं चैकं निशि यत्र प्रलीयते ॥ ६८

शयनस्यार्धमेवास्य स्त्रियाश्चार्धं विधीयते ।
तदनेन प्रसङ्गेन स्वल्पेनैवेह युज्यते ॥ ६९

सर्वं ममेति सम्मूढो बलं पश्यति बालिशः ।
एवं सर्वोपयोगेषु स्वल्पमस्य प्रयोजनम् ॥ ७०

तण्डुलप्रस्थमात्रेण यात्रा स्यात् सर्वदेहिनाम् ।
तयोर्भूयस्तरो भोगो दुःखाय तपनाय च ॥ ७१

नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
सर्वान् कामान् परित्यज्य ब्रह्मभूयाय कल्पते ॥ ७२

या दुस्त्यजा दुर्मतिभिर् या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस् तां तृष्णां त्यजतस्सुखम् ॥ ७३

न जातुकामः कामानाम् उपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ७४

अलाभेनैव कामानां शोकं त्यजति पण्डितः ।
आयासविटपस्तीव्रः कामाग्निः कर्षणारणिः ॥ ७५

इन्द्रियार्थेन सम्मोह्य दहत्यकुशलं जनम् ॥ ७५॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवस्स्त्रियः ।

नालमेकस्य पर्याप्तम् इति पश्यन् न मुह्यति ॥　७६॥

यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतष्षोडशीं कलाम् ॥　७७॥

इन्द्रियाणीन्द्रियार्थेषु नैव धीरो नियोजयेत् ।
मनष्षष्ठानि संयम्य नित्यमात्मनि योजयेत् ॥　७८॥

इन्द्रियाणां विसर्गेण दोषमृच्छत्यसंशयम् ।
सन्नियम्य तु तान्येव ततस्सिद्धिमवाप्नुयात् ॥　७९॥

षण्णामात्मनि युक्तानाम् ऐश्वर्यं योऽधिगच्छति ।
न च पापैर्न चानर्थैस् संयुज्येत विचक्षणः ॥　८०॥

अप्रमत्तस्सदा रक्षेद् इन्द्रियाणि विचक्षणः ।
[1]अरक्षितेषु तेष्वाशु नरो नरकमेति हि ॥　८१॥

हृदि काममयश्चित्रो मोहसञ्चयसम्भवः ।
अज्ञानरूढमूलस्तु [2]विवित्सापरिषेचनः ॥　८२॥

रोषलोभमहास्कन्धः पुरा दुष्कृतसारवान् ।
आयासविटपस्तीव्रशोकपुष्पो भयाङ्कुरः ॥　८३॥

नानासङ्कल्पपत्राढ्यः प्रमादात् परिवर्धितः ।
महतीभिः पिपासाभिस् समन्तात् परिवेष्टितः ॥　८४॥

संरोहत्यकृतप्रज्ञे पादपः कामसम्भवः ॥　८५

1. अ—इदमर्धं नास्ति　　2. घ—विधित्सा

नैव रोहति तत्त्वज्ञे रूढो वा छिद्यते पुनः ॥ ८५॥

कृच्छ्रोपायेष्वनित्येषु निस्सारेषु फलेषु च ।
दुःखादिषु दुरन्तेषु कामयोगेषु का रतिः ॥ ८६॥

इन्द्रियेषु च जीर्यत्सु च्छिद्यमाने तथाऽऽयुषि ।
पुरस्ताच्च स्थिते मृत्यौ किं सुखं [1]पश्यतश्शुभे ॥ ८७॥

व्याधिभिः पीड्यमानस्य नित्यं शारीरमानसैः ।
नरस्याकृतकृत्यस्य किं सुखं मरणे सति ॥ ८८॥

[2]सञ्चिन्तयानमेवार्थं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवारण्ये मृत्युरादाय गच्छति ॥ ८९॥

जन्ममृत्युजरादुःखैस् सततं समभिद्रुतः ।
संसारे पच्यमानस्तु पापान्नोद्विजते जनः ॥ ९०॥

उमा—

केनोपायेन मर्त्यानां निवर्त्येते जरान्तकौ ।
यद्यस्ति भगवन् मह्यम् एतदाचक्ष्व मा चिरम् ॥ ९१॥

तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा केनात्येति जरान्तकौ ॥ ९२॥

श्रीमहेश्वरः—

नैतदस्ति महाभागे जरामृत्युनिवर्तनम् ।

---

1. अ-क-ग-घ—पश्यतासुखे 2. क-घ—सञ्चिन्वानं तमेवार्थं

सर्वलोकेषु जानीहि मोक्षादन्यत्र भामिनि ॥ ९३॥
न धनेन न राज्येन [1]नाग्र्येण तपसाऽपि वा ।
मरणं नातितरते विना मुक्त्या शरीरिणः ॥ ९४॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
न तरन्ति जरामृत्यू निर्वाणाधिगमाद्विना ॥ ९५॥
ऐश्वर्यं धनधान्यं च विद्यालाभस्तपस्तथा ।
रसायनप्रयोगो वा न तरन्ति जरान्तकौ ॥ ९६॥
दानयज्ञतपश्शीला रसायनविदोऽपि वा ।
स्वाध्यायनिरता वाऽपि न तरन्ति जरान्तकौ ॥ ९७॥
देवदानवगन्धर्वकिन्नरोरगराक्षसान् ।
स्ववशे कुरुते कालो न कालस्यास्त्यगोचरः ॥ ९८॥
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोऽयं प्रपद्यतेऽध्वानम् अजस्रं ध्रुवमव्ययम् ॥ ९९॥
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानाम् अहोरात्रेषु सन्ततम् ॥ १००॥
जीवितं सर्वभूतानाम् अक्षयः क्षपयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ १०१॥
यस्यां रात्र्यां व्यतीतायाम् आयुरल्पतरं भवेत् ।

1. क-ख-घ—नांग्रेण

गाधोदके मत्स्य इव किंनु तस्य कुमारता ॥ १०२॥

मरणं हि शरीरस्य नियतं ध्रुवमेव च ।
तिष्ठन्नपि क्षणं सर्वः कालस्यैति वशं पुनः ॥ १०३॥

न म्रियेरन् न जीर्येरन् यदि स्युस्सर्वदेहिनः ।
न चानिष्टं प्रवर्तेत शोको वा प्राणिनां क्वचित् ॥ १०४॥

अप्रमत्तः प्रमत्तेषु कालो भूतेषु तिष्ठति ।
अप्रमत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ १०५॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
कोऽपि तद्वेद यत्रासौ मृत्युना नाभिवीक्षितः ॥ १०६॥

वर्षास्विदं करिष्यामि इदं ग्रीष्मवसन्तयोः ।
इति बालश्चिन्तयति अन्तरायं न बुध्यते ॥ १०७॥

इदं मे स्यादिदं मे स्याद् इत्येवं मनसा नराः ।
अनवाप्तेषु कामेषु ह्रियन्ते मरणं प्रति ॥ १०८॥

कालपाशेन बद्धानाम् अहन्यहनि जीर्यताम् ।
का श्रद्धा प्राणिनां मार्गे विषमे भ्रमतां सदा ॥ १०९॥

युवैव धर्मशीलस्स्याद् अनिमित्तं हि जीवितम् ।
फलानामिव पक्वानां सदा हि पतनाद्भयम् ॥ ११०॥

मर्त्यस्य किमु तैर्दारैः पुत्रैर्भोगैः प्रियैरपि ।
एकाह्ना सर्वमुत्सृज्य मृत्योस्तु वशमन्वियात् ॥ १११॥

जायमानांश्च सम्प्रेक्ष्य म्रियमाणांस्तथैव च ।
न संवेगोऽस्ति चेत् पुंसः काष्ठलोष्टसमो हि सः ॥ ११२॥

विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यद्गच्छति सर्वमेवं
क्षणेन गत्वा न निवर्तते च ॥ ११३॥

एवं चिन्तयतो नित्यं सर्वार्थानामनित्यताम् ।
उद्वेगो जायते शीघ्रं निर्वाणस्य परस्परम् ॥ ११४॥

तेनोद्वेगेन चाप्यस्य विमर्शो जायते पुनः ।
विमर्शो नाम वैराग्यं सर्वद्रव्येषु जायते ॥ ११५॥

वैराग्येण परां शान्तिं लभन्ते मानवाश्शुभे ।
मोक्षस्योपनिषद्दिव्यं वैराग्यमिति निश्चितम् ॥ ११६॥

एतत्ते कथितं देवि वैराग्योत्पादनं वचः ।
एवं सञ्चिन्त्य सञ्चिन्त्य मुच्यन्ते हि मुमुक्षवः ॥ ११७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
[ अस्मिन्नध्याये ११७॥ श्लोकाः ]

---

## ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति साङ्ख्यज्ञानप्रतिपादनपूर्वकमव्यक्तादिचतुर्विंशतितत्त्वानामुत्पत्तिप्रकारादिकथनम् ॥ १ ॥ तथा सत्त्वादिगुणानां कार्यविशेषनिरूपणम् ॥ २ ॥ तथा भूतपञ्चकादिगुणप्रदिपादनम् ॥ ३ ॥

श्रीमहेश्वरः—

साङ्ख्यज्ञानं प्रवक्ष्यामि यथावत्ते शुचिस्मिते ।
यज्ज्ञात्वा न पुनर्मर्त्यस् संसारेषु प्रवर्तते ॥ १

ज्ञानेनैव विमुक्तास्ते साङ्ख्यास्सन्यासकोविदाः ।
शारीरं तु तपो घोरं साङ्ख्याः प्राहुर्निरर्थकम् ॥ २

पञ्चविंशतिकं ज्ञानं तेषां ज्ञानमिति स्मृतम् ।
मूलप्रकृतिरव्यक्तम् अव्यक्ताज्जायते महान् ॥ ३

महतोऽभूदहङ्कारस् तस्मात्तन्मात्रपञ्चकम् ।
इन्द्रियाणि दशैकं च तन्मात्रेभ्यो भवन्त्युत ॥ ४

तेभ्यो भूतानि पञ्चभ्यश् शरीरं वै प्रवर्तते ।
इति क्षेत्रस्य सङ्क्षेपश् चतुर्विंशतिरिष्यते ॥ ५

पञ्चविंशतिरित्याहुः पुरुषेणेह सङ्ख्यया ॥ ५॥

सत्त्वं रजस्तमश्चेति गुणाः प्रकृतिसम्भवाः ।

तैस्सृजत्यखिलं लोकं प्रकृति[1]स्स्वात्मजैर्गुणैः ॥ ६॥

इच्छा द्वेषस्सुखं दुःखं सङ्घातश्चेतना धृतिः ।
विकाराः प्रकृतेश्चैते वेदितव्या मनीषिभिः ॥ ७॥

लक्षणं चापि सर्वेषां विकल्पस्त्वादितः पृथक् ।
विस्तरेणैव वक्ष्यामि तस्य व्याख्यामहं श्रृणु ॥ ८॥

नित्यमेकमणु व्यापि क्रियाहीनमहेतुकम् ।
अग्राह्यमिन्द्रियैस्सर्वैर् एतदव्यक्तलक्षणम् ॥ ९॥

अव्यक्तं प्रकृतिर्मूलं प्रधानं योनिरव्ययम् ।
अव्यक्तस्यैव नामानि शब्दैः पर्यायवाचकैः ॥ १०॥

तत् सूक्ष्मत्वादनिर्देश्यं तत् सदित्यभिधीयते ।
तन्मूलं च जगत् सर्वं तन्मूला सृष्टिरिष्यते ॥ ११॥

सत्त्वादयः प्रकृतिजा गुणास्तान् प्रब्रवीम्यहम् ॥ १२

सुखं तुष्टिः प्रकाशश्च त्रयस्ते सात्त्विका गुणाः ।
रागद्वेषौ सुखं दुःखं स्तम्भश्च रजसो गुणाः ॥ १३

अप्रकाशो भयं मोहस् तन्द्री च तमसो गुणाः ॥ १३॥

श्रद्धा प्रहर्षो विज्ञानम् असम्मोहो दया धृतिः ।
सत्त्वे [2]प्रवृद्धे वर्धन्ते विपरीते विपर्ययः ॥ १४॥

---

1. ख—स्स्वात्मकैर्गुणैः;   घ—स्स्वात्मजैः

2. क-घ—प्रवृत्ते

कामक्रोधौ मनस्तापो लोभो मोहस्तथा मृषा ।
प्रवृद्धे परिवर्धन्ते रजस्येतानि सर्वशः ॥ १५॥

विषादस्संशयो मोहस् तन्द्री निद्रा भयं तथा ।
तमस्येतानि वर्धन्ते प्रवृद्धे हेत्वहेतुकम् ॥ १६॥

एवमन्योन्यमेतानि वर्धन्ते च पुनः पुनः ।
हीयन्ते च तथा नित्यम् अभिभूतानि भूरिशः ॥ १७॥

तत्र यत् प्रीतिसंयुक्तं कायेन मनसाऽपि वा ।
वर्तते सात्त्विको भाव इत्युपेक्षेत तत् तदा ॥ १८॥

यदा सन्तापसंयुक्तं चित्तक्षोभकरं भवेत् ।
[1]वर्तते रज इत्येव तदा तदभिचिन्तयेत् ॥ १९॥

यदा सम्मोहसंयुक्तं यद्विषादकरं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २०॥

समासात् सात्त्विको धर्मस् सामासाद्राजसं धनम् ।
समासात् तामसः कामस् त्रिवर्गे त्रिगुणाः क्रमात् ॥ २१॥

ब्रह्मादिदेवसृष्टिर्या सात्त्विकीति प्रकीर्त्यते ।
राजसी मानुषी सृष्टिस् तिर्यग्योनिस्तु तामसी ॥ २२॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ २३॥

1. अ—अर्धवयं नास्ति

देवमानुषतिर्यक्षु यद्भूतं सचराचरम् ।
आदिप्रभृति संयुक्तं व्याप्तमेभिस्त्रिभिर्गुणैः ॥ २४॥

अतः परं प्रवक्ष्यामि महदादीनि लिङ्गतः ।
विज्ञानं च विवेकश्च महतो लक्षणं भवेत् ॥ २५॥

[1]महान् बुद्धिर्मतिः प्रज्ञा नामानि महतो विदुः ।
अहङ्कारस्स विज्ञेयो लक्षणेन समासतः ॥ २६॥

अहङ्कारेण भूतानां सर्गो नानाविधो भवेत् ।
अहङ्कारनिवृत्तिर्हि निर्वाणायोपपद्यते ॥ २७॥

खं वायुरग्निस्सलिलं पृथिवी चेति पञ्चमी ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ २८॥

शब्दश्श्रोत्रं तथा खानि त्रयमाकाशसम्भवम् ।
स्पर्शवत् प्राणिनां चेष्टा पवनस्य गुणास्स्मृताः ॥ २९॥

रूपं पाकोऽक्षिणी ज्योतिश् चत्वारस्तेजसो गुणाः ।
रसस्स्नेहस्तथा जिह्वा शैत्यं च जलजा गुणाः ॥ ३०॥

गन्धो घ्राणं शरीरं च पृथिव्यास्ते गुणास्त्रयः ।
इति सर्वगुणा देवि विख्याताः पाञ्चभौतिकाः ॥ ३१॥

गुणान् पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तराणि तु ।
तस्मान्नैकगुणाश्चेह दृश्यन्ते भूतसृष्टयः ॥ ३२॥

---

1. अ—अर्धत्रयं नास्ति

उपलभ्याप्सु ये गन्धं केचिद्ब्रूयुरनैपुणाः ।
अपां गन्धगुणं प्राज्ञा नेच्छन्ति कमलेक्षणे ॥ ३३॥

तद्गन्धत्वमपां नास्ति पृथिव्या एव तद्गुणः ।
भूमिर्गन्धे रसे स्नेहो ज्योतिश्चक्षुषि संस्थितम् ॥ ३४॥

[1]प्राणापानाश्रयो वायुः खेष्वाकाशश्शरीरिणाम् ॥ ३५

केशास्थिनखदन्तत्वक्पाणिपादशिरांसि च ।
पृष्ठोदरकटिग्रीवास् सर्वं भूम्यात्मकं स्मृतम् ॥ ३६

यत् किञ्चिदपि कायेऽस्मिन् धातुदोषमलाश्रितम् ।
तत् सर्वं भौतिकं विद्धि देहैरेवास्य स्वामिकम् ॥ ३७

बुद्धीन्द्रियाणि कर्णत्वक्चक्षुर्जिह्वाऽथ नासिका ।
कर्मेन्द्रियाणि वाक्पाणिपादौ मेढ्रं गुदस्तथा ॥ ३८

शब्दस्स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
बुद्धीन्द्रियार्थाञ् जानीयाद् भूतेभ्यस्त्वभिनिस्सृतान् ॥ ३९

वाक्यं क्रिया गतिः प्रीतिर् उत्सर्गश्चेति पञ्चधा ।
कर्मेन्द्रियार्थाञ् जानीयात् ते च भूतोद्भवा मताः ॥ ४०

इन्द्रियाणां तु सर्वेषाम् ईश्वरं मन उच्यते ।
प्रार्थनालक्षणं तच्च इन्द्रियं तु मनस्स्मृतम् ॥ ४१

नियुङ्क्ते च सदा तानि भूतानि मनसा सह ।

1. ख—अर्धत्रयं नास्ति

नियमे च विसर्गे च मनसः कारणं प्रभुः ॥ ४२

इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतनाधृतिः ।

भूताभूतविकारश्च शरीरमिति संस्थितम् ॥ ४३

शरीराच्च परो देही शरीरं च व्यपाश्रितः ।

शरीरिणश्शरीरस्य सोऽन्तरं वेत्ति वै मुनिः ॥ ४४

रसस्स्पर्शश्च गन्धश्च रूपं शब्दविवर्जितम् ।

अशरीरं शरीरेषु दिदृक्षेत निरिन्द्रियम् ॥ ४५

अव्यक्तं सर्वदेहेषु मर्त्येष्वमरमाश्रितम् ।

यः पश्येत् परमात्मानं बन्धनैस्स विमुच्यते ॥ ४६

नैवायं चक्षुषा ग्राह्यो नापरैरिन्द्रियैरपि ।

मनसैव प्रदीपेन महानात्मा प्रदृश्यते ॥ ४७

स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।

वसत्येको महावीर्यो नानाभावसमन्वितः ॥ ४८

नैव चोर्ध्वं न तिर्यक् च नाधस्तान्न कदाचन ।

इन्द्रियैरिह बुद्ध्या वा न दृश्येत कदाचन ॥ ४९

नवद्वारं पुरं गत्वा सततं नियतो वशी ।

ईश्वरस्सर्वलोकेषु स्थावरस्य चरस्य च ॥ ५०

तमेवाहुरणुभ्योऽणुं तं महद्भ्यो महत्तरम् ।

बहुधा सर्वभूतानि व्याप्य तिष्ठति शाश्वतम् ॥ ५१

क्षेत्रज्ञमेकतः कृत्वा सर्वं क्षेत्रमथैकतः ।
एवं संविमृशेज्ज्ञानी संयतस्सततं हृदि ॥ ५२

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
अकर्ता लेपको नित्यो मध्यस्थस्सर्वकर्मणाम् ॥ ५३

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ ५४

अजरोऽयमचिन्त्योऽयम् अव्यक्तोऽयं सनातनः ।
देही तेजोमयो देहे तिष्ठतीत्यपरे विदुः ॥ ५५

ज्ञानमूष्मा च वायुश्च शरीरे जीवसंज्ञकः ।
इत्येते निश्चिता बुद्ध्या तत्रैते बुद्धिचिन्तकाः ॥ ५६

अपरे सर्वलोकांश्च व्याप्य तिष्ठन्तमीश्वरम् ।
ब्रुवते केचिदत्रैव तिलतैलवदास्थितम् ॥ ५७

अपरे नास्तिका मूढा भिन्नत्वात् स्थूललक्षणैः ।
नास्त्यात्मेति विनिश्चित्य प्रजास्ते निरयालयाः ॥ ५८

एवं नानाविधानेन विमृशन्ति महेश्वरम् ॥ ५८॥

उमा—

ऊहवान् ब्राह्मणो लोके नित्यमक्षरमव्ययम् ।
अस्त्यात्मा सर्वदेहेषु हेतुस्तत्र सुदुर्गमः ॥ ५९॥

श्रीमहेश्वरः—

ऋषिभिश्चापि देवैश्च व्यक्तमेष न दृश्यते ।

दृष्ट्वा तु तं महात्मानं पुनस्तत्र निवर्तते ॥ ६०॥

तस्मात्तद्दर्शनादेव विन्दते परमां गतिम् ।
इति ते कथितो देवि साङ्ख्यधर्मस्सनातनः ॥ ६१॥

कपिलादिभिराचार्यैस् सेवितः परमर्षिभिः ॥ ६२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
[ अस्मिन्नध्याये ६२ श्लोकाः ]

## ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति योगनिरूपणपूर्वकं तत्फलप्रतिपादनम् ॥

श्रीमहेश्वरः—

साङ्ख्यज्ञाने नियुक्तानां यथावत् कीर्तितं मया ।
योगधर्मं पुनः कृत्स्नं कीर्तयिष्यामि ते शृणु ॥ १

स च योगो द्विधा भिन्नो ब्रह्मदेवर्षिसम्मतः ।
समानमुभयत्रापि वृत्तं शास्त्रप्रचोदितम् ॥ २

स चाष्टगुणमैश्वर्यम् अधिकृत्य विधीयते ।
सायुज्यं सर्वदेवानां [1]योगधर्मः पराश्रितः ॥ ३

1. क-ध—यो धर्मं परमाश्रितः

ज्ञानं सर्वस्य योगस्य मूलमित्यवधारय ।
व्रतोपवासनियमैस् तत् सर्वं चापि बृंहयेत् ॥ ४

ऐकात्म्यं बुद्धिमनसोर् इन्द्रियाणां च सर्वशः ।
आत्मनोऽव्ययिनः प्राज्ञे ज्ञानमेतत्तु योगिनाम् ॥ ५

अर्चयेद्ब्राह्मणानग्निं देवतायतनानि च ।
वर्जयेदशिवं भावं सर्वसत्त्वमुपाश्रितः ॥ ६

दानमध्ययनं श्रद्धा व्रतानि नियमास्तथा ।
सत्यमाहारशुद्धिश्च शौचमिन्द्रियनिग्रहः ॥ ७

एतैश्च वर्धते तेजः पापं चाप्यवधूयते ॥ ७॥

निर्धूतपापस्तेजस्वी [1]निराहारो जितेन्द्रियः ।
[2]अमोघो निर्मलो दान्तः पश्चाद्योगं समाचरेत् ॥ ८॥

अवरुध्यात्मनः पूर्वं मत्स्यघात इवामिषम् ॥ ९

एकान्ते विजने देशे सर्वतस्संवृते शुचौ ।
कल्पयेदासनं तत्र स्वास्तीर्णं मृदुभिः कुशैः ॥ १०

उपविश्यासने तस्मिन्नृजुकायशिरोधरः ।
अव्यग्रस्सुखमासीनस् स्वाङ्गानि न विकम्पयेत् ॥ ११

सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ ११॥

---

1. ख—लब्ध्वा
2. ख—अशोको नि

मनोऽवस्थापनं देवि योगस्योपनिषद्भवेत् ।
तस्मात् सर्वप्रयत्नेन मनोऽवस्थापयेत् सदा ॥ १२॥

त्वक्छ्रोत्रं च ततो जिह्वां घ्राणं चक्षुश्च संहरेत् ।
पञ्चेन्द्रियाणि सन्धाय मनसि स्थापयेद्बुधः ॥ १३॥

सर्वं चापोह्य सङ्कल्पम् आत्मनि स्थापयेन्मनः ।
यदैतान्यवतिष्ठन्ते मनष्षष्ठानि चात्मनि ॥ १४॥

प्राणापानौ तदा तस्य युगपत्तिष्ठतो वशे ।
प्राणे हि वशमापन्ने योगसिद्धिर्ध्रुवा भवेत् ॥ १५॥

शरीरं चिन्तयेत् सर्वं विपाट्य च समीपतः ।
अन्तर्देहगतिं चापि प्राणानां परिचिन्तयेत् ॥ १६॥

ततो मूर्धानमग्निं च शरीरं परिपालयेत् ।
प्राणो मूर्धनि च श्वासो वर्तमानो विचेष्टते ॥ १७॥

सज्ञस्तु सर्वभूतात्मा पुरुषस्स सनातनः ।
मनो बुद्धिरहङ्कारो भूतानि विषयांश्च सः ॥ १८॥

बस्तिर्मूलं गुदं चैव पावकं च समाश्रितः ।
वहन् मूत्रं पुरीषं च सदाऽपानः प्रवर्तते ॥ १९॥

अथ प्रवृत्तिर्देहेषु कर्मापानस्य सम्मतम् ।
उदीरयन् सर्वधातून् अत ऊर्ध्वं प्रवर्तते ॥ २०॥

उदान इति तं विद्युर् अध्यात्मकुशला जनाः ॥ २१

सन्धौ सन्धौ स निर्विष्टस् सर्वचेष्टाप्रवर्तकः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ २२

धातुष्वग्नौ च विततस् समानोऽग्निस्समीरणः ।
स एव सर्वचेष्टानाम् अन्तकाले निवर्तकः ॥ २३

प्राणानां सन्निपातेषु संसर्गाद्यः प्रजायते ।
ऊष्मा सोऽग्निरिति ज्ञेयस् सोऽन्नं पचति देहिनाम् ॥ २४

अपानप्राणयोर्मध्ये व्यानोदानावुपाश्रितौ ।
समन्वितस्समानेन सम्यक् पचति पावकः ॥ २५

शरीरमध्ये नाभिस्स्यान्नाभ्यामग्निः प्रतिष्ठितः ।
अग्नौ प्राणाश्च संयुक्ता प्राणेष्वात्मा व्यवस्थितः ॥ २६

पक्वाशयस्त्वधो नाभेर् ऊर्ध्वमामाशयस्तथा ।
नाभिर्मध्ये शरीरस्य सर्वप्राणाश्च संश्रिताः ॥ २७

स्थिताः प्राणादयस्सर्वे तिर्यगूर्ध्वमधश्चराः ।
वहन्त्यन्नरसान्नाड्यो दशप्राणाग्निचोदिताः ॥ २८

योगिनामेष मार्गस्तु पञ्चस्वेतेषु तिष्ठति ।
जितश्रमस्समासीनो मूर्धन्यात्मानमादधेत् ॥ २९

मूर्धन्यात्मानमाधाय भ्रुवोर्मध्ये मनस्तथा ।
सन्निरुध्य ततः प्राणान् आत्मानं चिन्तयेत् परम् ॥ ३०

प्राणे त्वपानं युञ्जीत प्राणांश्चापानकर्मणि ।
प्राणापानगती रुद्ध्वा प्राणायामपरो भवेत् ॥ ३१

एवमन्तः प्रयुञ्जीत पञ्च प्राणान् परस्परम् ।
विजने सम्मिताहारो मुनिस्तूष्णीं निरुच्छ्वसन् ॥ ३२

अश्रान्तश्चिन्तयेद्योगी उत्थाय च पुनः पुनः ।
तिष्ठन् गच्छन् स्वपन् वाऽपि युञ्जीतैवमतन्द्रितः ॥ ३३

एवं नियुञ्जतस्तस्य योगिनो युक्तचेतसः ।
प्रसीदति मनः क्षिप्रं प्रसन्ने दृश्यते परम् ॥ ३४

विधूम इव दीप्तोऽग्निर् आदित्य इव रश्मिमान् ।
वैद्युतोऽग्निरिवाकाशे पुरुषो दृश्यतेऽव्ययः ॥ ३५

दृष्ट्वा तदा मनो ज्योतिर् ऐश्वर्याष्टगुणैर्युतः ।
प्राप्नोति परमं स्थानं स्पृहणीयं सुरैरपि ॥ ३६

इमान् योगस्य दोषांश्च दशैव परिचक्षते ।
दोषैर्विघ्नो वरारोहे योगिनां कविभिस्स्मृतः ॥ ३७

कामः क्रोधो भयं स्वप्नस् स्नेहमत्यशनं तथा ।
वैचित्यं व्याधिरालस्यं लोभश्च दशमस्स्मृतः ॥ ३८

एतैस्तेषां भवेद्विघ्नो दशभिर्दैवकारितैः ।
तस्मादेता[1]नपास्यादौ युञ्जीत च परं मनः ॥ ३९

---

1. ख—नपोह्यादौ

इमानपि गुणानष्टौ योगस्य परिचक्षते ।
गुणैस्तैरष्टभिर्दिव्यम् ऐश्वर्यमधिगम्यते ॥ ४०

अणिमा महिमा चैव प्राप्तिः प्राकाम्यमेव हि ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ॥ ४१

एतानष्टौ गुणान् प्राप्य कथञ्चिद्योगिनां वराः ।
ईशास्सर्वस्य लोकस्य देवानप्यतिशेरते ॥ ४२

योगोऽस्ति नैवात्यशिनो न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य नातिजागरतस्तथा ॥ ४३

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ ४४

अनेनैव विधानेन सायुज्यं तत् प्रकल्प्यते ।
सायुज्यं देवसात् कृत्वा प्रयुञ्जीतात्मभक्तितः ॥ ४५

अनन्यमनसा देवि नित्यं तद्गतचेतसा ।
सायुज्यं प्राप्यते देवैर् यत्नेन महता चिरात् ॥ ४६

हविर्भिरर्चनैर्होमैः प्रणामैर्नित्यचिन्तया ।
अर्चयित्वा यथाशक्ति स्वकं देवं विशन्ति ते ॥ ४७

सायुज्यानां विशिष्टं च मामकं वैष्णवं तथा ।
मां प्राप्य न निवर्तन्ते विष्णुं वा शुभलोचने ॥ ४८

इति ते कथितो देवि योगधर्मस्सनातनः ।
[1]न शक्यं प्रष्टुमन्यैर्यो योगधर्मस्त्वया विना ॥ ४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
[ अस्मिन्नध्याये ४९ श्लोकाः ]

## ॥ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति स्वमाहात्म्यकथनपूर्वकं दीक्षया शिवलिङ्गार्चनाफलकथनम् ॥

उमा—

त्रियक्ष त्रिदशश्रेष्ठ त्र्यम्बक त्रिदशाधिप ।
त्रिपुरान्तक कामाङ्ग हर त्रिपथगाधर ॥ १

दक्षयज्ञप्रमथन शूलपाणेऽरिसूदन ।
नमस्ते लोकपालेश लोकपालवरप्रद ॥ २

नैकशाखमपर्यन्तम् अध्यात्मज्ञानमुत्तमम् ।
अप्रतर्क्यमविज्ञेयं साङ्ख्ययोगसमन्वितम् ॥ ३

भवता परिपृष्टेन शृण्वन्त्या मम भाषितम् ।

1. क—इदमर्धं नास्ति

इदानीं श्रोतुमिच्छामि सायुज्यं त्वद्गतं विभो ॥ ४

कथं परिचरन्त्येते भक्तास्त्वां परमेष्ठिनम् ।
आचारः कीदृशस्तेषां केन तुष्टो भवेद्भवान् ॥ ५

वर्ण्यमानं त्वया साक्षात् प्रीणयत्यधिकं हि मा ॥ ५॥

श्रीमहेश्वरः—

हन्त ते कथयिष्यामि मम सायुज्यमद्भुतम् ।
येन ते न निवर्तन्ते युक्ताः परमयोगिनः ॥ ६॥

अव्यक्तोऽहमचिन्त्योऽहं पूर्वैरपि मुमुक्षुभिः ।
साङ्ख्ययोगौ मया सृष्टौ सर्वं चापि चराचरम् ॥ ७॥

अर्चनीयोऽहमीशोऽहम् अव्ययोऽहं सनातनः ।
अहं प्रसन्नो भक्तानां ददाम्यमरतामपि ॥ ८॥

न मां विदुस्सुरगणा मुनयश्च तपोधनाः ।
त्वत्प्रियार्थमहं देवि मद्विभूतिं ब्रवीमि ते ॥ ९॥

आश्रमेभ्यश्चतुर्भ्योऽहं चतुरो ब्राह्मणाञ् शुभे ।
मद्भक्तान् निर्मलान् पुण्यान् समानीय तपस्विनः ॥ १०॥

व्याचख्येऽहं तथा देवि योगं पाशुपतं महत् ॥ ११

गृहीतं तच्च तैस्सर्वं मुखाच्च मम दक्षिणात् ।
श्रुत्वा तत् त्रिषु लोकेषु स्थापितं चापि तैः पुनः ॥ १२

इदानीं च त्वया पृष्टो वदाम्येकमनाश्शृणु ॥ १२॥

अहं पशुपतिर्नाम मद्भक्ता ये च मानवाः ।
सर्वे पाशुपता ज्ञेया भस्मदिग्धतनूरुहाः ॥ १३॥

रक्षार्थं मङ्गलार्थं च पवित्रार्थं च भामिनि ।
लिङ्गार्थं चैव भक्तानां भस्म दत्तं मया पुरा ॥ १४॥

तेन सन्दिग्धसर्वाङ्गा भस्मना ब्रह्मचारिणः ।
जटिला मुण्डिता वाऽपि नानाकारशिखण्डिनः ॥ १५॥

विकृताः पिङ्गलाभाश्च नग्ना नानाप्रकारिणः ।
भैक्षं चरन्तस्सर्वत्र निस्स्पृहा निष्परिग्रहाः ॥ १६॥

मृत्पात्रहस्ता मद्भक्ता मन्निवेशितबुद्धयः ।
चरन्तो निखिलं लोकं मम हर्षविवर्धनाः ॥ १७॥

मम पाशुपतं दिव्यं योगशास्त्रमनुत्तमम् ।
सूक्ष्मं सर्वेषु लोकेषु विमृशन्तश्चरन्ति ते ॥ १८॥

एवं नित्याभियुक्तानां मद्भक्तानां तपस्विनाम् ।
उपायं चिन्तयाम्याशु येन मामुपयान्ति ते ॥ १९॥

स्थापितं त्रिषु लोकेषु शिवलिङ्गं मया मम ।
नमस्कारेण वा तस्य मुच्यन्ते सर्वकिल्बिषैः ॥ २०॥

इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
शिवलिङ्गप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ २१॥

अर्चया शिवलिङ्गस्य परितुष्याम्यहं प्रिये ।

शिवलिङ्गार्चनायां तु विधानमपि मे शृणु ॥ २२॥

गोक्षीरनवनीताभ्याम् अर्चयेद्यश्शिवं मम ।
इष्टस्य हयमेधस्य यत् फलं तत् फलं भवेत् ॥ २३॥

घृतमण्डेन यो नित्यम् अर्चयेद्यश्शिवं मम ।
स फलं प्राप्नुयान्मर्त्यो ब्राह्मणस्याग्निहोत्रिणः ॥ २४॥

केवलेनापि तोयेन स्नापयेद्यश्शिवं मम ।
स चापि लभते पुण्यं प्रियं च लभते नरः ॥ २५॥

सघृतं गुग्गुलुं सम्यग् धूपयेद्यश्शिवान्तिके ।
गोसवस्य तु यज्ञस्य यत् फलं तस्य तद्भवेत् ॥ २६॥

यस्तु गुग्गुलपिण्डेन केवलेनापि धूपयेत् ।
तस्य रुक्मप्रदानस्य यत् फलं तस्य तद्भवेत् ॥ २७॥

यस्तु नानाविधैः पुष्पैर् मम लिङ्गं समर्चयेत् ।
स हि धेनुसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ २८॥

यस्तु देशान्तरं गत्वा शिवलिङ्गं समर्चयेत् ।
तस्मात् सर्वमनुष्येषु नास्ति मे प्रियकृत्तमः ॥ २९॥

एवं नानाविधैर्द्रव्यैश् शिवलिङ्गं समर्चयेत् ।
मत्समानो मनुष्येषु न पुनर्जायते नरः ॥ ३०॥

अर्चनाभिर्नमस्कारैर् उपहारैस्स्तवैरपि ।
भक्तो मामर्चयेन्नित्यं शिवलिङ्गेष्वतन्द्रितः ॥ ३१॥

पलाशबिल्वपत्राणि राजवृक्षस्रजस्तथा ।
अर्कपुष्पाणि मेध्यानि मत्प्रियाणि विशेषतः ॥ ३२॥

फलं वा यदि वा शाकं पुष्पं वा यदि वा जलम् ।
दत्तं सम्प्रीणयेद्देवि भक्तैर्मद्गतमानसैः ॥ ३३॥

ममापि परितुष्टस्य नास्ति लोकेषु दुर्लभम् ।
तस्मात् ते सततं भक्ता मामेवाभ्यर्चयन्युत ॥ ३४॥

मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्तास्सर्वलोकेषु पूजनीया विशेषतः ॥ ३५॥

मद्द्वेषिणश्च ये मर्त्या मद्भक्तद्वेषिणोऽपि वा ।
यान्ति ते नरकं घोरम् इष्ट्वा क्रतुशतैरपि ॥ ३६॥

एतत्ते सर्वमाख्यातं योगं पाशुपतं महत् ।
मद्भक्तैर्मनुजैर्देवि श्राव्यमेतद्दिनेदिने ॥ ३७॥

शृणुयाद्यः पठेद्वाऽपि ममेदं धर्मनिश्चयम् ।
स्वर्गं कीर्तिं धनं धान्यं लभते स नरोत्तमः ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
[ अस्मिन्नध्याये ३८॥ श्लोकाः ]

---

## ॥ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण पार्वतीं प्रति सश्लाघं स्त्रीधर्मकथनचोदना ॥ १ ॥ पार्वत्या गङ्गामहानदीषु तन्निवेदनम् ॥ २ ॥ गङ्गया तदनुमोदनपूर्वकं भगवति तत्कथनाभ्यनुज्ञानम् ॥ ३ ॥

नारदः—

एवमुक्त्वा महादेवश् श्रोतुकामस्स्वयं प्रभुः ।
अनुकूलां प्रियां भार्यां पार्श्वस्थां समभाषत ॥ १

श्रीमहेश्वरः—

परावरज्ञे धर्माणां तपोवननिवासिनाम् ।
दीक्षाविधिसमोपेते सततं व्रतचारिणि ॥ २
पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितम् ॥ २॥
सावित्री ब्रह्मणः पत्नी कौशिकस्य [1]शुची शुभा ।
लक्ष्मीर्विष्णोः प्रिया भार्या [2]धृतिर्भार्या यमस्य तु ॥ ३॥
मार्कण्डेयस्य [3]धूम्रोर्णा ऋद्धिर्वैश्रवणस्य तु ।
वरुणस्य तथा गौरी सवितुश्च सुवर्चला ॥ ४॥
रोहिणी शशिनो भार्या स्वाहा चाग्नेरनिन्दिता ।
काश्यपस्यादितिश्चैव वसिष्ठस्याप्यरुन्धती ॥ ५॥

1. क—श 2. ख—इतः षट् पादा न सन्ति
3. क-घ—धूम्रो

एताश्चान्याश्च देव्यस्तु सर्वास्ताः पतिदेवताः ।
श्रूयन्ते लोकविख्यातास् त्वया चैव सहोषिताः ॥ ६॥
ताभिश्च पूजिताऽसि त्वम् अनुवृत्त्यनुभाषणैः ।
तस्मात्तु परिपृच्छामि धर्मज्ञे लोकसम्मते ॥ ७॥
स्त्रीधर्मं श्रोतुमिच्छामि त्वयैव समुदाहृतम् ।
सधर्मचारिणी मे त्वं लोकसन्धारिणी तथा ॥ ८॥
अयं हि स्त्रीगणस्त्वं तु अनुयाति न मुञ्चति ।
त्वत्प्रसादाद्धितं श्रोतुं स्त्रीवृत्तं शुभलक्षणम् ॥ ९॥
त्वया चोक्तं विशेषेण गुणभूतं हि तिष्ठति ।
स्त्रिय एव सदा लोके स्त्रीगणस्य गतिः प्रिये ॥ १०॥
[1]शश्वद्गोगोषु गच्छेत नान्यत्र रमते [2]मनः ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ॥ ११॥
प्रमदोक्तं तु यत् किञ्चित् तत् स्त्रीषु बहु मन्यते ।
न तथा मन्यते स्त्रीषु पुरुषोक्तमनिन्दिते ॥ १२॥
त्वयैष विदितो ह्यर्थस् स्त्रीणां धर्मस्सनातनः ।
तस्मात् त्वां परिपृच्छामि पृष्टा वद ममेप्सितम् ॥ १३॥

नारदः—

एवमुक्ता तदा देवी महादेवेन शोभना ।

1. ब—शश्वद्गोष्ठेषु 2. क-ख-ब—नरः

सोद्वेगा च सलज्जा च नावदत् तत्र किञ्चन ॥ १४॥
पुनः पुनस्तु तां देवीं देवः किमिति चाब्रवीत् ॥ १५

उमा—

भगवन् देवदेवेश सुरासुरनमस्कृत ।
त्वदन्तिके मया वक्तुं स्त्रीणां धर्मः कथं भवेत् ॥ १६

श्रीमहेश्वरः—

मन्नियोगादवश्यं तु वक्तव्यं तु मम प्रिये ॥ १६॥

उमा—

इमा नद्यो महादेव सर्वतीर्थोदकान्विताः ।
उपस्पर्शनहेतोस्त्वां न त्यजन्ति समीपतः ॥ १७॥
एताभिस्सह सम्मन्त्र्य प्रवक्ष्यामि तवेप्सितम् ।
अयुक्तं सत्सु तन्त्रेषु तानतिक्रम्य भाषितुम् ॥ १८॥
मया सम्मानिताश्चैव भविष्यन्ति सरिद्वराः ॥ १९

नारदः—

इति मत्वा महादेवी नदीर्देवीस्समाह्वयत् ।
विपाशां च वितस्त्यां च चन्द्रभागां सरस्वतीम् ॥ २०
शतद्रुं देविकां सिन्धुं [1]गौतमीं कौशिकीं तथा ।
यमुनां नर्मदां चैव कावेरीमथ निम्नगाम् ॥ २१

---

1. ब—गोमतीं

तथा देवनदीं गङ्गां श्रेष्ठां त्रिपथगां शुभाम् ।
सर्वतीर्थोदकवहां सर्वपापविनाशिनीम् ॥ २२
एता नदीस्समाहूय समुद्वीक्ष्येदमब्रवीत् ॥ २२॥

उमा—
हे पुण्यास्सरितश्श्रेष्ठास् सर्वपापविनाशिकाः ।
ज्ञानविज्ञानसम्पन्नाश् शृणुध्वं वचनं मम ॥ २३॥
अयं भगवता [1]प्रश्न उक्तस्स्त्रीधर्ममाश्रितः ।
न चैकया मया साध्यं तस्माद्वस्त्वानयाम्यहम् ॥ २४॥
युष्माभिस्तद्विचार्यैवं वक्तुमिच्छामि शोभनाः ।
तत् कथं देवदेवाय वाच्यस्स्त्रीधर्म उत्तमः ॥ २५॥

नारदः—
इति पृष्टास्तया देव्या महानद्यश्चकम्पिरे ॥ २६
तासां श्रेष्ठतमा गङ्गा [2]विष्णुपादोद्भवा नदी ।
सम्यग्विचार्य मनसा वचनं चेदमब्रवीत् ॥ २७

गङ्गा—
धन्यास्मानुगृहीतास्स्म अनेन वचनेन ते ।
या त्वं सुरासुरैर्मान्या नदीरानयसेऽनघे ॥ २८
तवैवार्हति कल्याणि एवं सान्त्वप्रसादनम् ।
अशक्यमपि ये मूर्खास् स्वात्मसम्भावनायुताः ॥ २९
वाक्यं वदन्ति संसत्सु स्वयमेव यथेष्टतः ॥ २९॥

1. अ-क—ब्रह्मा ख-ब—ब्रह्मन्
2. अ-क-ब—अयं पादोऽनन्तरश्च न स्तः

शक्तो यश्चानहंवादी सुदुर्लभतमो मतः ॥ ३०
त्वं हि शक्ता सती देवि [1]वक्तुं प्रश्नमशेषतः ।
व्याहर्तुं नेच्छसि [2]यथा सम्पूजयसि नस्तथा ॥ ३१
त्वं हि देवि महादेवी ऊहापोहविशारदा ।
दिव्यज्ञानयुता देवि दिव्यज्ञानेन्धनैधिता ॥ ३२
त्वमेवार्हसि तद्वक्तुं स्त्रीणां वृत्तं शुभाशुभम् ।
याचामहे वयं श्रोतुम् अमृतं त्वन्मुखोद्गतम् ॥ ३३
कुरु देवप्रियं देवि वद स्त्रीधर्ममुत्तमम् ॥ ३३॥

नारदः—

एवं प्रसादिता देवी गङ्गया [3]लोकपूज्यया ।
प्राह धर्ममशेषेण स्त्रीधर्मं सुरसुन्दरी ॥ ३४॥

उमा—

भगवन् देवदेवेश सुरेश्वर महेश्वर ।
त्वत्प्रसादात् सुरश्रेष्ठ तवैव प्रियकाम्यया ॥ ३५॥
तमहं कीर्तयिष्यामि यथावच्छ्रोतुमिच्छसि ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
[ अस्मिन्नध्याये ३६ श्लोकाः ]

---

1. ख—इतः षट् पादा न सन्ति  2. क-घ—स्त्रीत्वात्
3. ख—देवपू

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

पार्वत्या परमेश्वरं प्रति देवगन्धर्वादियोषितां मध्ये स्त्रीधर्मकथनम् ॥

नारदः—

एवं ब्रुवन्त्यां स्त्रीधर्मं देव्यां देवस्य शासनात् ।
ऋषिगन्धर्वयक्षाणां योषितश्चाप्सरोगणाः ॥ १

नागभूतस्त्रियश्चैव नद्यश्चैव समागताः ।
श्रोतुकामाः परं वाक्यं सर्वाः पर्यवतस्थिरे ॥ २

उमादेवी मुदा युक्ता पूज्यमानाऽङ्गनागणैः ।
आनृशंस्यपरा देवी सततं स्त्रीगणं प्रति ॥ ३

स्त्रीगणस्य हितार्थाय भवप्रियचिकीर्षया ।
वक्तुं वचनमारेभे स्त्रीणां [1]धर्माश्रमान्वितम् ॥ ४

उमा—

भगवन् सर्वधर्मज्ञ श्रूयतां वचनं मम ।
ऋतुप्राप्ता [2]सुशुद्धा या कन्या सेत्यभिधीयते ॥ ५

तां तु कन्यां पिता माता भ्राता मातुल एव वा ।
पितृव्यश्चैव पञ्चैते दातुं प्रभवतां गताः ॥ ६

1. ख—धर्माश्रितान्वितम्
2. ख—सुगन्धा

विवाहाश्च तथा पञ्च तासां धर्मार्थकारणात् ।
कामतश्च मिथो दानम् इतरेतरकाम्यया ॥ ७

दत्ता यस्य भवेद्भार्या एतेषां येन केन चित् ।
दातारस्सुविमृश्यैव दातुमर्हन्ति नान्यथा ॥ ८

उत्तमानां तु वर्णानां मन्त्रवत्पाणिसङ्ग्रहः ।
विवाहकरणं चाहुश् शूद्राणां सम्प्रयोगतः ॥ ९

यदा दत्ता भवेत् कन्या तस्माद्भार्यार्थिने स्वकैः ।
तदाप्रभृति सा नारी दशरात्रं विलज्जया ॥ १०

मनसा कर्मणा वाचा अनुकूला च सा भवेत् ॥ १०॥

इति भर्तृव्रतं कुर्यात् पतिमुद्दिश्य शोभना ।
तदाप्रभृति सा नारी न कुर्याद्[1]भर्तुरप्रियम् ॥ ११॥

यद्यदिच्छति वै भर्ता धर्मकामार्थकारणात् ।
तथैवानुप्रिया भूत्वा तथैवोपचरेत् [2]पतिम् ॥ १२॥

पतिव्रतात्वं नारीणाम् एतदेव सनातनम् ॥ १३

तादृशी सा भवेन्नित्यं यादृशस्तु भवेत् पतिः ।
शुभाशुभसमाचारा एतद्वृत्तं समासतः ॥ १४

दैवतं सततं साध्वी भर्तारं या तु पश्यति ।

1. क-घ—त् पत्युर
2. अ—प्रियम्

दैवमेव भवेत् तस्याः पतिरित्यवगम्यते ॥ १५

एतस्मिन् कारणं देव पौराणी श्रूयते श्रुतिः ।
कथयामि प्रसादात्ते शृणु देव समासतः ॥ १६

कस्य चित्त्वथ विप्रस्य भार्ये द्वे हि बभूवतुः ॥ १६॥

तयोरेका धर्मकामा देवानुद्दिश्य भक्तितः ।
भर्तारमवमत्यैव देवतासु समाहिता ॥ १७॥

चकार [1]विविधं धर्मं पूजयानाऽर्चयाऽन्वितम् ॥ १८

अपरा धर्मकामा च पतिमुद्दिश्य शोभना ।
भर्तारं दैवतं कृत्वा चकार किल तत्प्रियम् ॥ १९

एवं विवर्तमाने तु युगपन्मरणेऽध्वनि ।
गते किल महादेव तत्रैका या पतिव्रता ॥ २०

देवप्रियायां तिष्ठन्त्यां पुण्यलोकं जगाम सा ॥ २०॥

देवप्रिया च तिष्ठन्ती विललाप सुदुःखिता ।
तां यमो लोकपालस्तु बभाषे पुष्कलं वचः ॥ २१॥

यमः—

मा शुचस्त्वं निवर्तस्व न लोकास्सन्ति तेऽनघे ।
स्वधर्मविमुखा सा त्वं तस्माल्लोका न सन्ति ते ॥ २२॥

देवता हि पतिर्नार्यास् स्थापितास्सर्वदैवतैः ।
अवमत्य शुभे तत्त्वं कथं लोकान् गमिष्यसि ॥ २३॥

1. क-ख—विपुलं

मोहेन त्वं वरारोहे न जानीषे स्वदैवतम् ।
[1]मतिमत्या त्वया कार्यो धर्मपत्यर्पणस्त्विवति ॥ २४॥

तस्मात् त्वं हि निवर्तस्व कुरु पत्याश्रितं हितम् ।
तदा गन्तासि लोकांस्तान् यान् गच्छति पतिव्रता ॥ २५॥

नान्यथा शक्यते प्राप्तुं पतीनां लोकमुत्तमम् ॥ २६

उमा—

यमेनैवंविधं चोक्ता निवृत्ता पुनरेव सा ।
बभूव पतिमालम्ब्य पतिप्रियपरायणा ॥ २७

एवमेतन्महादेव दैवतं हि स्त्रियाः पतिः ।
तस्मात् पतिपरा भूत्वा पतीनुपचरेदिति ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
[ अस्मिन्नध्याये २८ श्लोकाः ]

---

1. अ—धर्मपत्न्या + धर्मपत्न्य

## ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

पार्वत्या महेश्वरं प्रति स्त्रीधर्मकथनम् ॥ १ ॥ नारदेन कृष्णं प्रति उमा-महेश्वरसंवादानुवादोपसंहारः ॥ २ ॥

उमा—

पतिमत्या दिवारात्रं वृत्तान्तं श्रूयतां शुभम् ।
पत्युः पूर्वं समुत्थाय प्रातःकर्म समाचरेत् ॥ १

पत्युर्भावं विदित्वा तु पश्चात् सम्बोधयेत् तु तम् ।
नित्यं पौर्वाह्णिकं कार्यं स्वयं कुर्याद् यथाविधि ॥ २

निवेद्य च तथाऽऽहारं यथा सम्पद्यतामिति ।
तथैव कुर्यात् तत् सर्वं पत्युः प्रियतमं भवेत् ॥ ३

यथा भर्ता तथा नारी गुरूणां प्रतिपद्यते ॥ ३॥

शुश्रूषापोषणविधौ पतिप्रियचिकीर्षया ।
भर्तुर्निष्क्रमणे कार्यं संस्मरेदप्रमादतः ॥ ४॥

आगतं तु पतिं दृष्ट्वा सहसा परिचारणम् ।
स्वयं कुर्वीत सम्प्रीत्या कायश्रमहरं परम् ॥ ५॥

पाद्यासनाभ्यां शयनैर् वाक्यैश्च हृदयप्रियैः ।
अतिथीनामागमेन प्रीतियुक्ता सदा भवेत् ॥ ६॥

कर्मणा वचनेनापि तोषयेदतिथीन् सदा ।

मङ्गलं गृहशौचं च सर्वोपकरणानि च ॥ ७॥
सर्वकालमवेक्षेत कारयन्ती च कुर्वती ।
धर्मकार्ये तु सम्प्राप्ते तद्धर्मपरा भवेत् ॥ ८॥
अर्थकार्ये पुनर्भर्तुः प्रमादालस्यवर्जिता ।
सा यत्नं परमं कुर्यात् तस्य साहाय्यकारणात् ॥ ९॥
युगन्धरा भवेद्भर्तुस् साध्वी धर्मार्थयोस्सदा ॥ १०
विहारकाले वै भर्तुर् ज्ञात्वा भावं हृदि स्थितम् ।
अलङ्कृत्य यथायोगम् उपहारसमन्वितम् ॥ ११
वाक्यैर्मधुरसंयुक्तैस् स्मयन्ती तोषयेत् पतिम् ॥ ११॥
कठोराणि न वाच्यानि अन्यथा प्रमदान्तरे ।
यस्यां कामी भवेद्भर्ता तस्याः प्रीतिकरी भवेत् ॥ १२॥
अप्रमादं पुरस्कृत्य मनसा तोषयेत् पतिम् ।
अनन्तरमथान्येषां भोजनावेक्षणं चरेत् ॥ १३॥
दासीदासबलीवर्दांश् चण्डालं च शुनस्तथा ।
अनाथान् कृपणांश्चैव भिक्षुकांश्च तथैव च ॥ १४॥
पूजयेद्बलिभैक्षेण पत्युर्धर्मं विवर्धयेत् ॥ १५
कुपितं वाऽर्थहीनं वा श्रान्तं वोपचरेत् पतिम् ।
यथा स तुष्टस्स्वस्थश्च तथा सन्तोषयेत् पतिम् ॥ १६
यथा कुटुम्बचिन्तायां विवादे चाऽर्थसञ्चये ।

आहूता तत्सहायार्थं तथा प्रियहितं वदेत् ॥ १७

अप्रियं च हितं ब्रूयात् तस्य धर्मार्थकाङ्क्षया ।
एकान्तचर्याकथनं कलहं वर्जयेत् परैः ॥ १८

बहिरालोकनं चैव मोहं व्रीडां च पैशुनम् ।
बह्वाशित्वं दिवास्वप्नम् एवमादि विवर्जयेत् ॥ १९

रहस्येकासनं साध्वी न कुर्यादात्मजैरपि ।
यद्यद्द्यान्निधत्स्वेति न्यासवत् परिपालयेत् ॥ २०

विस्मृतं वाऽपि यद्द्रव्यं प्रतिदद्यात् स्वशौचतः ।
यत् किञ्चित् पतिना दत्तं लब्ध्वा तत् सा सुखी भवेत् ॥ २१

अतीवाज्ञामतीर्ष्यां च दूरतः परिवर्जयेत् ।
बालवद्वृद्धवद्भार्या सदैवातुरवत् पतिम् ॥ २२

भार्याया व्रतमित्येव कर्तव्यं सततं विभो ।
एतत् पतिव्रतावृत्तम् उक्तं देव समासतः ॥ २३

न च भोगे न चैश्वर्ये न सुखे न धने तथा ।
स्पृहा यस्यास्तथा भर्तुस् सा नारीणां पतिव्रता ॥ २४

पतिर्हि दैवतं स्त्रीणां पतिर्बन्धुः पतिर्गतिः ।
नान्यां गतिमहं पश्ये प्रमदाया यथा पतिः ॥ २५

जातिष्वपि च मे स्त्रीत्वं विशिष्टमिति वै प्रभो ।
कायक्लेशेन महता पुरुषः प्राप्नुयात् फलम् ॥ २६

तत् सर्वं लभते नारी सुखेन पतिपूजया ॥ २६॥

यथासुखं पतिमती सर्वं पत्यनुकूलतः ।
[1]ईदृशं धर्मसाकल्यं पश्य त्वं प्रमदां प्रति ॥ २७॥

एतद्विसृज्य पच्यन्ते कुस्त्रियः पापमोहिताः ॥ २८

तपश्चर्या च दानं च पतौ तस्यास्समर्पितम् ।
रूपं कुलं यशस्तेजस् सर्वमस्मिन् प्रतिष्ठितम् ॥ २९

एवंवृत्तसमाचारा स्ववृत्तेनैव शोभना ।
स्वभर्त्रा च समं गच्छेत् पुण्यलोकान् स्वकर्मणा ॥ ३०

वृद्धो विरूपो बीभत्सो धनवान् निर्धनोऽपि वा ।
एवम्भूतोऽपि वै भर्ता स्त्रीणां भूषणमुत्तमम् ॥ ३१

आढ्यं वा रूपयुक्तं वा विरूपं धनवर्जितम् ।
या पतिं तोषयेत् साध्वी सा पत्नीनां विशिष्यते ॥ ३२

दरिद्रांश्च विरूपांश्च प्रमूढान् कुष्ठसंयुतान् ।
पतीनुपचरेल्लोकान् अक्षयान् प्रतिपद्यते ॥ ३३

एवं प्रवर्तमानायाः पतिः पूर्वं म्रियेत चेत् ।
तदाऽनुमरणं गच्छेत् पुनर्धर्मं चरेत वा ॥ ३४

एतदेवं मया प्रोक्तं स्त्रियस्तु बहुधा स्मृताः ।
देवदानवगन्धर्वमनुष्या इति नैकधा ॥ ३५

1. क—अर्धचतुष्टयं नास्ति

सौम्यशीलाश्शुभाचारास् सर्वास्तास्सम्भवन्ति च ।
यथा शुद्धं प्रवक्ष्यामि स्त्रीणां धर्मं महेश्वर ॥ ३६

आसुर्यश्चैव पैशाच्यो राक्षस्यश्च भवन्ति हि ।
तासां वृत्तमशेषेण श्रूयतां लोककारणात् ॥ ३७

न्यायतो वाऽन्यथा प्रोक्ता भावदोषसमन्विताः ।
भर्तॄनुपचरन्त्येव रागद्वेषबलात्कृताः ॥ ३८

स्वधर्मविमुखा भूत्वा प्रदूष्यन्ति यतस्ततः ।
प्रवृद्धविषया नित्यं प्रतिकूलं वदन्ति च ॥ ३९

अर्थान् विनाशयन्त्येव न गृह्णन्ति हितं [1]क्वचित् ।
स्वबुद्धिनिरता भूत्वा जीवन्ति च यथा तथा ॥ ४०

गुणवत्यः क्वचिद्भूत्वा पतिधर्मपरा इव ।
पुनर्भवन्ति पापिष्ठा विषमं वृत्तमास्थिताः ॥ ४१

अनवस्थितमर्यादा बहुवेषा व्यवस्थिताः ।
असन्तुष्टाश्च लुब्धाश्च ईर्ष्याक्रोधयुता भृशम् ॥ ४२

भोगप्रिया हितद्वेष्याः कामभोगपरायणाः ।
प्रायशोऽनृतभूयिष्ठा गुरूणां प्रतिलोमकाः ॥ ४३

एवंवृत्तसमाचारास् त्वासुरं भावमाश्रिताः ।
अपकारपरा नित्यं सततं कलहप्रियाः ॥ ४४

---

1. अ—वचः

परुषा रूक्षवचना निर्घृणा निरपत्रपाः ।
निस्स्नेहाः क्रोधनाश्चैव भर्तृपुत्रस्वबन्धुषु ॥ ४५

घोरा मांसप्रिया नित्यं हसन्ति च रुदन्ति च ।
पतीन् व्यभिचरन्त्येव दुर्मार्गेण यथा तथा ॥ ४६
बन्धुभिर्भर्त्सिता भूत्वा गृहकार्याणि कुर्वते ॥ ४६॥

अथ वा भर्त्सिता देव निवृत्तास्स्वेषु कर्मसु ।
तथैवात्मवधं घोरं व्यवस्येयुर्न संशयः ॥ ४७॥

निर्दया निरनुक्रोशाः कुटुम्बार्थविलोपकाः ।
धर्मार्थरहिता घोरास् सततं कुर्वते क्रियाः ॥ ४८॥

अनर्थे निपुणाः पापाः परप्राणेषु निर्दयाः ।
एवंयुक्तसमाचारास् स्त्रियः पैशाचमाश्रिताः ॥ ४९॥

अपरा मोहसंयुक्ता निर्लज्जा रोदनप्रियाः ।
अशुद्धा मलदिग्धाङ्ग्यः पानमांसरता भृशम् ॥ ५०॥
वदन्त्यनृतवाक्यानि हसन्ति विलपन्ति च ॥ ५१

दुष्प्रसादा महाक्रोधास् स्वप्नशीला निरन्तरम् ।
तामस्यो नष्टतत्त्वार्था मन्दशीला महोदराः ॥ ५२
भुञ्जते विविधं सिद्धं भोजनं तीव्रसम्भ्रमाः ॥ ५२॥

गुणरूपवयोयुक्तं पतिं कामिनमुत्तमम् ।
हित्वाऽन्येनैव गच्छन्ति सर्वथा भृशतापिताः ॥ ५३॥

निर्लज्जा धर्मसन्दिग्धाः प्रतिकूलास्समन्ततः ।
एवंयुक्तसमाचारास् स्त्रियो राक्षसमाश्रिताः ॥ ५४॥
एवंविधानां सर्वासां न परत्रेह वा सुखम् ।
नरकाद्विप्रमुक्तानां मानुष्यं दुर्लभं भवेत् ॥ ५५॥
कष्टं तत्रापि भुञ्जन्ते स्वकृतं दुःखजं बहु ।
दरिद्राः क्लेशभूयिष्ठा विरूपाः कुत्सिताः परैः ॥ ५६॥
विधवा दुर्भगा वाऽपि लभन्ते दुःखमीदृशम् ॥ ५७
शतवर्षसहस्राणि निरयं व्यभिचारिणी ।
व्रजेत् पतिं च पापेन संयोज्य स्वकुलं तथा ॥ ५८
एतद्विज्ञाय यदि तु पुनश्चेद्धितमात्मनः ।
कुर्याद्भर्तारमाश्रित्य तथा धर्ममवाप्नुयात् ॥ ५९
अतिसंयान्ति ताँल्लोकान् पुण्यान् परमशोभनान् ॥ ५९॥
अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा ।
वर्तमानाश्च सततं भर्तृणां प्रतिकूलतः ॥ ६०॥
भर्त्राऽनुमरणं काले याः कुर्वन्ति तथाविधाः ॥ ६१
कामात् क्रोधाद्भयाल्लोभाद् अपहास्या भवन्ति ताः ॥ ६१॥
आदिप्रभृति कुस्त्रीणां तथाऽनुमरणं वृथा ॥ ६२
आदिप्रभृति या साध्वी पत्युः प्रियपरायणा ।
ऊर्ध्वं गच्छति सा [1]पूता भर्त्राऽनुमरणं गता ॥ ६३

1. ख-ब—प्रीता

एवं मृताया वै लोकान् अहं पश्यामि चक्षुषा ।
स्पृहणीयान् सुरगणैर् यान् गच्छति पतिव्रता ॥ ६४

अथ वा भर्तरि मृते वैधव्यं धर्ममाश्रिताः ।
तूष्णीं भौमजले नित्यम् अञ्जलिस्नानमुत्तमम् ॥ ६५
व्रतं च पतिमुद्दिश्य कुर्युश्चैव विधिं ततः ॥ ६५॥

एवं गच्छति सा नारी पतिलोकमनुत्तमम् ।
भवतः प्रियकामिन्या यन्मयोक्तं तवाग्रतः ॥ ६६॥
चापल्यान्मम देवेश तद्भवान् क्षन्तुमर्हति ॥ ६७

नारदः—

एवं वदन्तीं रुद्राणीं लज्जाभावसमन्विताम् ।
प्रशशंस च देवेशो वाचा सञ्जनयन् प्रियम् ॥ ६८

ऋषयो देवगन्धर्वाः प्रमदाश्च सहस्रशः ।
प्रणम्य शिरसा देवीं स्तुतिभिश्चाभितुष्टुवुः ॥ ६९

पूजयामासुरपरे देवदेवं मुदा युताः ।
संवादं चिन्तयन्त्यन्ये श्रद्धानास्सुचेतसः ॥ ७०
ततस्तु देवदेवेशो देवीं वचनमब्रवीत् ॥ ७०॥

श्रीमहेश्वरः—

शृणु कल्याणि मद्वाक्यं संवादोऽयं मया तव ।
पुण्यं पवित्रं ख्यातं च भविता तत्र संशयः ॥ ७१॥

य इमं श्रावयेद्विद्वान् संवादं चावयोः प्रिये ।
शुचिर्भूत्वा नरान् युक्तान् स तैस्स्वर्गं व्रजेत् सुखम् ॥ ७२॥

यस्त्वेनं शृणुयान्नित्यं संवादं चावयोश्शुभम् ।
कीर्तिमायुष्यमारोग्यं लभते सद्गतिं पराम् ॥ ७३॥

नारदः—

इत्युक्त्वा स महादेवस् तत्रैवान्तरधीयत ।
देवीं देवं वयं तत्र न पश्यामः प्रभावतः ॥ ७४॥

एवं पुरा मयाऽऽश्चर्यं दृष्टं हैमवते वने ।
चरता तीर्थयात्रार्थं पुरा केशिनिषूदन ॥ ७५॥

तदद्य कथितं सर्वं तव केशव शृण्वतः ॥ ७६

भीष्मः—

एतावदुक्त्वा देवर्षिर् नारदो विरराम ह ।
तदद्य निखिलं सर्वं कथितं ते युधिष्ठिर ॥ ७७

वैशम्पायनः—

धर्मराजश्च तच्छ्रुत्वा भ्रातृभिर्मुदितोऽभवत् ।
तत् सर्वं निखिलं प्रोक्तं तवेह जनमेजय ॥ ७८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥
[अस्मिन्नध्याये ७८ श्लोकाः]

---

## ॥अष्टात्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दृष्टान्ततया विप्रकन्योपाख्यानकथनपूर्वकं विद्वत्संरक्षणस्य महाफलहेतुत्वकथनम् ॥

युधिष्ठिरः—

कृपया परया प्रोक्तस् सर्वेषां पापकर्मणाम् ।
ज्ञानस्य च परस्येह तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

उपायोऽयं परप्राप्तौ परमः परिकीर्तितः ।
नारायणस्यानुध्यानम् अर्चनं यजनं स्तुतिः ॥ २

श्रवणं तत्कथानां च विद्वत्संरक्षणं तथा ।
विद्वच्छुश्रूषणं प्रीतिर् उपदेशानुपालनम् ॥ ३

स ध्यानेन जपेनाशु मुच्यते प्राकृतोऽपि वा ॥ ३॥

जपश्चतुर्विधः प्रोक्तो वैदिकस्तान्त्रिकोऽपि च ।
पौराणिकोऽथ विद्वद्भिः कथितं स्मार्त एव च ॥ ४॥

विद्वच्छुश्रूषया ज्ञानं विद्वत्संरक्षणेन च ।
नासाध्यं ज्ञानिनां किञ्चित् तस्माद्रक्ष्यास्त्वया द्विजाः ॥ ५॥

सुव्रता बन्धुहीनैका वने पूर्वं यमेन तु ।
आसीदाश्वासिता विद्वत्संरक्षणफलात् किल ॥ ६॥

विप्रस्य मरणे हेतुस् तत्पत्नी पितृशोकदा ।
वैश्या[1]त्वमिति लोभोऽयं विप्रकन्येति साम्प्रतम् ॥ ७॥

इत्युक्ताऽऽश्वासिताऽपृच्छत् केनैवं पापसंयुता ।
जाता विप्रकुले सम्यक् श्रेयश्चापि ब्रवीहि मे ॥ ८॥

यमः—

अन्यजन्मनि विद्वांसं प्रहारैरभिपीडितम् ।
चोरशङ्काविमोक्षेण मोक्षयित्वा [2]सुजन्मिका ॥ ९॥

भीष्मः—

इत्युक्ताऽष्टाक्षरध्यानजपादिश्रेयसंयुता ।
यमेनानुगृहीताऽभूत् पुण्यलोकनिवासिनी ॥ १०॥

तन्नित्यं विदुषां रक्षातत्परोऽभूर्महीपते ।
तेषां संरक्षणात् सद्यस् सर्वपापैः प्रमुच्यसे ॥ ११॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
[ अस्मिन्नध्याये ११॥ श्लोकाः ]

---

1. क-ख—त्वमति    2. ख—सुधार्मिका

## ॥ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति देवदेवर्षिगिरिनदीतीर्थक्षेत्रादीनां विस्तरेण पृथङ्नामनिर्देशपूर्वकंकीर्तनम् ॥

युधिष्ठिरः—

सर्वशान्तिकरं [1]पुण्यं दारिद्र्यातुरदुःखिनाम् ।
तुष्टिपुष्टिप्रदं नित्यं पितामह वदस्व मे ॥ १

भीष्मः—

अयं शस्तो महाजप्यो देवराजर्षिसंयुतः ।
सेवन् नरो न दुःखेन भयेन च विमुह्यति ॥ २

देवासुरगुरुर्देवस् सर्वदेवनमस्कृतः ।
अचिन्त्योऽथाप्यनिर्देश्यस् सर्वप्राणो ह्ययोनिजः ॥ ३

पितामहो जगन्नाथस् सावित्री ब्रह्मणा स्मृता ।
देवभूरथ कर्ता च विष्णुर्नारायणः प्रभुः ॥ ४

[2]विष्णुनाभिसरोजातो ब्रह्मा भुवनपावनः ।
उमापतिर्विरूपाक्षस् स्कन्दस्सेनापतिस्तथा ॥ ५

विशाखो हुतभुग्वायुश् चन्द्रादित्यौ प्रभाकरौ ।
शक्रस्सुरपतिर्देवो यमो धूमोर्णया सह ॥ ६

वरुणस्सह गौर्या च सहर्ध्या वै धनेश्वरः ।

1. ख-ग—जप्यं 2. अ-क-ग—नास्तीदमर्धम्

सौम्या गौस्सुरभिर्देवी विश्रवाश्च महानृषिः ॥ ७

षट्कालास्सागरा गङ्गा स्रवन्त्योऽथ मरुद्गणाः ।
वालखिल्यास्तथा सिद्धाः कृष्णद्वैपायनस्तथा ॥ ८

नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ।
तुम्बुरुश्चित्रसेनश्च देवदूतश्च विश्रुतः ॥ ९

देवकन्या महाभागा दिव्याश्चाप्सरसां गणाः ।
ऊर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुसा ॥ १०

विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा ।
आदित्या वसवो रुद्रा अश्विनौ पितरोऽपि च ॥ ११

धर्मस्सत्यं तपो दीक्षा व्यवसायः पितामहः ।
शर्वरी दिवसश्चैव मरीचः काश्यपस्तथा ॥ १२

शुक्रो बृहस्पतिस्सौम्यो बुधो राहुश्शनैश्चरः ।
नक्षत्राणि तपश्चैव मासास्सन्ध्यास्सवत्सराः ॥ १३

वैनतेयस्सपुत्रश्च कद्रुजाः पन्नगास्तथा ।
शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती ॥ १४

सिन्धुश्च देविका चैव पुष्करं तीर्थमेव च ।
गङ्गा महानदी चैव कालिन्दी नर्मदा तथा ॥ १५

कम्पना च विशल्या च पुण्यतोयाश्शुभावहाः ।
सरयूर्गण्डकी चैव लोहित्यश्च महानदाः ॥ १६

तथाऽरुणा वेत्रवती पुण्योदा गोमती तदा ।
गोदावरी च पर्णा च कृष्णवेणी तथैव च ॥ १७
[1]वृषद्वती सा कावेरी चक्षुर्मन्दाकिनी तथा ।
प्रयागश्च प्रभासश्च पुण्यं नैमिशमेव च ॥ १८
यत्र विश्वेश्वरस्थाणुर् यत्र [2]तद्विपुलं सरः ।
पुण्यतीर्थाश्च कपिलं कुरुक्षेत्रं प्रकीर्तितम् ॥ १९
सिन्धूत्तमा तपोदानजम्बुमार्गेत्रहाऽपि च ।
हैरण्वती वितस्त्या च तथा क्षेमवती नदी ॥ २०
वेदश्रुति[3]र्वेदधनी नलहारा च नद्यपि ।
भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च ॥ २१
ऋषिकुल्या [4]त्रियामाख्या नदी चित्रवहा तथा ।
कौशिकी यमुना सीता तथा चर्मण्वती नदी ॥ २२
महेन्द्रवाणिनी दिव्या नीविता च तथैव च ।
नन्दा च परनन्दा च तदा तीर्थमुदाहृतम् ॥ २३
गयेपु फल्गुनीतीर्थे धर्मारण्यं सुरैर्वृतम् ।
तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् ॥ २४
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शुभम् ॥ २४॥
हिमवान् पर्वतश्चैव दिव्यौषधिसमन्वितः ।

1. ख—दृषद्वती च
2. ख—विष्णुश्च वत्सरः
3. अ-क—वेंदवती मलवासाश्च
4. ब—त्रिसामाख्या

विन्ध्यो धातुविचित्राङ्गस् तीर्थवानौषधान्वितः ॥ २५॥
मेरुर्महेन्द्रो मलयश् श्वेतश्च रजतान्वितः ।
शृङ्गवान् मन्दरो नीलो निषधो [1]निर्दरस्तथा ॥ २६॥
[2]चित्रकूटोऽञ्जनाभश्च पर्वतो गन्धमादनः ।
पुण्यस्सोमगिरिश्चैव ये चान्ये च महीधराः ॥ २७॥
दिशश्च विदिशश्चैव क्षितस्सर्वमहीरुहाः ।
विश्वे देवा [3]नभश्चैव नक्षत्राणि ग्रहास्तथा ॥ २८॥
[4]कीर्तयाना नरा ह्येतान् मुच्यन्ते सर्वकिल्बिषैः ।
स्तुवन्तः प्रीतिमन्तश्च मुच्यन्ते महतो भयात् ॥ २९॥
सर्वसङ्करपापेभ्यो देवतास्तवनन्दकाः ।
देवतानन्दकान् विप्रांस् तपस्सिद्धांस्तपोधनान् ॥ ३०॥
कीर्तितान् कीर्तयिष्यामि सर्वपापप्रमोचनान् ॥ ३१
यवक्रीतोऽथ रैभ्यश्च कक्षीवानशिजस्तथा ।
भृगुराङ्गीरसः कण्वो मेधातिथिरथ प्रभो ॥ ३२
बर्हिश्च गुणसम्पन्नाः प्राचीं दिशमुपाश्रिताः ॥ ३२॥
भद्राश्चैव महाभागा मम्लुचाः प्रम्लुचास्तथा ।
मम्लचुश्च महाभागास् [5]स्वस्त्यात्रेयश्च वीर्यवान् ॥ ३३॥

1. ख—दर्दर    2. ख—इदमर्धद्वयं नास्ति    3. ख—भवाश्चैव
4. ख—पान्तु नः सततं देवाः कीर्तिताकीर्तितास्तथा। [ अधिकः पाठः ]
5. ख—सत्याले

मित्रावरुणयोः पुत्रस् तथाऽगस्त्यः प्रतापवान् ।
दृढच्युतश्चेध्मवाहो विश्रुतावृषिसत्तमौ ॥ ३४॥
पश्चिमां दिशमाश्रित्य य एवं ते निबोध तान् ।
त्रिशङ्कुस्सह सोदर्यैः परिव्याधश्च वीर्यवान् ॥ ३५॥
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
अग्नेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः ॥ ३६॥
उत्तरां दिशमाश्रित्य य एवं ते निबोध तान् ।
अत्रिश्शक्तिर्वसिष्ठश्च पाराशर्यश्च वीर्यवान् ॥ ३७॥
[1]ऋषिर्दीर्घतमश्चैव गौतमः काश्यपस्तथा ।
विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च ॥ ३८॥
ऋचीकपुत्रो रामश्च ऋषिरौद्दालकिस्तथा ।
श्वेतकेतुः कहोलश्च विपुलो देवलस्तथा ॥ ३९॥
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च ।
रोमश्च नाचिकेतश्च रोमहर्षण एव च ॥ ४०॥
ऋषिरुग्रतपाश्चैव भार्गवश्च्यवनस्तथा ।
[2]दुष्यन्तो भरतश्चैव चक्रवर्ती महायशाः ॥ ४१॥
यवनो जनकश्चैव तथा दृढरथो नृप ।
तपरस्तपकश्चैव तथा दशरथो नृपः ॥ ४२॥

1. घ—एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः । [अधिकः पाठः]
2. ख-घ—अर्धचतुष्टयं नास्ति

राजा रथन्तरश्चैव भार्गवश्च्यवनस्तथा ।
रामो राक्षसहा वीरश् शशबिन्दुस्तथैव च ॥ ४३॥
हरिश्चन्द्रो मरुत्तश्च जह्नुर्जाह्नविसेवितः ।
महोदयो ह्यलर्कश्च ऐलश्चैव नराधिपः ॥ ४४॥
शिबिरौशीनरश्चैव गवयश्च नराधिपः ।
वृषोऽम्बरीषः कमठो रैवतश्च महाबलः ॥ ४५॥
मुचुकुन्दश्च राजर्षिर् मित्रभानुः प्रियङ्करः ।
त्रसदस्युस्तथा राजा श्वेतो राजर्षिसत्तमः ॥ ४६॥
महाभिषक् च विख्यातो नृगो राजा तथाऽष्टकः ।
आयुः क्षेपुश्च राजर्षिः कक्षेपुश्च नराधिपः ॥ ४७॥
प्रतर्दनो दिवोदासस् सौदासः कोसलेश्वरः ।
वीरो नलश्च राजर्षिर् भौमश्चैव नराधिपः ॥ ४८॥
[1]गवीधुश्च वृषध्वश्च प्रतीतश्शन्तनुस्तथा ।
करन्धमो नरश्रेष्ठो गान्धारश्च नराधिपः ॥ ४९॥
क्षेत्राणि नद्यो राजानो ये चान्ये नानुकीर्तिताः ।
नमस्तेभ्यो नमस्तेभ्यो मा च मे परिपन्थिनः ॥ ५०॥
परात् परतराच्चैव गतिस्स्यादिति तत् पठेत् ॥* ५१

ओंनमो भगवते वासुदेवाय

ओंनमो भगवते पुरुषोत्तमाय ।

1. घ—गवीपुश्च वृषध्वश्च

* ख—कोशे अत्रैवाध्यायसमाप्तिर्दृश्यते

[1]ओंनमो नारायणाय
ओं नमस्सर्वलोकगुरवे ॥ ५२

ओं नमस्सर्वलोकपित्रे
ओं नमस्सर्वलोकपितामहाय ।
[2]ओं सर्वलोकप्रपितामहाय नमः
ओं नमस्सर्वलोकप्रधानाय ॥ ५३

ओं नमस्सर्वलोकेश्वराय
ओं नमस्सर्वलोकविशिष्टाय ।
ओं नमस्सर्वलोकसुखप्रदाय
ओं नमस्सर्वलोककर्त्रे ॥ ५४

ओं नमस्सर्वलोकभर्त्रे
ओं नमस्सर्वलोकहर्त्रे ।
ओं नमस्सर्वलोकहितकराय[3]
ओं सर्वलोकनिधये नमः ॥ ५५

ओं नमस्सर्वलोकोद्भवकराय
ओं नमो विष्णवे प्रभविष्णवे ॥ ५५॥

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
[ अस्मिन्नध्याये ५५॥ श्लोकाः ]

---

1. ख-घ—नास्ति इदम्

2, 3. अ-क-ख-ग—नास्तीदम्

## ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति श्रीविष्णुसहस्रनामस्तोत्रकथनम् ॥

वैशम्पायनः—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत ॥ १

युधिष्ठिरः—

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाश्शुभम् ॥ २

को धर्मस्सर्वधर्माणां भवतः परमो मतः ।
किं जपन् मुच्यते जन्तुर् जन्मसंसारबन्धनात् ॥ ३

भीष्मः—

जगत्प्रभुं देवदेवम् अनन्तं पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण पुरुषस्सततोत्थितः ॥ ४

तमेव चार्चयन् नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन् नमस्यंश्च यजमानस्तमेव च ॥ ५

अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन् नित्यं सर्वदुःखातिगो भवेत् ॥ ६

ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।

1. अ-क-ख-ग—नास्तीदम्

लोकनाथं महद्भूतं सर्वभूतभवोद्भवम् ॥ ७
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥ ८
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ ९
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १०
यतस्सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ ११
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १२
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥ १३
ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महानृषिः ।
छन्दोऽनुष्टुप् तथा देवो भगवान् देवकीसुतः ॥ १४
अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयं तस्य शान्त्यर्थे विनियुज्यते[1] ॥ १५

1. क—विष्णुं जिष्णुं महाविष्णुं प्रभविष्णुं महेश्वरम् ।
अनेकरूपदैत्यान्तं नमामि पुरुषोत्तमम् ॥
क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकतैमौक्तिकानाम्
मालाक्लृप्तासनस्थस्स्फटिकमणिनिभैमौक्तिकैर्मण्डिताङ्गः ।

॥ श्री विष्णुसहस्रनाम स्तोत्रारम्भः ॥

ओं, विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १६

पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषस्साक्षी क्षेत्रज्ञोऽक्षर एव च ॥ १७

योगो योगविदां नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुश्श्रीमान् केशवः पुरुषोत्तमः ॥ १८

सर्वश्शर्वश्शिवस्स्थाणुर् भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ १९

स्वयंभूश्शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ २०

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
50विश्वकर्मा मनुस्त्वष्टा स्थविष्ठस्स्थविरो ध्रुवः ॥ २१

अग्राह्यश्शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।

---

पूर्वतोऽनुवृत्तम्—

शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षैर्
आनन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ [अधिकः पाठः]

प्रभूतस्त्रिककु[1]ब्धाम पवित्रं मङ्गलं परम् ॥ २२
ईशानः प्राणदः प्राणो ज्येष्ठश्श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥ २३
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥ २४
सुरेशश्शरणं शर्म विश्वरेताः प्रजाभवः ।
अहस्संवत्सरो व्यालः प्रत्ययस्सर्वदर्शनः ॥ २५
अजस्सर्वेश्वरस्सिद्धस् सिद्धिस्सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ २६
वसुर्वसुमनास्सत्यस् समात्मा सम्मितस्समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ २७
रुद्रो बहुशिरा बभ्रुर् विश्वयोनिश्शुचिश्रवाः ।
अमृतश्शाश्वतस्थाणुर् वरारोहो महातपाः ॥ २८
सर्वगस्सर्वविद्भानुर् विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित् कविः ॥ २९
लोकाध्यक्षस्सुराध्यक्षो धर्माध्यक्षः कृता[2]कृतः ।
चतुरात्मा चतुर्व्यूहश् चतुर्दंष्ट्रश्चतुर्भुजः ॥ ३०
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।

1. ब—द्धाम    2. ब—कृतिः

अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥[150] ३१

उपेन्द्रो वामनः प्रांशुर् अमोघश्शुचिरूर्जितः ।

अतीन्द्रस्सङ्ग्रहस्सर्गो धृतात्मा नियमो यमः ॥ ३२

वेद्यो वैद्यस्सदायोगी वीरहा माधवो मधुः ।

अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ ३३

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।

अनिर्देश्यवपुश्श्रीमान् अमेयात्मा महाद्रिधृक् ॥ ३४

महेष्वासो महीभर्ता श्रीनिवासस्सतां गतिः ।

अनिरुद्धस्सुरानन्दो गोविन्दो गोविदां पतिः ॥ ३५

मरीचिर्दमनो हंसस् सुपर्णो भुजगोत्तमः ।

हिरण्यनाभस्सुतपाः पद्मनाभः प्रजापतिः ॥ ३६

अमृत्युस्सर्वदृक् सिंहस्[200] सन्धाता सन्धिमान् स्थिरः ।

अजो दुर्मर्षणश्शास्ता विश्रुतात्मा सुरारिहा ॥ ३७

गुरुर्गुरुतमो धाम सत्यस्सत्यपराक्रमः ।

निमिषोऽनिमिषस्स्रग्वी वाचस्पतिरुदारधीः ॥ ३८

अग्रणीर्ग्रामणीश्श्रीमान् न्यायो नेता समीरणः ।

सहस्रमूर्धा विश्वात्मा सहस्राक्षस्सहस्रपात् ॥ ३९

आवर्तनो निवृत्तात्मा संवृतस्सम्प्रमर्दनः ।

अहस्संवर्तको वह्निर् अनिलो धरणीधरः ॥ ४०

सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।
सत्कर्ता [1]सत्कृतस्साधुर् जह्नुर्नारायणो नरः ॥ ४१

असङ्ख्येयोऽप्रमेयात्मा विशिष्टश्शिष्टकृच्छुचिः ।
250 सिद्धार्थस्सिद्धसङ्कल्पस् सिद्धिद[2]स्सिद्धिसाधनः ॥ ४२

वृषाही वृषभो विष्णुर् वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तश्श्रुतिसागरः ॥ ४३

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपश् शिपिविष्टः प्रकाशनः ॥ ४४

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धस्स्पष्टाक्षरो मन्त्रश् चन्द्रांशुर्भास्करद्युतिः ॥ ४५

अमृतांशूद्भवो भानुश् शशबिन्दुस्सुरेश्वरः ।
औषधं जगतस्सेतुस् सत्यधर्मपराक्रमः ॥ ४६

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत् कान्तः कामः कामप्रदः प्रभुः ॥ ४७

300 युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ४८

इष्टोऽविशिष्टश्शिष्टेष्टश् शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत् कर्ता विश्वबाहुर्महीधरः ॥ ४९

---

1. क-ख-घ—सत्कृतिः    2. क-ख-घ—सिद्धि

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानम् अप्रमत्तः प्रतिष्ठितः ॥ ५०

स्कन्दस्स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुर् आदिदेवः पुरन्दरः ॥ ५१

अशोकस्तारणस्तारश् शूरश्शौरिर्जनेश्वरः ।
अनुकूलश्शतावर्तः पद्मी पद्मनिभेक्षणः ॥ ५२

पद्मनाभोऽरविन्दाक्षः पद्मगर्भश्शरीरभृत् ।
महर्द्धिर्ऋद्धो[350] वृद्धात्मा महाक्षो गरुडध्वजः ॥ ५३

अतुलश्शरभो भीमस् समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ५४

विक्षरो रोहितो मार्गो हेतुर्दामोदरस्सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ ५५

उद्भवः क्षोभणो देवश् श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ५६

व्यवसायो व्यवस्थानस् संस्थानस्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस् तुष्टः पुष्टश्शुभेक्षणः ॥ ५७

रामो विरामो विरतो मार्गो नेयो नयोऽनयः । [400]
वीरश्शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ५८

वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।

हिरण्यगर्भश्शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ५९

ऋतुस्सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रस्संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ६०

विस्तारस्स्थावरस्स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ६१

अनिर्विण्णस्स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामस्समीहनः ॥ ६२

यज्ञ इज्यो महेज्यश्च क्रतुस्सत्रं सतां गतिः । [450]
सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ६३

सुव्रतस्सुमुखस्सूक्ष्मस् सुघोषस्सुखदस्सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ६४

स्वापनस्स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ६५

धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर् विधाता कृतलक्षणः ॥ ६६

गभस्तिनेमिस्सत्त्वस्थस् सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ६७

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता[500] कपीन्द्रो भूरिदक्षिणः ॥ ६८

सोमपोऽमृतपस्सोमः पुरुजित् पुरुसत्तमः ।
विनयो जयस्सत्यसन्धो दाशार्हस्सात्त्वतां पतिः ॥ ६९

जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ७०

अजो महार्हस्स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दस् सत्यधर्मा त्रिविक्रमः ॥ ७१

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ७२

महावराहो गोविन्दस् सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ७३

वेधास्स्वाङ्गोऽजितः कृष्णो[550] दृढस्सङ्कर्षणोऽच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ७४

भगवान् भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यस् सहिष्णुर्गतिसत्तमः ॥ ७५

सुधन्वा खण्डपरशुर् दारुणो द्रविणप्रदः ।
दिवस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ७६

त्रिसामा सामगस्साम निर्वाणं भेषजं भिषक् ।
सन्न्यासकृच्छमश्शान्तो निष्ठा शान्तिः परायणम् ॥ ७७

शुभाङ्गश्शान्तिदस्स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ ७८

अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः । 600
श्रीवत्सवक्षाश्श्रीवासश्श्रीपतिश्श्रीमतां वरः ॥ ७९

श्रीदश्श्रीशश्श्रीनिवासश्श्रीनिधिश्श्रीविभावनः ।
श्रीधरश्श्रीकरश्श्रेयश्श्रीमाँल्लोकत्रयाश्रयः ॥ ८०

स्वक्षस्स्वङ्गश्शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ८१

उदीर्णस्सर्वतश्चक्षुरनीशश्शाश्वतस्स्थिरः ।
भूशयो भूषणो भूतिर्विशोकश्शोकनाशनः ॥ ८२

अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ८३

कालनेमिनिहा वीरश्[1]शौरिश्शूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥650 ८४

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ८५

ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ८६

1. ख—हावीरश्शूरश्शूरजनेश्वरः; अ-घ—शौरिश्शूरश्शूरजनेश्वरः

महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ८७

स्तव्यस्तवप्रियस्तोत्रं स्तुतस्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ८८

मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ८९

सद्गतिस्सत्कृति[700]स्सत्ता सद्भूतिस्सत्परायणः ।
शूरसेनो यदुश्रेष्ठस् सन्निवासस्सुयामुनः ॥ ९०

भूतावासो वासुदेवस् सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ९१

विश्वमूर्तिर्महामूर्तिर् दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तश् शतमूर्तिश्शताननः ॥ ९२

एको नैकस्सवः कः किं यत्तत् पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ९३

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमश्शून्यो घृता[1]शीरचलश्चलः ॥ ९४

अमानी मानदो मान्यो लोकस्वामी[750] त्रिलोकधृत् ।
सुमेधा मेधजो धन्यस् सत्यमेधा धराधरः ॥ ९५

1. क-घ—चीर

तेजो वृषो द्युतिधरस् सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ९६

चतुर्मूर्तिश्चतुर्बाहुश् चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश् चतुर्वेदविदेकपात् ॥ ९७

समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ९८

शुभाङ्गो लोकसारङ्गस् सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ९९

उद्भवस्सुन्दरस्सुन्दो रत्ननाभस्सुलोचनः ।
अर्को वाजसनश्शृङ्गी जयन्तस्सर्वविज्जयी ॥ १००

800 सुवर्णबिन्दुरक्षोभ्यस् सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो [1]महानिधिः ॥ १०१

कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽ[2]निलः ।
अमृताशोऽमृतवपुस् सर्वज्ञस्सर्वतोमुखः ॥ १०२

सुलभस्सुव्रतस्सिद्धस् शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोऽश्वत्थश् चाणूरान्ध्रनिषूदनः ॥ १०३

सहस्रार्चिस्सप्तजिह्वस् सप्तैधास्सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ १०४

1. ख—महाधनः 2. क-घ—ऽनलः

अणुर्बृहत्कृशस्स्थूलो गुणभृन्निर्गुणो महान् ।
अधृतस्स्वधृत[1]स्वास्यः प्राग्वंशो वंशवर्धनः ॥ १०५

भारभृत् कथितो योगी 850योगीशस्सर्वकामदः ।
आश्रमश्श्रमणः क्षामस् सुपर्णो वायुवाहनः ॥ १०६

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितस्सर्वसहो नियन्ता नियमो यमः ॥ १०७

सत्त्ववान् सात्त्विकस्सत्यस् सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः ॥ १०८

विहायसगतिर्ज्योतिस् सुरुचिर्हुतभुग्विभुः ।
रवि[2]र्विरोचनस्सूर्यस् सविता रविलोचनः ॥ १०९

अनन्तो हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णस्सदामर्षी लोकाधिष्ठानमद्भुतम् ॥ ११०

सनात् सनातनतमः कपिलः कपिरव्ययः । 900
स्वस्तिदस्स्वस्तिकृत् स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ १११

अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगश्शब्दसहश् शिशिरश्शर्वरीकरः ॥ ११२

अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ११३

---

1. ख—स्वास्थ्यः  2. क-ख—विलोच

उत्तारणो दुष्कृतिहा पुण्यो दुस्स्वप्ननाशनः ।
वीरहा रक्षणस्सन्तो जीवनं पर्यवस्थितः ॥ ११४

अनन्तरूपोऽनन्तश्रीर् जितमन्युर्भयापहः ।
चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ ११५

अनादिर्भूर्भुवो लक्ष्मीस् सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर् भीमो भीमपराक्रमः ॥ ११६

950आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगस्सत्पथाचारः प्राणदः प्रणवः पणः ॥ ११७

प्रमाणं प्राणनिलयः प्राण[1]भृत् प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ ११८

भूर्भुवस्स्वस्तरुस्तारस् सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ ११९

यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।
यज्ञान्तकृद्यज्ञगुह्यम् अन्नमन्नाद एव च ॥ १२०

आत्मयोनिस्स्वयंजातो वैखानस्सामगायनः ।
देवकीनन्दनस्स्रष्टा क्षितीशः पापनाशनः ॥ १२१

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यस् सर्वप्रहरणायुधः ॥1000 १२२

---

1. ख-ब—धृक्

श्री सर्वप्रहरणायुध ओं नम इति ॥

[1]इतीदं [2]कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानाम् अशेषेण प्रकीर्तितम् ॥ १२३

य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात् किञ्चित् सोऽमुत्रेह च मानवः ॥ १२४

वेदान्तगो ब्राह्मणस्स्यात् क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धस्स्याच् छूद्रस्सुखमवाप्नुयात् ॥ १२५

धर्मार्थी प्राप्नुयाद्धर्मम् अर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात् कामी प्रजार्थी प्राप्नुयात् प्रजाम् ॥ १२६

भक्तिमान् यस्सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत् प्रकीर्तयेत् ॥ १२७

यशः प्राप्नोति विपुलं [3]याति प्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ १२८

न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान् बलरूपगुणान्वितः ॥ १२९

रोगार्तो मुच्यते रोगाद् बद्धो मुच्येत बन्धनात् ।

---

1. घ—वनमाली गदी शार्ङ्गी शङ्खी चक्री च नन्दकी ।
श्रीमान्नारायणो विष्णुर्वासुदेवोऽभिरक्षतु ॥
वासुदेवो रक्षत्वोन्नम इति । [ अधिकः पाठः ]

2. क-ख-घ—कीर्तनं यस्य   3. घ—ज्ञाति

भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥ १३०

दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन् नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १३१

वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३२

न वासुदेवभक्तानाम् अशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं वाऽप्युपजायते ॥ १३३

इमं स्तवमधीयानश् श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मा सुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३४

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३५

द्यौस्सचन्द्रार्क[1]नक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३६

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १३७

इन्द्रियाणि मनो बुद्धिस् सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३८

सर्वागमानामाचारः प्रथमं परिकल्प्यते ।

---

1. ख—नक्षत्रा

आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३९

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥ १४०

योगो ज्ञानं तथा साङ्ख्यं विद्याश्शिल्पादिकर्म च ।
वेदाश्शास्त्राणि विज्ञानम् एतत् सर्वं जनार्दनात् ॥ १४१

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीँल्लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १४२

इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत् पुरुषश् श्रेयः प्राप्तुं सुखानि च ॥ १४३

विश्वेश्वरमजं देवं जगतः प्रभुमव्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम्[1] ॥ १४४

---

1. अ-क-ख-ग-घ—अर्जुनः—

पद्मपत्रविशालाक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥

श्रीभगवान्—

यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोऽहमेकेन श्लोकेन स्तुत एव न संशयः ॥
*† स्तुत एव न संशय ओं नम इति ।
वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम् ॥
सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ।

[1]न ते यान्ति पराभवम् ओं नम इति ॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
[ अस्मिन्नध्याये १४४ श्लोकाः ]

---

पूर्वतोऽनुवृत्तम्—

नमोस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥ [ अधिकः पाठः ]

* क—कोशमाले

† अ-क-घ—कोशेषु नास्तीदमर्धम्

पार्वत्युवाच—
केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ॥
ईश्वर उवाच—
श्रीराम राम रामेति रमे रामे मनोरमे ।
सहस्रनामतस्तुल्यं रामनाम वरानने ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
इदं मन्त्रं महादेवि जपन्नेव दिवानिशम् ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ [ अधिकः पाठः ]

1. अ—इदं नास्ति

## ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमहिमप्रशंसनपूर्वकं तेषां पूज्यत्वादिकथनम् ॥

युधिष्ठिरः—

के पूज्याः के नमस्कार्याः कथं वर्तेत केषु च ।
किमाचारः कीदृशेषु पितामह न रिष्यते ॥ १

भीष्मः—

ब्राह्मणानां परिभवः सादयेदपि देवताः ।
ब्राह्मणेभ्यो नमस्कृत्वा युधिष्ठिर न रिष्यते ॥ २

सम्पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत् ।
ते हि सर्वानिमाँल्लोकान् धारयन्ति मनीषिणः ॥ ३

ब्राह्मणास्सर्वलोकानां महान्तो धर्मसेतवः ।
धनत्यागाभिरामाश्च वाक्सङ्गमधुराश्च ये ॥ ४

रमणीयाश्च भूतानां नियमेन धृतव्रताः ।
प्रणेतारश्च कोशानां शास्त्राणां च यशस्विनः ॥ ५

तपो येषां धनं नित्यं वाक्चैव विपुलं धनम् ।
प्रसवाश्चापि धर्माणां धर्मज्ञास्सूक्ष्मदर्शनाः ॥ ६

धर्मकामास्स्थिता धर्मे सुकृतैर्धर्मसेतवः ।

यानुपाश्रित्य तिष्ठन्ति प्रजास्सर्वाश्चतुर्विधाः ॥ ७
पन्थानस्स्वर्गनेतारो यज्ञवाहास्सनातनाः ।
पितृपैतामहीं गुर्वीम् उद्वहन्ति धुरं सदा ॥ ८
धुरि ये नावसीदन्ति विषमे [1]सिद्धयो यथा ।
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ॥ ९
भोजनादेव त्रैलोकास् त्रायन्ते महतो भयात् ।
दीपस्सर्वस्य लोकस्य चक्षुश्चक्षुष्मतां तथा ॥ १०
सर्व[2]शीलादिनिधयो निपुणास्सूक्ष्मदर्शिनः ।
गतिज्ञास्सर्वभूतानाम् अध्यात्मगतयस्स्मृताः ॥ ११
आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः ।
परावरविशेषज्ञा गन्तारः परमां गतिम् ॥ १२
विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः ।
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः ॥ १३
चन्दने मलपङ्के च भोजनेऽभोजने समाः ।
तुल्यं येषां दुकूलं च शाणक्षौमाजिनानि च ॥ १४
तिष्ठेयुश्चाप्यभुञ्जाना बहूनि दिवसान्यपि ।
शोषयेयुश्च गात्राणि स्वाध्यायैस्संयतेन्द्रियाः ॥ १५

---

1. क-घ—सिद्धया इव ; ख—ये सिद्धया इव
2. क-घ—शिल्पा

अदैवं दैवतं कुर्युर् भस्म कुर्युश्च ते जगत् ।
लोकानन्यान् सृजेयुश्च लोकपालांश्च कोपिताः ॥ १६

अपेयस्सागरो येषाम् अभिशापान्महात्मनाम् ।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥ १७

देवानामपि ये देवाः कारणं कारणस्य च ।
प्रमाणस्य प्रमाणं च तस्मान्नाभिभवेद्बुधः ॥ १८

तेषां वृद्धाश्च बालाश्च सर्वे सन्मार्गदर्शिनः ।
तपोविद्याविशेषात्तु मानयन्ति परस्परम् ॥ १९

अविद्वान् ब्राह्मणो देये पात्रमावपनं महत् ।
विद्वान् भूयस्तरो देये पूर्णसागरसन्निभः ॥ २०

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यते ॥ २१

हविर्यज्ञं च विवहन् भूय एवाभिशोभते ॥ २१॥

एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत् परम् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥१४१॥

[अस्मिन्नध्याये २२॥ श्लोकाः]

## ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ब्राह्मणमहिमप्रकाशनाय कार्तवीर्यार्जुनकथाकथनारम्भः ॥ १ ॥ दत्तात्रेयाद्वरलाभगर्वितेन तेन दिग्जययात्रायां क्वापि पुरुषे स्वसाम्याभावकथने अशरीरवाण्या ब्राह्मणानामुत्कर्षकथनम् ॥ २ ॥ तेन दर्पात्तदवज्ञाने वायुनाऽपि ब्राह्मणानामेवोत्कर्षे कथिते तेन वायुं प्रति तत्प्रकाशनप्रार्थना ॥ ३ ॥

युधिष्ठिरः—

कां त्वं ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप ।
कं वा धर्मोदयं मत्वा तानर्चसि महामते ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
पवनस्य च संवादम् अर्जुनस्य च भारत ॥ २

सहस्रभुजभृच्छ्रीमान् कार्तवीर्योऽभवत् प्रभुः ।
अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः ॥ ३

स च रत्नाकरवतीं सप्तद्वीपां ससागराम् ।
शशास पृथिवीं सर्वां हैहयस्सत्यविक्रमः ॥ ४

स्वं वित्तं येन दत्तं तु दत्तात्रेयाय [1]कर्मणे ।
क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च ॥ ५

आराधयामास च तं कृतवीर्यात्मजो मुनिम् ।

1. ख—कारणे

न्यमन्त्रयत सन्तुष्टस् स द्विजश्च वरैस्त्रिभिः ॥ ६

स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् ॥ ६॥

अर्जुनः—

सहस्रबाहुता मेऽस्तु यूपमध्ये ग्रहो यथा ॥ ७

मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे ।

विक्रमेण महीं कृत्स्नां जयेयं विपुलव्रतः ॥ ८

तां च धर्मेण सम्प्राप्य पालयेयमतन्द्रितः ।

चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम ॥ ९

तं ममानुग्रहकृते दातुमर्हस्यनिन्दित ।

अनुशासन्तु मां सन्तो मिथ्यावृत्तादपाश्रयम् ॥ १०

भीष्मः—

इत्युक्तस्स द्विजः प्राह तथाऽस्त्विति नराधिपम् ।

एवं भगवतस्तस्य वरादीपिततेजसः ॥ ११

गतस्स्वरथमास्थाय ज्वलनार्कसमप्रभम् ।

अब्रवीद्वीर्यसम्मोहात् को न्वस्ति सदृशो मया ॥ १२

धैर्यशौर्ययशश्शौचैर् विक्रमेणौजसाऽपि वा ।

तद्वाक्यान्तेऽन्तरिक्षे तं वागुवाचाशरीरिणी ॥ १३

अशरीरिणी वाक्—

न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम् ।

सहितो ब्राह्मणेनेह क्षत्रियो रक्षति प्रजाः ॥ १४

अर्जुनः—

कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये ।
कर्मणा मनसा वाचा न मत्तोऽस्ति वरो द्विजः ॥ १५

पूर्वं ब्रह्मोत्तरो वादः क्षत्रियः क्षत्रियोत्तरः ।
मयोक्तौ हेतुयुक्तौ तौ विशेषस्तत्र दृश्यते ॥ १६

ब्राह्मणास्संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम् ।
तान् ब्राह्मणाः कथं विप्राः खादन्ति क्षत्रियान् भुवि ॥ १७

क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम् ।
क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ॥ १८

सर्वतस्त्वप्रधानांस्तान् भैक्षवृत्तीनह सदा ।
आत्मसम्भावितान् विप्रान् स्थापयाम्यात्मनो वशे ॥ १९

[1]कथं यान्ति न चासत्यं गायन्त्या कन्यया दिवि ।
विजेष्याम्यवशान् सर्वान् ब्राह्मणांश्चर्मवाससः ॥ २०

न च मां ख्यापयेद्दृष्टुं त्रिषु लोकेषु किञ्चन ।
देवो वा मानुषो वाऽपि तस्माज्जेष्ये द्विजानहम् ॥ २१

अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् ।
नहि मे संयुगे कश्चित् सोढुमुत्सहते बलम् ॥ २२

भीष्मः—

अर्जुनस्य वचश्श्रुत्वा सन्त्रस्ताऽभून्निशाचरी ।

---

1. ख-घ—कथितं ह्यनयाऽसत्यं

अथैनमन्तरिक्षस्थस् ततो वायुरभाषत ॥ २३

वायुः—

त्यजेमं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु ।

एतेषां कुर्वतः पापं राष्ट्रक्षोभो हि ते भवेत् ॥ २४

अथ च त्वां महीपाल शमयिष्यन्ति वै द्विजाः ।

निरसिष्यन्ति ते राज्यं [1]हतोत्साहं महाबलाः ॥ २५

भीष्मः—

तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः ॥ २५॥

वायुः—

वायुर्वै देवदूतोऽस्मि हितं त्वां प्रब्रवीम्यहम् ॥ २६

अर्जुनः—

अहो त्वयाऽद्य विप्रेषु भक्तिरागः प्रदर्शितः ।

यादृशं पृथिवीभूतं [2]तादृशा बृन्दवद्विजाः ॥ २७

वायो [3]र्हि सदृशं किञ्चिद् ब्रूहि त्वं ब्राह्मणोत्तमम् ।

अपां वा सदृशं ब्रूहि सूर्यस्य नभसोऽपि वा ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

[ अस्मिन्नध्याये २८ श्लोकाः ]

---

1. ख—महोत्साहा 2. ख—तादृशं ब्रूहि वै द्विजम्
3. क—स्त्वस; ख-घ—त्वसदृशं

## ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

कार्तवीर्यार्जुनं प्रति वायुना ब्राह्मणमहिमप्रशंसके स्ववाक्ये प्रामाण्यनिश्चयाय दृष्टान्ततयाऽङ्गिरःप्रभृतिब्राह्मणचरित्रविशेषप्रतिपादनम् ॥

वायुः—

शृणु मूढ गुणान् कांश्चिद् ब्राह्मणानां महात्मनाम् ।
ये त्वया कीर्तिता राजंस् तेभ्योऽथ ब्राह्मणो वरः ॥ १

त्यक्त्वा महीत्वं भूमिस्तु स्पर्धया काश्यपस्य ह ।
नाशं जगाम तां विप्रो व्यष्टम्भयत काश्यपः ॥ २

अक्षया ब्राह्मणा राजन् दिवि चेह च नित्यदा ।
अपिबत् तेजसा ह्यापस् स्वयमेवाङ्गिराः पुरा ॥ ३

स ताः पिबन् क्षीरमिव [1]नातृप्यत महातपाः ।
[2]अपूरयन्महौघेन महीं सर्वां च पार्थिव ॥ ४

तस्मिन्नहं तु क्रुद्धे वै जगत् त्यक्त्वा ततो भयात् ।
व्यतिष्ठमग्निहोत्रे वै चिरमङ्गिरसो भयात् ॥ ५

तथा शप्तश्च भगवान् गौतमेन पुरन्दरः ।
अहल्यां कामयानो वै धर्मार्थे हिंसितस्तथा ॥ ६

---

1. ख-ब—नाकुप्यत 2. ब—आपूरयन्

तथा समुद्रो नृपते पूर्णो दृष्टश्च वारिणा ।
ब्राह्मणैरभिशप्तस्सन् लवणोदः कृतः पुरा ॥ ७

सुवर्णवर्णो निर्धूमस् सङ्गतोर्ध्वशिखः कविः ।
क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः ॥ ८

मरुतश्चूर्णितान् पश्य यैर्हि चूर्णो महोदधिः ।
सुवर्णचारिणा नित्यम् अभिशप्तो द्विजातिना ॥ ९

[1]सम्मतत्वं द्विजातिभ्यश् श्रेष्ठं विद्धि नराधिप ।
गर्भस्थान् ब्राह्मणान् नित्यम् नमस्यति किल प्रभुः ॥ १०

दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम् ।
तालजङ्घं महाक्षत्रम् और्वेणैकेन नाशितम् ॥ ११

त्वया च विपुलं राज्यं बलं धर्मं श्रुतं तथा ।
दत्तात्रेयप्रसादेन प्राप्तं परमदुर्लभम् ॥ १२

अग्निंस्त्वं यजसे नित्यं कस्मादर्जुन ब्राह्मणैः ।
स हि सर्वस्य लोकस्य हव्यवाट् किं न वेत्सि तम् ॥ १३

अथ वा ब्राह्मणश्रेष्ठम् अनुभूतानुपालकम् ।
कर्तारं जीवलोकस्य कस्माज्जानन् विमुह्यसे ॥ १४

तथा प्रजापतिर्ब्रह्मा अव्यक्तप्रभवोऽव्ययः ।
येनेदं विपुलं विश्वं जनितं स्थावरं चरम् ॥ १५

---

1. ख—संनुत

अण्डजातं ब्राह्मणं तु केचिदिच्छिन्त्यपण्डिताः ।
अण्डाद्भिन्ना बभुश्शैला दिशो द्यौः पृथिवी दिवम् ॥ १६

दृष्टवानेतदेवं हि कथं जातस्तथा हि सः ।
स्थानमाकाशमण्डं तु यस्माज्जातः पितामहः ॥ १७

तिष्ठेत् कथमिति ब्रूयान्न किञ्चन तदा भवेत् ।
अहङ्कार इति प्रोक्तस् सर्वतेजोगतिः प्रभुः ॥ १८

नास्त्यन्तमस्ति तु ब्रह्मा स राजन् लोकभावनः ॥ १८॥

भीष्मः—

इत्युक्तस्स तदा तूष्णीम् अभूद्वायुस्तमब्रवीत् ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

## ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

वायुना हैहयं प्रति काश्यपचरित्रकथनम् ॥१॥ तथा उचथ्योपाख्यानकथनारम्भः ॥ २ ॥ सोमेन भद्राभिधायाः स्वकन्याया उचथ्याय भार्यात्वेन प्रदानम् ॥ ३ ॥ पूर्वमेव तां कामितवता वरुणेन विजने तस्या अपहरणम् ॥ ४ ॥ नारदात्तच्छ्रुतवतोचथ्येन कोपात्समुद्रे शोषिते भयाद्वरुणेनोचथ्याय पुनर्भद्राप्रत्यर्पणम् ॥ ५ ॥

वायुः—

इमां [1]भूमिं ब्राह्मणेभ्यो दित्सन् वै दक्षिणां पुरा ।
अङ्गो नाम नृपो राजंस् ततश्चिन्तां मही ययौ ॥ १

धरणीं सर्वभूतानाम् अयं प्राप्य वरो नृपु ।
कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणस्सुताम् ॥ २

सा हि त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम् ।
अयं सराष्ट्रो नृपतिर् मा भूदिति ततोऽगमत् ॥ ३

ततस्तां काश्यपो दृष्ट्वा [2]व्रजन्तीं पृथिवीं तदा ।
प्रविवेश महीं सद्यो युक्तात्मा सुसमाहितः ॥ ४

ऋद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता ।
धर्मोत्तरा नष्टभया भूमिरासीत्ततो नृप ॥ ५

एवं वर्षसहस्राणि दिव्यानि विपुलं व्रतम् ।
त्रिशतं काश्यपो राजन् भूमिरासीदतन्द्रिता ॥ ६

1. क-ध—महीं 2. ख—त्यजन्तीं

अथागम्य तदा राजन् नमस्कृत्याथ काश्यपम् ।
पृथिवी काश्यपी जज्ञे सुता तस्य महात्मनः ॥ ७

एष राजन्नीदृशो वै ब्राह्मणः काश्यपोऽभवत् ।
अन्यं प्रब्रूहि वाऽपि त्वं काश्यपात् क्षत्रियं वरम् ॥ ८

भीष्मः—

तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीद्वचः ॥ ८॥

वायुः—

शृणु राजन्नुचथ्यस्य जातस्याङ्गिरसः कुले ॥ ९

भद्रा सोमस्य दुहिता रूपेण परमा मता ।
यस्यास्तुल्यं पतिं सोम उचथ्यं तममन्यत ॥ १०

[1]सा च तीव्रं तपस्तेपे महाभागा यशस्विनी ।
उचथ्यं तु महाभागं तत्कृते वरयत्तदा ॥ ११

तत आहूय चोचथ्यं ददामीति यशस्विनीम् ।
भार्यार्थे स तु जग्राह विधिवद्भूरिदक्षिणः ॥ १२

तां चाकामयत श्रीमान् वरुणः पूर्वमेव तु ।
समागम्य वनप्रस्थं यमुनायां जहार ताम् ॥ १३

जलेश्वरस्तु हृत्वा ताम् आनयत् स्वपुरं प्रति ।
परमाद्भुतसङ्काशं षट्सहस्रशतह्रदम् ॥ १४

न हि रम्यतरं किञ्चित् तस्मादन्यत् पुरोत्तमम् ।

1. अ—अर्धचतुष्टयं नास्ति

प्रासादैरप्सरोभिश्च दिव्यैः काम्यैश्च शोभितम् ॥ १५

तत्र देवस्तया सार्धं रेमे राजञ्जलेश्वरः ।
तदाख्यातमुचथ्याय ततः पत्न्याश्च मर्दनम् ॥ १६

तच्छ्रुत्वा नारदात् सर्वम् उचथ्यो नारदं तदा ।
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः ॥ १७

मद्वाक्यान्मुच्यतां भार्या कस्मात्तां हृतवानसि ।
लोकपालोऽसि लोकानां न लोकस्य विलुम्पकः ॥ १८

सोमेन दत्ता मे भार्या त्वया चापहृताऽद्य वै ॥ १८॥

इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः ।
मुञ्च भार्यामुचथ्यस्येत्यथ तं वरुणोऽब्रवीत् ॥ १९॥

वरुणः—

ममैषा सुप्रिया भीरुर् नैतामुत्स्रष्टुमुत्सहे ॥ २०

वायुः—

इत्युक्तो वरुणेनाथ नारदः प्राप्य वै मुनिम् ।
उचथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव ॥ २१

नारदः—

गले गृहीत्वा क्षिप्तोऽस्मि वरुणेन महामुने ।
[1]न प्रायच्छद्धि ते भार्यां यत्ते कार्यं कुरुष्व तत् ॥ २२

1. घ—न प्रयच्छति

वायुः—

नारदस्य वचश्श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः ।
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः ॥ २३

पीयमाने च सर्वस्मिंस् तोये तु सलिलेश्वरः ।
सुहृद्भिः क्षिप्यमाणो वै नैव मुञ्चति तां तदा ॥ २४

ततः क्रुद्धोऽब्रवीद्भूमिम् उचथ्यो ब्राह्मणोत्तमः ॥ २४॥

उचथ्यः—

दर्शयस्व बिलं भद्रे षट्सहस्रशतह्रदम् ॥ २५

वायुः—

ततस्तदिरिणं जातं समुद्रस्यापसर्पतः ।
तस्माद्देशान्नदीं चैव प्रोवाचाथ द्विजोत्तमः ॥ २६

उचथ्यः—

अदृश्या गच्छ भीरु त्वं सरस्वति मरुं प्रति ।
अपुण्यभूषो भवतु देशस्त्यक्तस्त्वया शुभे ॥ २७

वायुः—

ततश्चूर्णीकृते देशे भद्रामादाय वारिपः ।
अददाच्छरणं गच्छन् भार्यामाङ्गिरसाय वै ॥ २८

प्रतिगृह्य तु तां भार्याम् उचथ्यस्सुमना भवत् ।
मुमोच च जगद्दुःखान्मरुतश्चैव निर्मलाः ॥ २९

ततस्स लब्ध्वा तां भार्यां वरुणं प्राह धर्मवित् ।

उचथ्यस्सुमहातेजा यत्तच्छृणु नराधिप ॥ ३०

उचथ्यः—

मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप ॥ ३०॥

वायुः—

[1]इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ ॥ ३१

एष राजन्नीदृशो वै उचथ्य ऋषिसत्तमः ।

ब्रवीम्यन्यं ब्रूहि वा त्वम् उचथ्यात् क्षत्रियं वरम् ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥
[ अस्मिन्नध्याये ३२ श्लोकाः ]

## ॥ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

वायुना हैहयार्जुनं प्रति स्वतेजसा दैत्यदाहनरूपागस्त्यवसिष्ठचरितकीर्तनम् ॥

भीष्मः—

इत्युक्तस्स तदा तूष्णीम् अभूद्वायुस्तमब्रवीत् ॥ ॥

वायुः—

शृणु राजन्नगस्त्यस्य माहात्म्यं ब्राह्मणस्य ह ॥ १

असुरैर्निर्जिता देवा निरुत्साहाश्च ते कृताः ।

1. क-ख-घ—तमुक्त्वा

यज्ञाश्चैषां हृतास्सर्वे पितृभ्यश्च स्वधा तथा ॥ २
कर्मेज्या मानवानां च दानवैर्हैहयर्षभ ।
भ्रष्टैश्वर्या यथा मूकाश् चेरुः पृथ्वीमिति श्रुतिः ॥ ३
ततः कदाचित्ते राजन् दीप्तमादित्यवर्चसम् ।
ददृशुस्तेजसा युक्तम् अगस्त्यं विपुलव्रतम् ॥ ४
अभिवाद्य च तं देवा दृष्ट्वा च यशसा वृतम् ।
इदमूचुर्महात्मानं वाक्यं काले नराधिप ॥ ५

देवाः—

दानवैर्युधि भग्नाश्च तथैश्वर्याच्च भ्रंशिताः ।
तस्मान्नोऽस्मात्तीव्रभयात् त्राहि त्वं मुनिपुङ्गव ॥ ६

वायुः—

इत्युक्तस्स तदा देवैर् अगस्त्यः कुपितोऽभवत् ।
प्रजज्वाल च तेजस्वी कालाग्निरिव सङ्क्षये ॥ ७
तेन [1]दीप्ताग्निजालेन निर्दग्धा दानवास्तदा ।
अन्तरिक्षान्महाराज न्यपतन्त सहस्रशः ॥ ८
दह्यमानास्तु ते दैत्या अगस्त्यस्य च तेजसा ।
उभौ लोकौ परित्यज्य ययुः काष्ठां हि दक्षिणाम् ॥ ९
बलिस्तु यजते यज्ञम् अश्वमेधं महीं गतः ।
येऽन्ये खस्था जलस्थाश्च तेन दग्धा महासुराः ॥ १०

1. क-ब—दीप्तांशु

त्यक्तलोकाः पुनः प्राप्तास् सुरैश्शान्तभयैर्नृप ।
अथैनमब्रुवन् देवा भूमिष्ठानसुराञ्जहि ॥ ११

इत्युक्त आह देवान् स न शक्नोमि महीं गतान् ।
दग्धुं तपो हि क्षीयेत न धक्ष्यामीति पार्थिव ॥ १२

एवं दग्धा भगवता दानवास्स्वेन तेजसा ।
अगस्त्येन तदा राजंस् तपसा भावितात्मना ॥ १३

ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयाऽनघ ।
ब्रवीम्यन्यं ब्रूहि वा त्वम् अगस्त्यात् क्षत्रियं वरम् ॥ १४

भीष्मः—

इत्युक्तस्स तदा तूष्णीम् अभूद्वायुस्तमब्रवीत् ॥ १४॥

वायुः—

शृणु राजन् वसिष्ठस्य मुख्यं कर्म यशस्विनः ॥ १५

वैखानसविधानेन गङ्गातीरं समाश्रिताः ।
आदित्यास्सत्रमीहन्ते सरो वैखानसं प्रति ॥ १६

वसिष्ठं मनसा ज्ञात्वा गत्वा तत्त्वस्य गोचरम् ॥ १६॥

यजमानांस्तु तान् दृष्ट्वा व्यग्रान् दीक्षानुकर्शितान् ।
हन्तुमिच्छन्ति शैलाभा बलिनो नाम दानवाः ॥ १७॥

अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः ।
हता हता वै ते तत्र जीवन्त्याप्लुत्य दानवाः ॥ १८॥

ते प्रगृह्य महाघोरान् पर्वतान् परिघान् द्रुमान् ।
व्यक्षोभयन्त सलिलम् उत्थितं शतयोजनम् ॥ १९॥
[1]अभ्यद्रवंश्च देवांस्ते सहस्राणि दशैव हि ।
ततस्तैरर्दिता देवा वसिष्ठं शरणं ययुः ॥ २०॥
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः ॥ २१
जनांस्तान् दुःखितान् दृष्ट्वा आनृशंस्यपरो मुनिः ।
अयत्नेनादहत् सर्वान् ज्वलता स्वेन तेजसा ॥ २२
कैलासं प्रस्थितां चापि नदीं गङ्गां महातपाः ।
अनयत्तत् सरो दिव्यं तया भिन्नं च तत् सरः ॥ २३
सरो भिन्नं तया नद्या सरयू[2]स्सा ततोऽभवत् ।
हतास्तु बलिनो यत्र स देशो बलिनोऽभवत् ॥ २४
एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः ।
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना ॥ २५
एतत् कर्म वसिष्ठस्य कथितं ते मयाऽनघ ।
ब्रवीम्यन्यं ब्रूहि वा त्वं वसिष्ठात् क्षत्रियं वरम् ॥ २६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
[ अस्मिन्नध्याये २६ श्लोकाः ]

1. क-घ—अर्धचतुष्टयं नास्ति 2. क-घ—नामतोऽभवत्

## ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥

वायुना हैहयार्जुनं प्रति देवासुरयुद्धे राहुणा चन्द्रसूर्यपराभवनान्धकारप्राप्तौ देवानां प्रार्थनया चन्द्रीभूय तमोनिरसनरूपात्रिमहिमोक्तिः ॥ १ ॥ तथा सवज्रेन्द्रहस्तस्तम्भनेनाश्विनोः सोमपानदापनरूपच्यवनमहिमोक्तिः ॥ २ ॥

भीष्मः—

इत्युक्तस्त्वर्जुनस्तूष्णीम् अभूद्वायुस्तमब्रवीत् ॥ ॥

वायुः—

शृणु मे हैहयश्रेष्ठ कर्मात्रेस्सुमहात्मनः ॥ १

घोरे तमस्ययुध्यन्त सहसा देवदानवाः ।
अविध्यत शरैस्तत्र स्वर्भानुस्सोमभास्करौ ॥ २

अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः ।
देवा नृपतिशार्दूल न देवा बलिनस्तदा ॥ ३

असुरैर्युध्यमानास्ते क्षीणप्राणा दिवौकसः ।
अपश्यन्त तपस्यन्तम् अत्रिं विप्रं महावने ॥ ४

[1]अथैनमब्रुवन् देवाश् शान्तक्रोधं जितेन्द्रियम् ॥ ४॥

देवाः—

असुरैररिभिर्वध्यौ चन्द्रादित्याविमावुभौ ॥ ५

1. अ-क-ख—अर्धद्वयं नास्ति

वयं हन्यामहे चापि शत्रुभिस्तमसा वृते ।
नाभ्यगच्छाम शान्तिं च भयात्त्रायस्व नः प्रभो ॥ ६

वायुः—

कथं रक्षामि भवतस् तेऽब्रुवंश्चन्द्रमा भव ।
एवमुक्तस्तदाऽत्रिस्स तमोनुदभवच्छशी ॥ ७
अपश्यत् सौम्यभावं च सूर्यस्यैव प्रदर्शनम् ॥ ७॥

दृष्ट्वा नातिप्रभं सोमं तथा सूर्यं च पार्थिव ।
प्रकाशमकरोदत्रिस् तपसा स्वेन संवृतः ॥ ८॥

जगद्धि तिमिरान्धं यत् प्रदीप्तमकरोत्तदा ।
व्यजयद्दस्युसङ्घांश्च देवतार्थे स्वतेजसा ॥ ९॥

अत्रिणा दह्यमानांस्तान् दृष्ट्वा देवा महाऽसुरान् ।
पराक्रमैस्तेऽपि तदा व्यनिघ्नन्तात्रिरक्षिताः ॥ १०॥
उद्भासितश्च सविता देवास्त्राता हतासुराः ॥ ११

अत्रिणा त्वथ सोमत्वं कृतमुत्तमतेजसा ।
अद्वितीयेन मुनिना जपता चर्मवाससा ॥ १२

फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम् ।
तस्यापि विस्तरेणोक्तं कर्मात्रेस्सुमहात्मनः ॥ १३
ब्रवीम्यन्यं ब्रूहि वा त्वम् अत्रितः क्षत्रियं वरम् ॥ १३॥

भीष्मः—

इत्युक्तस्त्वर्जुनस्तूष्णीम् अभूद्वायुस्तमब्रवीत् ॥ १४

वायुः—

शृणु राजन् महत् कर्म च्यवनस्य महात्मनः ॥ १४॥

अश्विनोस्सम्प्रतिश्रुत्य च्यवनः पाकशासनम् ।
प्रोवाच सहितं देवैस् सोमपावश्विनौ कुरु ॥ १५॥

इन्द्रः—

अस्माभिर्न समावेतौ भवेतां सोमपौ कथम् ।
देवैर्न हि समावेतौ तस्मान्नैवं वदस्व नः ॥ १६॥

अश्विभ्यां सह नेच्छामि पातुं सोमं महाव्रत ।
पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ॥ १७॥

च्यवनः—

न चेत् करिष्यसि वचो मयोक्तं बलसूदन ।
मया प्रमथितस्सद्यस् सोमं पास्यसि वै मखे ॥ १८॥

वायुः—

ततः कर्म समारब्धं [1]हिताय सहसाऽश्विनोः ।
च्यवनेन ततो मन्त्रैर् अभिभूतास्सुरास्तदा ॥ १९॥

ततः कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः ।
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ॥ २०॥

1. घ—इतश्चत्वारः पादा न सन्ति

तथा वज्रेण भगवान् अमर्षाकुललोचनः ॥ २१

तमापतन्तं दृष्ट्वैव च्यवनस्तपसाऽन्वितः ।
अद्भिस्सिक्त्वा स्तम्भयति सवज्रं सहपर्वतम् ॥ २२

अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव हि ।
मदं नामाहुतिमयं व्यादितास्यं महामुनिः ॥ २३

तस्य दन्तास्सहस्रं तु बभूवुश्शतयोजनाः ।
द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः ॥ २४

हनुस्तस्याभवद्भूमावेका चास्यास्पृशद्दिवम् ।
जिह्वामूले स्थितास्तस्य सर्वे देवास्सवासवाः ॥ २५
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ॥ २५॥

ते सम्मन्त्र्य ततो देवा मदस्यास्यगतास्तदा ।
अब्रुवन् सहिताश्शक्रं प्रणमास्मै द्विजातये ॥ २६॥
अश्विभ्यां सह सोमं च पिबामो विगतज्वराः ॥ २७

स तु तं प्राणमच्छक्रश्च्यवनश्च चकार तत् ।
वचनं कृतवन्तौ तावश्विनौ सोमपायिनौ ॥ २८

तदा प्रत्याहरत् कर्म मदं च व्यभजन्मुनिः ।
अक्षेषु मृगयायां च पानेषु स्त्रीषु वीर्यवान् ॥ २९

एतैर्दोषैर्नरो राजन् क्षयं याति न संशयः ।
तस्मादेतान् नरो नित्यं दूरतः परिवर्जयेत् ॥ ३०

एतत् ते च्यवनस्यापि कर्म राजन् प्रकीर्तितम् ।
ब्रवीम्यन्यं ब्रूहि वा त्वं ब्राह्मणात् क्षत्रियं वरम् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

---

## ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

---

वायुना हैहयं प्रति देवानां प्रार्थनया अग्निसर्जनेन कपहननरूप-ब्राह्मणमहिमोक्तिः ॥

---

भीष्मः—

तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीद्वचः ॥ ॥

वायुः—

शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप ॥ १

मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः ।
तदैव च्यवनेन द्यौर् हृता तेषां वसुन्धरा ॥ २

उभौ लोकौ हृतौ मत्वा ते देवा दुःखिता भवन् ।
शोकार्ताश्च महात्मानं ब्रह्माणं शरणं ययुः ॥ ३

देवाः—

मदस्यास्यविषक्तानाम् अस्माकं लोकपूजित ।

च्यवनेन हृता भूमिः [1]कपैश्चापि दिवं प्रभो ॥ ४

ब्रह्मा—

गच्छध्वं शरणं विप्रान् आशु सेन्द्रा दिवौकसः ।

प्रसाद्य तानुभौ लोकाववाप्स्यथ यथापुरम् ॥ ५

वायुः—

ते ययुश्शरणं विप्रांस् त ऊचुः काङ्क्षयामहे ।

इत्युक्तास्ते द्विजान् प्रोचुर् मद[2]कृत्याकुलीकृताः ॥ ६

भूलोकस्य विजेतारो वयमित्यब्रुवन् द्विजाः ॥ ६॥

देवाः—

सर्वे वेदविदः [3]प्रोक्तास् सर्वे च क्रतुयाजिनः ।

सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः ॥ ७॥

श्रीश्चैव रमते तेषु धारयन्ति श्रियं च ते ।

वृथा दारान् न गच्छन्ति वृथा मांसं न भुञ्जते ॥ ८॥

दीप्तमग्निं जुह्वते च गुरूणां वचने स्थिताः ।

सर्वे सुनियतात्मानो बालानां संविभागिनः ॥ ९॥

उपेत्य शनकैर्दारान् सेवन्ति न रजस्वलाम् ।

सुगतिं चैव गच्छन्ति तथैव शुभकर्मिणः ॥ १०॥

1. घ—कूपै 2. क-घ—शक्त्याऽऽकु
3. क-ख—प्राज्ञाः

अभुक्तवत्सु नाश्नन्ति गर्भिणीवत्सकादिषु ।
पूर्वाह्णेषु न दीव्यन्ति दिवा चैव न शेरते ॥ ११॥

एतैश्चान्यैश्च बहुभिर् गुणैर्युक्तान् कथं कपान् ।
विजेष्यथ निवर्तध्वं निवृत्तानां शुभं हि वः ॥ १२॥

ब्राह्मणाः—

कपान् वयं विजेष्यामो ये देवास्ते वयं स्मृताः ।
तस्माद्वध्याः कपाऽस्माकं प्रयोज्यास्मासु यास्यथ ॥ १३॥

वायुः—

तेऽथ गत्वा कपान् प्राहुर् न वो विप्राः प्रियङ्कराः ।
महोदग्राः कपा वेगाद् विप्रान् सर्वे समाद्रवन् ॥ १४॥

समुदग्रध्वजान् दृष्ट्वा कपान् सर्वे द्विजातयः ।
व्यसृजञ् ज्वलितानग्नीन् कपानां प्राणनाशनान् ॥ १५॥

ब्रह्मसृष्टा हव्यभुजः कपान् भुक्त्वा समाद्रवन् ।
नभसीव यथाऽभ्राणि व्यराजन्त नराधिप ॥ १६॥

प्रशशंसुर्द्विजान् देवा ब्रह्माणं च यशस्विनम् ॥ १७

[1]तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः ।
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम् ॥ १८

1. घ—अस्मिन्नध्याये इत आरभ्य षट् श्लोकाः अनन्तराध्याये २६॥ तम-पर्यन्त श्लोकाश्च नोपलभ्यन्ते

भीष्मः—

इत्युक्तवचनं वायुम् अर्जुनः प्रत्यभाषत ।
प्रतिपूज्य महाभागो यत्तच्छृणु नराधिप ॥ १९

अर्जुनः—

जीवाम्यहं ब्राह्मणार्थे सर्वथा सततं प्रभो ।
ब्रह्मणे ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः ॥ २०

दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं फलम् ।
लोके च परमा कीर्तिर् धर्मश्च चरितो महान् ॥ २१

अहो ब्राह्मणकर्माणि मयि मारुत तत्त्वतः ।
त्वया प्रोक्तानि कार्त्स्न्येन श्रुतानि प्रयतेन हि ॥ २२

वायुः—

ब्राह्मणान् क्षत्रधर्मेण पालयस्वेन्द्रियाणि च ।
विप्रेभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥१४७॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

## ॥ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

युधिष्ठिरेण ब्राह्मणमहिमानं पृष्टेन भीष्मेण तं प्रति स्वस्य कुण्ठितेन्द्रियादिशक्तिकतया मुमूर्षानिवेदनपूर्वकं कृष्णात्तदवगमनचोदना ॥ १ ॥ तथा कृष्णस्य श्रीनारायणात्मकत्वनिवेदनेन तन्महिमानुवर्णनम् ॥ २ ॥

युधिष्ठिरः—

ब्राह्मणानर्चसे राजन् सततं संशितव्रतान् ।
कं तु धर्मोदयं दृष्ट्वा तानर्चसि [1]जनाधिप ॥ १

कां वा ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा महाव्रत ।
तानर्चसि महाबाहो सर्वमेतद्वदस्व मे ॥ २

भीष्मः—

एष ते केशवस्सर्वम् आख्यास्यति महामतिः ।
व्युष्टिं ब्राह्मणपूजायां दृष्ट्वा पुष्टिं महाव्रत ॥ ३

बलं श्रोत्रे वाङ्मनश्चक्षुषी च
ज्ञानं तथा न विशुद्धं ममाद्य ।
देहन्यासो नातिचिरान्मतो मे
[2]स चातितूर्णं सविताऽद्य याति ॥ ४

1. क-ख—नराधिप
2. अ-घ—न चातिकण्ठं

उक्ता धर्मा ये पुराणे महान्तो
राजन् विप्राणां क्षत्रियाणां विशां च ।
ये शूद्राणां धर्ममुपासते ते
तानेव कृष्णादुपशिक्षस्व पार्थ ॥ ५

अहं ह्येनं वेद्मि तत्त्वेन कृष्णं
योऽयं हि यच्चास्य बलं पुराणम् ।
अमोघात्मा केशवः कौरवेन्द्र
स ते धर्मं वक्ष्यति संशयेषु ॥ ६

कृष्णः पृथ्वीमसृजद्वै बभूव
वराहोऽयं भीमवपुः पुराणः ।
अस्माद्वायुश्चान्तरिक्षं दिवं च
दिशश्चतस्रः प्रदिशश्चतस्रः ॥ ७

सृष्टिस्तथैवेयमनुप्रसूता
स निर्ममे लोकमिमं पुराणम् ॥ ७॥

अस्य नाभ्यां पुष्करं सम्प्रभूतं
यत्रोत्पन्नस्स्वयमेवामितौजाः ।
येन च्छिन्नं तत्तमः पार्थ घोरं
यत्र तिष्ठन्त्यर्णवास्तच्छयानाः ॥ ८॥

कृते युगे धर्म आसीत् समग्रस्
त्रेताकाले यज्ञमनुप्रपन्नः ।
बलं चासीद्द्वापरे पार्थ [1]कृत्स्नं
कलावधर्मः क्षितिमाजगाम ॥ ९॥

स एव पूर्वं निजघान दैत्यान्
स एव देवश्च बभूव सम्राट् ।
स भूतानां भावनो भूतभव्यस्
स विश्वस्यास्य जगतस्सुगोप्ता ॥ १०॥

यदा धर्मो याति वशे सुराणां
तदा कृष्णो जायते मानुषेषु ।
धर्मे स्थित्वा स तु वै भावितात्मा
परांश्च लोकानपरांश्च पाति ॥ ११॥

त्याज्यांस्त्यक्त्वा चासुराणां वधेन
कार्याका[2]र्यं कारणात्माभिपाती ।
कृतं करिष्यन् क्रियते च सर्वं
देवो राहुस्सोममिवापिबद्वै ॥ १२॥

शतक्रतुं जित्य स विश्वकर्मा
स विश्वसृक् पार्थ स विश्वरूपः ।

1. क-ख—कृष्णः
2. ख—र्यं कारणं चाभिपाति। क्रियाः करिष्यन् क्रियते कर्म सर्वं देवा

स विश्वधृग्विश्वभुग्विश्वजिच्च
स शूलधृक् छोणितभुक्कराळः ॥ १३॥
तं कर्मभिर्विदितं वै स्तुवन्ति
रथन्तरैस्सामगाश्च स्तुवन्ति ।
[1]तं गन्धर्वाश्चाप्सरसश्च नित्यम्
उपतिष्ठन्ते विधिना पापशान्त्यै ॥ १४॥
तं राक्षसाश्चापि नमन्ति सर्वे
स राजन्यानां विजिगीषुरेकः ।
तमध्वरे शंसितारस्तुवन्ति
[2]तं ब्राह्मणा ब्रह्ममन्त्रैस्स्तुवन्ति ॥ १५॥
तस्मै हविरध्वर्यवः कल्पयन्ते
स पौराणीं ब्रह्मगुहां प्रविष्टः ।
तस्मिन् सत्रे भारतानां ददर्श
स चैव गामुज्जहाराग्र्यकर्मा ॥ १६॥
विक्षोभ्य दैत्यानुरगांश्च सर्वान्
तस्य भक्षान् विविधान् भक्षयन्ति ।
तमेवार्हं वाहनं वेदयन्ते
तस्यान्तरिक्षं पृथिवी दिशश्च ॥ १७॥

1. अ-क-घ—पञ्च पादा न सन्ति
2. अ—अयं पादो नास्ति

सर्वं वशे तिष्ठति शाश्वतस्य
स कुम्भरेतास्ससृजे वै सुराणाम् ।
यत्रोत्पन्नमृषिमाहुर्वसिष्ठम्
स मातरिश्वा विभुरश्ववाजी ॥ १८॥

स रश्मिमान् सविता चादिदेवस्
तेनासुरा विजितास्सर्वे एव ।
तस्य कान्त्या विजितानीह त्रीणि
स देवानां मानुषाणां पितॄणाम् ॥ १९॥

तमेवाहुर्यज्ञविदः पुराणम्
स एव काले विभजन्नुदेति ।
तस्योत्तरं दक्षिणं चायने द्वे
तस्यैवोर्ध्वं तिर्यगधश्चरन्ति ॥ २०॥

गभस्तयो मेदिनीं तापयन्तस्
तं ब्राह्मणा वेदविदो वदन्ति ।
तस्यादित्यो गामुपयुज्य भाति
तमांसीमान्यस्य सदापनीतम् ॥ २१॥

तमध्वरे वेदविदः पठन्ति
स एव युक्तश्चक्रमिह त्रिधातु ।

सप्ताश्वयुक्तं वहते वै त्रिधामा
हिरण्मयस्सप्तगूढस्स संवित् ॥ २२॥

चतुर्बाहुः पद्मगः पद्मनाभः
कृष्णो लोकान् धारयते तथैकः ।
प्राश्नन्ननश्नंश्च स एव धीरः
कृष्णं सदा पार्थ कर्तारमेति ॥ २३॥

तदा यदा विश्वगतो महात्मा
तृप्तो विभुः खाण्डवे धूमकेतुः ।
स राक्षसानुरगांश्चाविभज्य
सर्वत्रगस्सर्वमग्नौ जुहोति ॥ २४॥

स एवायं श्वेतहयान् प्रयच्छन्
स एवाश्वै रथ धर्माश्चकार ।
त्रिबन्धुरस्तस्य रथ[1]स्त्रिचक्रस्
त्रिवृच्छिराश्चतुरश्रश्च तस्य ॥ २५॥

विधायैवं विदधत् पद्मनाभिस्
स निर्ममे गां दिवमन्तरिक्षम् ।
हृषीकेशोऽसावतिदीप्ततेजास्
स लङ्घयन् वै सरितो जिघांसन् ॥ २६॥

1. ख—स्त्रिविक्रम

स तान् प्रभञ्जन् प्रहर [1]न्नजस्य
महेन्द्रादीन् पालयते महाध्वरे ।
तमृक्सहस्रैः पुरुषं पुराणं
[2]सुपर्णमादौ चयने स्तुवन्ति ॥ २७॥

दुर्वासा वै तेन नान्येन शक्यो
गृहे राजन् वासयितुं महौजाः ।
तमेवाहुरृषिमेकं पुराणं
स विश्वकृद्विदधात्यात्मभावान् ॥ २८॥

वेदान् यो वै वेदयते स वेद्यान्
विधींश्च सर्वान् श्रावयते पुराणान् ।
काम्ये वेदे लौकिके यत् फलं च
विष्वक्सेनं सर्वमेतद्ब्रवीमि ॥ २९॥

ज्योतींषि शुक्लानि च यानि लोके
त्रयो लोका लोकपालास्त्रयी च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे [3]वेदा देवकीपुत्र एव ॥ ३०॥

संवत्सरस्स ऋतुस्सोऽर्धमासस्
सोऽहोरात्रस्सोऽयनं सैव मासाः ।

---

1. ख—न्निरस्य  घ—न्नशस्य
2. ख—पादचतुष्टयं नास्ति  3. ख-घ—देवा

काष्ठा मुहूर्ताश्च कलाः क्षणाश्च
[1]विष्वक्सेनं सर्वमेतत् प्रतीहि ॥ ३१॥

चन्द्रादित्यौ ग्रहनक्षत्रतारास्
सर्वाणि दर्शान्यथ पौर्णमासाः ।
नक्षत्रयोगा ऋतवश्च पार्थ
विष्वक्सेनात् सर्वमेतत् प्रसूतम् ॥ ३२॥

रुद्रादित्या वसवोऽथाश्विनौ च
साध्या विश्वे मरुतष्षड् गुणाश्च ।
प्रजापतिर्देवमाताऽदितिश्च
सर्वे कृष्णादृषयश्चापि सिद्धाः ॥ ३३॥

वायुर्भूत्वा विक्षिपते च विश्वम्
अग्निर्भूत्वा दहते विश्वरूपः ।
आपो भूत्वा मज्जयते च सर्वं
ब्रह्मा भूत्वा सृजते विश्वसङ्घान् ॥ ३४॥

वेद्यं च यो वेदयिता च वेत्ता
वेद्यं च यद्वेदयते च वेद ।
विधिश्च यश्चाश्रयते विधेयं
धर्मे च वेदे च बले च सर्वम् ॥ ३५॥

1. ख—विष्वक्सेनात् सर्वमेतत् प्रसूतम्

चराचरं [1]तं केशवं त्वं प्रतीहि
वशे स्थितं तस्य समस्तयोनेः ।
ज्योतिर्भूत्वाऽसौ प्रथमं पुरस्तात्
प्रकाशयन् प्रभया विश्वरूपः ॥ ३६॥

अपस्सृष्ट्वा सोमभूतात्मयोनिः
पुराऽकरोत् सर्वमेतद्धि विश्वम् ॥ ३७

ऋतून् मासान् विविधं कार्यजातं
विद्युत्सङ्घैरापतन्तश्च मेघाः ।
सर्वं कृष्णात् स्थावरं जङ्गमं च
[2]विश्वात्माऽसौ विष्णुरेतत् प्रतीहि ॥ ३८

विश्वावासं निर्गुणं वासुदेवं
सङ्कर्षणं जीवभूतं वदन्ति ।
ततः प्रद्युम्नमनिरुद्धं चतुर्थम्
आज्ञापयत्यात्मयोनिर्महात्मा ॥ ३९

स पञ्चधा पञ्चगुणोपपन्नं
[3]पश्चादिदं विश्वमेतत् सिसृक्षुः ।

1. क-ख-घ—तं इतिपदं नास्ति
2. क—षट्पादा न सन्ति
3. क—विश्वादिदं; ख—विश्वाख्यातो
घ—विश्वादयो

ततश्चकारावनिं मारुतं च
खं ज्योतिरापश्च तथैव चार्थान् ॥ ४०

स स्थावरं जङ्गमं चैवमेतच्
चतुर्विधं लोकमिमं महात्मा ।
ततो भूमिं व्यदधात् पञ्चजातं
द्यावापृथिव्यग्निरथाम्बुवायू ॥ ४१

तेन विश्वं कृतमेतद्धि राजन्
स वै द्विजानां पतिरध्यात्मयोनिः ।
[1]स वै देवानसुरान् मानुषांश्च
[2]स वै लोकानथ पितॄन् प्रजाश्च ॥ ४२

समासेन विविधान् पाति लोकान्
[3]सदा भूतान् भूतपतिस्सिसृक्षुः ॥ ४२॥

शुभाशुभं स्थावरं जङ्गमं च
विश्वाख्यातात् [4]सर्वमेतत् प्रतीहि ।
यद्वर्तते यच्च भविष्यतीह
सर्वं चैतत् केशवं त्वं प्रतीहि ॥ ४३॥

1. ख-घ—ततो दे
2. ख—लोकानृषीनथ
3. ख—सदा हर्ता भूतपतिः
4. क-घ—सत्य

मृत्युश्चैव प्राणिनामन्तकाले
साक्षात् कृष्णश्शाश्वतो [1]देहभाजः ।
भूतं च यच्चेह न विद्म किञ्चिद्
विष्वक्सेनं सर्वमेतत् प्रतीहि ॥ ४४॥

[2]धर्मं प्रशस्तं लोकेषु पुण्यं यच्च शुभाशुभम् ।
सर्वं तत् केशवोऽचिन्त्यो विपरीतमतो भवेत् ॥ ४५॥

तादृशः केशवो देवो भूयो नारायणः परः ।
आदिरन्तश्च मध्यं च देशतः कालतो हरिः ॥ ४६॥

जगतां तस्थुषां चैव भूतानां प्रभवाप्ययः ॥ ४७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥१४८॥
[ अस्मिन्नध्याये ४७ श्लोकाः ]

---

1. ख—देहसाक्षी
2. क-ख-घ—यत् प्रशस्तं हि

## ॥ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति ब्राह्मणानां महत्तरत्वे दृष्टान्ततया स्वेन प्रद्युम्नं प्रत्युक्तदुर्वासश्चरितप्रतिपादनम् ॥

वैशम्पायनः—

[1]पितामहवचश्श्रुत्वा राजंस्ते प्रपितामहः ।
प्रणम्य पुण्डरीकाक्षम् इदं वचनमब्रवीत् ॥ १

युधिष्ठिरः—

ब्रूहि ब्राह्मणपूजायां व्युष्टिं च मधुसूदन ।
वेत्ता त्वमस्य चार्थस्य विदित्वाऽऽह पितामहः ॥ २

श्रीभगवान्—

शृणुष्वावहितो राजन् द्विजानां पूजनं सदा ।
यथातत्त्वेन वदतो गुणान् मे कुरुसत्तम ॥ ३
प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः ॥ ३॥

प्रद्युम्नः—

किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन ॥ ४
ईश्वरस्त्वं कुतस्तात इह चैव परत्र च ।
सदा द्विजातीन् सम्पूज्य किं फलं तत्र मानद ॥ ५

1. अ-क-ब—अर्धद्वयं नास्ति

एतद् ब्रूहि पितस्सत्यं सुमहान् संशयोऽत्र मे ॥ ५॥

श्रीभगवान्—

इत्युक्तवचनस्तेन प्रद्युम्नेन तदा त्वहम् ।
प्रत्यब्रवं महाराज यत्तच्छृणु समाहितः ॥ ६॥

व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे ॥ ७

त्रिवर्गे चापवर्गे च यशश्श्रीरोगशान्तिषु ।
देवतापितृपूजासु सन्तोष्या एव नो द्विजाः ॥ ८

एते हि सोमराजान ईश्वरास्सुखदुःखयोः ॥ ८॥

अस्मिँल्लोके रौक्मिणेय परे व्युष्टिं च सर्वदा ।
ब्राह्मणप्रभवं सौख्यं न मेऽत्रास्ति विचारणा ॥ ९॥

ब्राह्मणप्रभवं वीर्यम् आयुः कीर्तिर्यशो बलम् ।
दृश्यन्ते लोकपालानां देवब्राह्मणपूजनात् ॥ १०॥

तान् कथं नाद्रियेयं वै ईश्वरोऽस्मीति पुत्रक ।
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान् प्रति ॥ ११॥

ब्राह्मणो हि महद्भूतम् अस्मिँल्लोके परत्र च ।
भस्मीकुर्याज्जगदिदं क्रुद्धः प्रत्यक्षमेव नः ॥ १२॥

हन्युस्तेऽपि सृजेयुश्च लोकान् लोकेश्वरांस्तथा ।
कथं तेषु न वर्तेम वयमुत्सुकचेतसः ॥ १३॥

असकृन्मे गृहे तात ब्राह्मणः परिपिङ्गलः ।

चीरवासा बिल्वदण्डी दीर्घश्मश्रुनखादिमान् ॥ १४॥
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिकं विदुः ॥ १५

सर्वान् सञ्चरते लोकान् ये दिव्या ये च मानवाः ।
इमा गाथा गायमानश् चत्वरेषु सभासु च ॥ १६

दुर्वाससं वासयित्वा ब्राह्मणं स्वेच्छया गृहे ।
परिभाषाश्च मे श्रुत्वा को हि दद्यात् प्रतिश्रयम् ॥ १७

यो मां कश्चिद्वासयीत न च मां कोपयीत ह ।
तं स नाद्रियते कश्चित् तमहं समवासयम् ॥ १८

स तु भुङ्क्ते सहस्राणां बहूनामन्नमेकदा ।
एकदा त्वधिकं भुङ्क्ते नैव चैति पुनर्गृहान् ॥ १९

अकस्माच्च प्रहसति तथाऽकस्मात् स रोदिति ।
न चास्य वयसा तुल्यः पृथिव्यामभवत् तदा ॥ २०

अथ स्वावसथं गत्वा शय्यां चास्तरणानि च ।
अदहत् स महातेजास् ततश्चाभ्यपतत् स्वयम् ॥ २१

अथ मामब्रवीद्भूयस् स मुनिस्संशितव्रतः ।
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ॥ २२

तथैव तु मया तस्य चित्तज्ञेन गृहे जनः ।
सर्वाण्यन्नानि पापानि भक्ष्याश्चोच्चावचास्तथा ॥ २३

भवन्तु संस्कृतानीह पूर्वमेव विचोदितः ॥ २३॥

ततोऽहं ज्वलमानस्य पायसं प्रत्यवेदयम् ॥ २४

स भुक्तवांस्तु मां क्षिप्रं ततो वचनमब्रवीत् ।
क्षिप्रमङ्गानि लिम्पस्व पायसेनैव सोऽप्यहम् ॥ २५

अविमृश्यैव च ततः कृतवानस्मि तत्तथा ।
तेनोच्छिष्टेन गात्राणि शरीरं च समालिपम् ॥ २६

स ददर्श ममाभ्याशे मातरं ते शुभाननाम् ।
तामपि स्मयमानस्स पायसेन प्रलेपयत् ॥ २७

ततः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् ।
तमारुह्य रथं चैव निर्ययौ स गृहान्मम ॥ २८

अग्निवर्णो ज्वलन् धीमान् स द्विजो रथधुर्यवान् ।
प्रतोदेन तुदन् बालां रुक्मिणीमनु पश्यतः ॥ २९

न तु मे स्तोकमप्यासीद् दुःखमीर्ष्याकृतं तमः ।
ततस्स राजमार्गेण महता निर्ययौ बहिः ॥ ३०

तद्दृष्ट्वा महदाश्चर्यं दाशार्हा जातमन्यवः ।
तत्राजल्पन् मिथः केचित् समाभाष्य परस्परम् ॥ ३१

ब्राह्मणा एव जायेरन् नान्यो वर्णः कथञ्चन ।
को ह्येनां रथमास्थाय जीवेदन्यः पुमानिह ॥ ३२

आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरं विषम् ।

ब्रह्मादिविषदिग्धस्य नास्ति कश्चिच् चिकित्सकः ॥ ३३

तस्मिन् व्रजति दुर्धर्षे प्रापतद् रुक्मिणी पथि ।
अमर्षयंस्तथा श्रीमान् स्मितपूर्वमचोदयम् ॥ ३४

ततः परमसङ्क्रुद्धो रथात् प्रस्कन्द्य स द्विजः ।
पदातिरुत्पथेनैव प्राधावद्दक्षिणामुखः ॥ ३५

तमुत्पतन्तं धावन्तम् अन्वधावं द्विजोत्तमम् ।
तथैव पायसादिग्धः प्रसीद भगवन्निति ॥ ३६

ततः प्रतीतस्तेजस्वी दुर्वासा मामुवाच ह ॥ ३६॥

दुर्वासाः—

जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ॥ ३७

न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत ।
प्रीतोऽस्मि तव गोविन्द वद कामान् यथेप्सितान् ॥ ३८

प्रसन्नस्य च मे तात पश्य व्युष्टिं यथाविधाम् ॥ ३८॥

यावदेव मनुष्याणाम् अन्ने भावो भविष्यति ।
यथैवान्ने तथैवैष त्वयि भावो भविष्यति ॥ ३९॥

यावच्च लोके पुण्येषु तावत् कीर्तिर्भविष्यति ।
त्रिषु लोकेषु तावच्च विशिष्टं फलमाप्स्यसि ॥ ४०॥

[1]सुप्रियस्सर्वलोकस्य भविष्यसि जनार्दन ॥ ४१

पायसेन प्रलिप्तेषु गात्रेषु मधुसूदन ।
तव मृत्युभयं नास्ति यावदिच्छसि चाच्युत ॥ ४२

न तु पादतले लिप्तस् तस्मात्ते मृत्युरत्र वै ।
नैतन्मे प्रियमित्येव स मां प्रीतोऽब्रवीत्तदा ॥ ४३

श्रीभगवान्—
इत्युक्तोऽहं शरीरं मे अपश्यं श्रीसमन्वितम् ॥ ४३॥

रुक्मिणीं चाब्रवीत् प्रीतस् सर्वस्त्रीणां सुरूपताम् ।
कीर्तिं चानुत्तमां लोके त्वं समाप्स्यसि शोभने ॥ ४४॥

न त्वां जरा पीडयेद्वै वैवर्ण्यं वाऽपि भामिनि ।
द्रक्ष्यसे पुण्यगन्धांश्च कृष्णमाराधयिष्यसि ॥ ४५॥

षोडशानां सहस्राणां पत्नीनां केशवस्य च ।
वरिष्ठा सर्वलोक्या च केशवस्य भविष्यसि ॥ ४६॥

तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत् ।
प्रस्थितश्च महातेजा दुर्वासाः प्रज्वलन्निव ॥ ४७॥

दुर्वासाः—
एषैव ते बुद्धिरस्तु ब्राह्मणान् प्रति केशव ॥ ४८

श्रीभगवान्—
इत्युक्त्वा स तदा विप्रस् तत्रैवान्तरधीयत ॥ ४८॥

1. ब—श्रीप्रियः

तस्मिन्नन्तर्हिते चैव उपांशु व्रतमादिशम् ।
यत् किञ्चिद्ब्राह्मणो ब्रूयात् सर्वं कुर्यामिति प्रभो ॥ ४९॥

एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक ।
ततः परमहृष्टात्मा प्राविशं गृहमेव च ॥ ५०॥

प्रविष्टश्च गृहे सर्वं अथ पश्यामि तन्नवम् ।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक ॥ ५१॥

ततोऽहं विस्मयं प्राप्तस् सर्वं दृष्ट्वा नवं दृढम् ।
अपूजयं च मनसा रौक्मिणेय द्विजांस्तदा ॥ ५२॥

इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ ।
द्विजमुख्यस्य माहात्म्यं सर्वमाख्यातवांस्तदा ॥ ५३॥

तथा त्वमपि कौन्तेय ब्राह्मणान् सततं प्रभो ।
पूजयस्व महाभाग वाग्भिर्दानैश्च नित्यदा ॥ ५४॥

एवं व्युष्टिमहं प्राप्तो ब्राह्मणानां प्रसादजाम् ।
यच्च मामाह भीष्मस्तु तत् सत्यं भरतर्षभ ॥ ५५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकोनपञ्चाशदधिकशततमोऽध्यायः ॥१४९॥
[अस्मिन्नध्याये ५५॥ श्लोकाः]

## ॥ पञ्चाशदधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति दक्षाध्वरविध्वंसनत्रिपुरदहनादिरूपरुद्रचरित्रपरिकीर्तनम् ॥

युधिष्ठिरः—

दुर्वाससः प्रसादात्ते शङ्करांशस्य माधव ।
अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि ॥ १

महाभाग्यं यच्च तस्य नामानि च महात्मनः ।
सर्वतो ज्ञातुमिच्छामि शर्वस्य वदतां वर ॥ २

श्रीभगवान्—

हन्त ते कथयिष्यामि नमस्कृत्वा कपर्दिने ।
यदवाप्तं महाराज श्रेयो लोके बलं यशः ॥ ३

प्रयतः प्रातरुत्थाय यस्त्वधीयेद्विशां पते ।
प्राञ्जलिश्शतरुद्रीयं नास्य किञ्चन दुर्लभम् ॥ ४

शिवस्सर्वगतो रुद्रस् स्रष्टा यस्तं शृणुष्व मे ।
प्रजापतिस्तमसृजत् तपसोऽन्ते महातपाः ॥ ५

शङ्करस्त्वसृजत्तात प्रजास्स्थावरजङ्गमाः ॥ ५॥

नास्ति किञ्चित् परं भूतं महादेवाद्विशां पते ।
इह त्रिष्वपि लोकेषु भूतानां प्रभवो हि सः ॥ ६॥

न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः ।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥ ७॥
गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसंज्ञा हतभूयिष्ठा वेपयन्ति पतन्ति च ॥ ८॥
घोरं हि निनदं तस्य पर्जन्यनिनदोपमम् ।
श्रुत्वा विदीर्येद्धृदयं देवानामपि संयुगे ॥ ९॥
यं चाक्ष्णा घोररूपेण पश्येद्दग्धः पतेदधः ॥ १०
न सुरा नासुरा लोके गन्धर्वा न च पन्नगाः ।
कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः ॥ ११
प्रजापतेस्तु दक्षस्य यजतो वितते क्रतौ ।
विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा ॥ १२
धनुषा बाणमुत्सृज्य सुघोरं विननाद च ॥ १२॥
न ते शर्म कुतश्शान्तिं विषादं लेभिरे सुराः ।
[1]विद्रुतास्सह यज्ञेन कुपिते च महेश्वरे ॥ १३॥
तेन ज्यातलघोषेण सर्वे लोकास्समाकुलाः ।
बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः ॥ १४॥
भूयश्चुक्षुभिरे चापश्चकम्पे च वसुन्धरा ।
विदीर्णा गिरयश्चापि द्यौः पफालेव सर्वशः ॥ १५॥

1. ख—अर्धत्रयं नास्ति

अन्धेन तमसा लोकाः प्रावृता न चकाशिरे ।
प्रनष्टा ज्योतिषां भाश्च सह सूर्येण भारत ॥ १६॥

भृशं भीतास्ततश्शान्तिं चक्रुस्स्वस्त्ययनानि च ।
ऋषयस्सर्वभूतानाम् आत्मनां च हितैषिणः ॥ १७॥

ततस्सोऽभ्यद्रवद्देवान् क्रुद्धो भीमपराक्रमः ।
भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् ॥ १८॥

पूषणं चाभिदुद्राव [1]परेण वपुषाऽन्वितः ।
पुरोडाशं भक्षयतो दशनांस्तु व्यशातयत् ॥ १९॥

ततः प्रणेदुर्देवास्ते वेपमानाश्च शङ्करम् ।
पुनश्च सन्दधे रुद्रो दीप्तं सुनिशितं शरम् ॥ २०॥

रुद्रस्य विक्रमं दृष्ट्वा भीता देवास्सहर्षिभिः ।
ततः प्रसादयामासुश् शर्वं ते विबुधोत्तमम् ॥ २१॥

जेपुश्च शतरुद्रीयं देवाः कृत्वाऽञ्जलिं ततः ।
संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः ॥ २२॥

रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन् ।
भयेन त्रिदशा राजन् शरणं प्रतिपेदिरे ॥ २३॥

तेन चैव हि कोपेन स यज्ञः सादितोऽभवत् ।
यद्यच्चोपहृतं तत्र तत्ते च प्रतिपेदिरे ॥ २४॥

1. ख—वरेण

असुराणां पुराण्यासंस् त्रीणि वीर्यवतां दिवि ।
आयसं राजतं चैव सौवर्णमपरं तथा ॥ २५॥

नाशकत्तानि भगवान् भेत्तुं सर्वायुधैरपि ।
अथ सर्वेऽमरा रुद्रं जग्मुश्शरणमर्दिताः ॥ २६॥

तत ऊचुर्महात्मानो देवास्सर्वे समागताः ॥ २७

देवाः—

रुद्र रौद्राः करिष्यन्ति पशवः कर्म ते प्रजाः ।
जहि दैत्यान् सह पुरैर् लोकांस्त्रायस्व मानद ॥ २८

श्रीभगवान्—

स तथोक्तस्तथेत्युक्त्वा विष्णुं कृत्वा शरोत्तमम् ।
शल्यमग्निं तथा कृत्वा पुङ्खं सोममपांपतिम् ॥ २९.

ओङ्कारं च धनुः कृत्वा ज्यां च सावित्रिमुत्तमाम् ।
वेदान् रथवरं कृत्वा विनियुज्य च सर्वशः ॥ ३०
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः ॥ ३०॥

शरेणादित्यवर्णेन कालाग्निसमतेजसा ॥ ३१
तेऽसुरास्सपुरास्तत्र दग्धा रौद्रेण तेजसा ॥ ३१॥

देव्याश्चाङ्कगतं दृष्ट्वा बालं पञ्चशिखं पुनः ।
उमां जिज्ञासमानस्स कोऽयमित्यब्रवीद्धरः ॥ ३२॥

असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः ।
सवज्रं स्तम्भयामास तं बाहुं परिघोपमम् ॥ ३३॥

न सम्बुबुधिरे चैव देवास्तं भुवनेश्वरम् ।
सप्रजापतयस्सर्वे तस्मिन् मुमुहुरीश्वरे ॥ ३४॥

ततो ध्यात्वा तु भगवान् ब्रह्मा तममितौजसम् ।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम् ॥ ३५॥

ततः प्रसादयामासुर् उमां रुद्रं च ते सुराः ।
बभूव स महाबाहुस् सहसा तु यथापुरम् ॥ ३६॥

स चापि ब्राह्मणो भूत्वा दुर्वासा नाम वीर्यवान् ।
द्वारवत्यां मम गृहे चिरं कालमुवास ह ॥ ३७॥

विप्रकारान् प्रयुङ्क्ते स सुबली मम वेश्मनि ।
तांस्तथा मर्षयित्वाऽहं अक्षमस्तस्य दुस्सहान् ॥ ३८॥

स वै भूमिश्च वायुश्च सोऽश्विनौ स मरुत्पतिः ।
[1]स चन्द्रमास्स चेशानस् स सूर्यो वरुणश्च सः ॥ ३९॥

स कालस्सोऽन्तको मृत्युस् स तमो रात्र्यहानि च ।
मासार्धमासा ऋतवस् सत्यं संवत्सरश्च सः ॥ ४०॥

स च धाता विधाता च विश्वकर्मा स सर्ववित् ।
नक्षत्राणि दिशश्चैव प्रदिशोऽथ ग्रहास्तथा ॥ ४१॥

विश्वमूर्तिरमेयात्मा भगवानमितद्युतिः ।
एकधा च द्विधा चैव [2]बहुधा च स एव सः ॥ ४२॥

1. क-ख-घ—स च ब्रह्मा  2. अ-क-घ—अयं पादोऽनन्तरश्च न स्तः

शतधा सहस्रधा चैव तथा शतसहस्रशः ।
ईदृशस्स महादेवो भूयश्च भगवानजः ॥ ४३॥

न हि शक्या गुणा वक्तुम् अपि वर्षशतैरपि ॥ ४४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
॥ ८९ ॥ आनुशासनिकपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
[ अस्मिन्नध्याये ४४ श्लोकाः ]

---

## ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति महेश्वरादिनामनिर्वचनपूर्वकं शिवमहिमोक्तिः ॥

---

श्रीभगवान्—

युधिष्ठिर महाबाहो महाभाग महामते ।
[1]रुद्राय [2]बहुरूपाय बहुनाम्ने निबोध मे ॥ १

वदन्त्युग्रं महादेवं तथा देवं महेश्वरम् ।
एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा ॥ २

द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः ।

---

1. ख—भद्राय
2. ख—बहुरुद्राय

घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥ ३

परा घोरा तनुर्या सा अग्निविद्युत्समप्रभा ।
शिवा सौम्याऽथ ह्यद्याऽस्य धर्मास्त्वापोऽथ चन्द्रमाः ॥ ४

आत्मनोऽर्धं तु तस्याग्निर् उच्यते भरतर्षभ ।
ब्रह्मचर्यं चरत्येषा शिवा याऽस्य तनुस्तथा ॥ ५

याऽस्य घोरतरा मूर्तिर् जगत् संहरते तथा ।
ईश्वरत्वान्महत्त्वाच्च [1]महेश्वर इति स्मृतः ॥ ६

यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत् प्रतापवान् ।
मांसशोणितमज्जादो यत् ततो रुद्र उच्यते ॥ ७

देवानां सुमहान् यच्च यच्चास्य विषयो महान् ।
यच्च विश्वं जगत् पाति महादेवस्ततस्स्मृतः ॥ ८

स मेधयति यन्नित्यं स सर्वान् सर्वकर्मभिः ।
शिवमिच्छन् मनुष्याणां तस्मादेव शिवस्स्मृतः ॥ ९

दहत्यूर्ध्वं स्थितो यच्च प्राणान् प्रेरयते च यत् ।
स्थिरलिङ्गं च यन्नित्यं तस्मात् स्थाणुरिति स्मृतः ॥ १०

यदस्य बहुधा रूपं भूतभव्यभवत्करम् ।
स्थावरं जङ्गमं चैव बहुरूपस्ततस्स्मृतः ॥ ११

धूम्ररूपा जटा यस्माद् धूर्जटिः पुनरुच्यते ।

---

1. अ-क—इतः षट् पादा न सन्ति

विश्वे देवाश्च यद्रूपं विश्वरूपस्ततस्स्मृतः ॥ १२

सहस्राक्षोऽयुताक्षश्च सर्वतोक्षिमयोऽपि च ।
चक्षुषः प्रभवं तेजस् सर्वतश्चक्षुरेव तत् ॥ १३

सर्वथा यत् पशून् पाति तैश्च यद्रमते पुनः ।
तेषामधिपतिर्यच्च तस्मात् पशुपतिस्स्मृतः ॥ १४

नित्येन ब्रह्मचर्येण लिङ्गमस्य सदा स्थितम् ।
भक्तानुग्रहणार्थाय गूढलिङ्गस्ततस्स्मृतः ॥ १५

विग्रहं पूजयेद्यो वै लिङ्गं वाऽपि महात्मनः ।
पूज्यमाने सदा तस्मिन् मोदते स महेश्वरः ॥ १६
सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः ॥ १६॥

एष एव श्मशानेषु देवो वसति निर्दहन् ।
रमन्ते तं जनास्तस्मिन् वीरस्थाननिषेविणम् ॥ १७॥

विषमस्थश्शरीरेषु स मृत्युः प्राणिनामिह ।
स च वायुश्शरीरेषु प्राणपालश्शरीरिणाम् ॥ १८॥

तस्य घोराणि रूपाणि दीप्तानि च शुभानि च ।
लोके यानि स्म पूज्यन्ते विप्रास्तानि विदुर्बुधाः ॥ १९॥

नामधेयानि [1]वेदेषु बहून्यस्य यथार्थतः ।
निरुच्यन्ते बहुत्वाच्च विभुत्वात् कर्मभिस्तथा ॥ २०॥

---

1. अ-क—देवेषु

वेदे चास्य विदुर्विप्राश् शतरुद्रीयमुत्तमम् ।
व्यासेनोक्तं च यच्चास्य उपस्थानं महात्मनः ॥ २१॥

प्रदाता सर्वलोकानां विश्वसाक्षी निरामयः ।
ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा ऋषयोऽपरे ॥ २२॥

प्रथमो ह्येष भूतानां मुखादग्निरजायत ॥ २३

उग्रैर्बहुविधैः प्राणीन् सङ्क्रुद्धस्तर्पणैरपि ।
विमोक्षयति तुष्टात्मा शरण्यश्शरणागतान् ॥ २४

आयुरारोग्यमैश्वर्यं हितं कामांश्च पुष्कलान् ।
स ददाति मनुष्येभ्यस् सदा चाक्षिपते पुनः ॥ २५

शक्रादिषु हि देवेषु तस्य चैश्वर्यमुच्यते ॥ २५॥

स एव स्थापको नित्यं त्रैलोक्यस्य शुभाशुभम् ।
ऐश्वर्याच्चैव कामानाम् ईश्वरः पुनरुच्यते ॥ २६॥

महेश्वरश्च लोकानां महतामीश्वरश्च सः ।
बहुभिर्विविधै रूपैर् विश्वं व्याप्तमिदं जगत् ॥ २७॥

यस्य देवस्य यद्वक्त्रं समुद्रे बडबामुखम् ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥
[ अस्मिन्नध्याये २८ श्लोकाः ]

## ॥ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति धर्मप्रमाणनिरूपणम् ॥ १ ॥ धार्मिकाधार्मिकाणां स्वर्गनरकप्राप्तिप्रतिपादनम् ॥ २ ॥ तथा साध्वसाधुलक्षणाभिधानपूर्वकं सामान्यतो नानाधर्मप्रतिपादनम् ॥ ३ ॥

वैशम्पायनः—

इत्युक्तवति तद्वाक्यं कृष्णे देवकिनन्दने ।
भीष्मं शान्तनवं भूयः पर्यपृच्छद्युधिष्ठिरः ॥ १

युधिष्ठिरः—

निर्णये तु महाबुद्धे सर्वधर्म[1]भृतां वर ।
प्रत्यक्षमागमो वेति किं तयोः कारणं भवेत् ॥ २

भीष्मः—

नास्त्यत्र संशयः कश्चिद् इति मे वर्तते मतिः ।
शृणु वक्ष्यामि ते प्राज्ञ सम्यक्त्वमनुगच्छति ॥ ३

संशयस्सुमहान् राजन् निर्णयस्तत्र दुर्गमः ।
दृष्टं श्रुतमचिन्त्यं हि यत्र संशयदर्शनम् ॥ ४

प्रत्यक्षं कारणं दृष्टं हैतुकं प्राज्ञमानिनः ।
नास्तीत्येवं व्यवस्यन्ति सत्यमागममेव वा ॥ ५

1. अ—विदां

तद्युक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ॥ ५॥

अथ सञ्चिन्त्यमेवैकं कारणं किं भवेदिति ।
शक्यं दीर्घेण कालेन युक्तेनामन्त्रितेन च ॥ ६॥

प्राणयात्रामनेकां च कल्पयानेन भारत ।
तत्परेणैव नान्येन शक्यते तत्तु कारणम् ॥ ७॥

हेतुनाऽऽमन्त्रितेनापि धर्मशास्त्रेण चोत्तमम् ।
ज्योतिस्सर्वस्य लोकस्य प्रकाशं प्रतिपद्यते ॥ ८॥

तत्पारगमने राजन् हेत्वन्तगमने तथा ।
अग्राह्यमनुबन्धं च वचस्सम्परिवर्जयेत् ॥ ९॥

युधिष्ठिरः—

प्रत्यक्षमथ धर्माश्च लोकाश्चागमपूर्वकाः ।
शिष्टाचाराश्च विविधा ब्रूहि तन्मे पितामह ॥ १०॥

भीष्मः—

धर्मस्य ध्रियमाणस्य बलवद्भिर्महात्मभिः ।
संस्था यत्नैरपि कृता काले विपरिभिद्यते ॥ ११॥

अधर्मा धर्मरूपेण तृणैः कूपा इवावृताः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥ १२॥

[1]अवृत्त्या ये च निन्दन्ति श्रुतत्यागपरायणाः ।

---

1. अ—अवृत्या

धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः ॥ १३॥
अतृप्यन्तस्तु साधूनां यावदागमबुद्धयः ।
परमित्येव सन्तुष्टास् तानुपास्स्व च पृच्छ च ॥ १४॥
कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ ।
धर्म इत्येव सम्बुध्वा तानुपास्स्व च पृच्छ च ॥ १५॥
येनैषां भिद्यते वृत्तं यज्ञस्वाध्यायकर्मभिः ।
मूलाचारस्तु साधूनां यज्ञस्वाध्यायवृत्ततः ॥ १६॥
आचारः कारणं चैव धर्मस्यैतत्त्रयं विदुः ॥ १७

युधिष्ठिरः—

पुनरेव हि मे बुद्धिस् संशये परिमुह्यते ।
अपारे मज्जमानस्य परं तीरमपश्यतः ॥ १८
वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते तेषां धर्मश्चैतत्त्रयं कथम् ॥ १९

भीष्मः—

धर्मस्य [1]ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यद्येवं मन्यसे राजंस् त्रिधा धर्मविचारणा ॥ २०
एवमेव विजानीहि त्रिधा त्वस्य प्रदर्शनम् ।
पृथक्त्वे चैव मे बुद्धिस् त्रयाणामपि वै तथा ॥ २१

1. ब—ध्रिय

ब्राह्मणेषु तु वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो [1]धर्मस्यैते हि देशिकाः ॥ २२

प्रमाणमप्रमाणं तु यः कुर्यादबुधो नरः ।
न स प्रमाणतामर्हो विषादजननो हि सः ॥ २३

ब्राह्मणानेव सेवस्व सत्कृत्य बहुमान्य च ।
[2]एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तत्* ॥ २४

युधिष्ठिरः—

ये धर्ममभ्यसूयन्ते ये धर्मं पर्युपासते ।
प्रब्रवीतु भवानेतत् क ते गच्छन्ति तादृशाः ॥ २५

भीष्मः—

राजसास्तामसाश्चैव समवस्थितचेतसः ।
नरकं प्रतिपद्यन्ते धर्मविद्वेषिणो नराः ॥ २६

[3]ये तु धर्मं महाराज सततं पर्युपासते ।
[4]धर्म एव रतिस्तेषाम् आचार्योपासनाद्भवेत् ॥ २७

देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते ॥ २७॥

---

1. क—स्वर्गस्यैते हि दर्शकाः; ख—देशि
घ—दर्शिकाः

2. ख—ये धर्ममभ्यसूयन्ते ये धर्मं पर्युपासते । [ अधिकः पाठः ]

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

3. क-ख-घ—इदमर्धं नास्ति

4. अ—अर्धद्वयं नास्ति

मनुष्या यदि वा देवाश् शरीरमुपताप्य वै ।
धर्मिणस्सुखमेधन्ते लोभद्वेषविवर्जिताः ॥ २८॥

प्रथमं ब्रह्मणः पुत्रं धर्ममाहुर्मनीषिणः ।
धर्मिणः पर्युपासन्ते फलं पक्वमिवाशनम् ॥ २९॥

युधिष्ठिरः—

असाधोः कीदृशं शीलं साधोश्चैव तु कीदृशम् ।
ब्रवीतु मे भवानेतत् सन्तोऽसन्तश्च कीदृशाः ॥ ३०॥

भीष्मः—

[1]दुराराधाश्च दुर्धर्षा दुर्मुखाश्चाप्यसाधवः ।
साधवश्शीलसम्पन्नाश् शिष्टाचारस्य लक्षणम् ॥ ३१॥

राजमार्गे गवां मध्ये वनमध्ये च धार्मिकाः ।
नोपसेचन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ॥ ३२॥

पञ्चानां यजनं कृत्वा शेषमश्नन्ति साधवः ।
न जल्पन्ति च भुञ्जाना न निन्दन्त्यार्द्रपाणयः ॥ ३३॥

चित्रभानुमपां देवं गोष्ठं चैव चतुष्पथम् ।
ब्राह्मणं धार्मिकं वृद्धं ते कुर्वन्ति प्रदक्षिणम् ॥ ३४॥

वृद्धानां भारतप्तानां स्त्रीणां बालातुरस्य च ।
ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ते ॥ ३५॥

---

1. क-ख—अनाराधाश्च

अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
सामान्यं भोजनं कुर्यात् स्वयं नाप्राशनं व्रजेत् ॥ ३६॥

न सत्यार्जवधर्मस्य तुल्यमन्यच्च विद्यते ।
बहुला नाम गौस्तेन गतिमग्र्यां गता किल ॥ ३७॥

मुनिशापाद्द्विजः कश्चिद् व्याघ्रतां समुपागतः ।
बहुलाभक्षणरुचिर् आस्वाद्य शपथेन तु ॥ ३८॥

विमुच्य पीतवत्सां तां दृष्ट्वा स्मृत्वा पुरातनम् ।
जगाम लोकानमलान् सा स्वराष्ट्रं तथा पुनः ॥ ३९॥

तस्मात् सत्यार्जवरतो राजन् राष्ट्रं समानवम् ।
तारयित्वा सुखं स्वर्गं गन्तासि भरतर्षभ ॥ ४०॥

तथा शरणकामानां गोप्ता स्यात् स्वगतिप्रदः ॥ ४१

सायं प्रातर्मनुष्याणाम् अशनं देवनिर्मितम् ।
नान्तरा भोजनं दृष्टम् उपवासविधिर्हि सः ॥ ४२

होमकाले यथा वह्निः काले होमं प्रतीक्षते ।
ऋतुकाले यथाऽऽधानं पितरश्च प्रतीक्षते ॥ ४३

न चान्यां गच्छते यस्तु ब्रह्मचर्यं तु तस्य तत् ॥ ४३॥

अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः ।
तस्माद्गोब्राह्मणान् नित्यम् अर्चयेत यथाविधि ॥ ४४॥

यजुषा संस्कृतं मांसम् उपभुञ्जन् न दुष्यति ।
पृष्ठमांसं वृथामांसं पुत्रमांसं च तत्समम् ॥ ४५॥

स्वदेशे परदेशे वाऽप्यतिथिं नोपवासयेत् ।
कर्म वै सफलं लब्ध्वा गुरूणां प्रतिवेदयेत् ॥ ४६॥

गुरूणामासनं देयम् अभिवाद्याभिपूज्य च ।
गुरूमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥ ४७॥

वृद्धान् नातिवदेज्जातु न च सम्प्रेषयेदपि ।
नासीनस्स्यात् स्थितेष्वेवम् आयुरस्य न रिष्यते ॥ ४८॥

न नग्नामीक्षयेन्नारीं न नग्नान् पुरुषानपि ।
मैथुनं सततं गुप्तं तपश्चैव समाचरेत् ॥ ४९॥

तीर्थानां गुरवस्तीर्थं शुचीनां हृदयं शुचि ।
दर्शनानां परं ज्ञानं सन्तोषः परमं सुखम् ॥ ५०॥

सायं प्रातश्च वृद्धानां शृणुयात् पुष्कला गिरः ।
श्रुतमाप्नोति हि नरस् सततं वृद्धसेवया ॥ ५१॥

स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
इच्छेच्चैव तपो नित्यम् इन्द्रियाणामविभ्रमम् ॥ ५२॥

संस्कृतं पायसं नित्यं यावसं कृसरं हविः ।
अष्टका पितृदैवत्यं ग्रहाणामभिपूजनम् ॥ ५३॥

श्मश्रुकर्मणि मङ्गल्यं क्षुते चाप्यभिनन्दनम् ।
न जातु त्वमिति ब्रूयाद् अपरोक्षेऽपि मातरम् ॥ ५४॥

त्वङ्कारो वा वधश्चेति विद्वत्सु न विशिष्यते ।
अवराणां समानानां शिष्याणां च समाचरेत् ॥ ५५॥

पापमाचक्षते नित्यं हृदयं पापकर्मणाम् ।
ज्ञानपूर्वं कृतं कर्म गूहयन्ते ह्यसाधवः ॥ ५६॥

न मां मनुष्याः पश्यन्ति न पश्यन्तीह देवताः ।
पापेनाभिगतं पापं पापमेवाभिपूरयेत् ॥ ५७॥

यथा वार्धुषिको वृद्धिं प्रतिमासं प्रतीक्षते ।
धर्मेण विहितं धर्मं धर्ममेवाभिवर्धयेत् ॥ ५८॥

यथा लवणमम्भोभिर् आप्लुतं प्रविलीयते ।
प्रायश्चित्तं कृतं पापं तथा सद्यः प्रणश्यति ॥ ५९॥

तस्मात् पापं न गूहेत गूहमानं विवर्धते ।
कृत्वा तु साधुष्वाख्याय धर्मैः प्रशमयन्त्युत ॥ ६०॥

आशया सञ्चितं द्रव्यं स्वकाले नोपभुज्यते ।
अन्ये चैतत् प्रपद्यन्ते वियोगे तस्य देहिनः ॥ ६१॥

तद्धर्मसाधनं नित्यं सङ्कल्पाद्धनमार्जयेत् ।
मननं सर्वभूतानां धर्ममाहुर्मनीषिणः ॥ ६२॥

तस्मात् सर्वाणि कार्याणि धर्मस्यैव समासतः ॥ ६३

एक एव चरेद्धर्मं न धर्मध्वजिको भवेत् ।
धर्मस्य वणिजो ह्येते ये धर्ममुपभुञ्जते ॥ ६४

सर्वथैव न दम्भेन सेवेतामायया गुरून् ।
धनं निदध्यात् पात्रेषु परत्रार्थं समावृतम् ॥ ६५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
[ अस्मिन्नध्याये ६५ श्लोकाः ]

## ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यन्वयव्यतिरेकाभ्यां सुकृतदुष्कृतयोः सदृष्टान्तप्रदर्शनं सुखदुःखकारणत्वोपपादनम् ॥

युधिष्ठिरः—

नाभागधेयः प्राप्नोति धनं सुबलवानपि ।
भागधेयान्वितस्त्वर्थान् कृशो बालोऽपि विन्दति ॥ १

नालाभकाले लभते प्रयत्नेऽपि कृते सति ।
लाभकालेऽप्रयत्नेन लभते विपुलं धनम् ॥ २

कृतयत्ना नराश्चैव दृश्यन्ते शतशोऽधनाः ।
यद्यत्नो भवेन्नित्यं सर्वं फलमवाप्नुयात् ॥ ३

नावाप्यं नोपलभ्येत नृणां भरतसत्तम ॥ ३॥

सदा प्रयत्नं कृतवान् दृश्यते ह्यफलो नरः ।
मार्गन् नयशतैरर्थान् अमार्गश्चापरस्सुखी ॥ ४॥

अकार्यमसकृत् कृत्वा दृश्यन्ते ह्यधना नराः ।
धनहीनास्तु धर्मस्था दृश्यन्ते चापरे जनाः ॥ ५॥

अधीत्य नीतिं कस्मात्तु नीतियुक्तो न दृश्यते ।
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना ॥ ६॥

विद्यायुक्तो ह्यविद्यश्च धनवान् दुर्मतिस्तथा ॥ ७

यदि विद्यामुपाश्रित्य नरस्सुखमवाप्नुयात् ।
न विद्वान् विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ॥ ८

यथा पिपासां जयति पुरुषः प्राप्य वै जलम् ।
दृष्टोऽर्थो विद्ययाऽप्येवम् अविद्यां प्रजहेन्नरः ॥ ९

नाप्राप्तकालो म्रियते विद्धश्शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ १०

भीष्मः—

ईहमानस्समारम्भान् यदि नासादयेद्धनम् ।
उग्रं तपस्समारोहेन्न ह्यनुप्तं प्ररोहति ॥ ११

तपसा भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुर् एवमाहुर्मनीषिणः ॥ १२

तस्माद् दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
सजपः प्रियकृच्छुद्धस् सर्वसत्त्वाविहिंसकः ॥ १३

यदा प्रमाणप्रभवस् स्वभावश्च सुखासुखे ।
मशकक्रिमिकीटानां स्थिरो भव युधिष्ठिर ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
[अस्मिन्नध्याये १४ श्लोकाः]

## ॥ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति धर्मप्रशंसनम् ॥ १ ॥ युधिष्ठिराय निखिलधर्मोपदेशानन्तरं स्वावसानकालासत्त्यवगमेन भगवद्ध्यानाय वाक्प्रसारणादुपरते भीष्मे तं प्रति व्यासेन युधिष्ठिरस्य नगरगमनाभ्यनुज्ञानचोदना ॥ २ ॥ युधिष्ठिरेण भीष्माभ्यनुज्ञया सह कृष्णादिभिर्हास्तिनपुरप्रवेशनम् ॥ ३ ॥

भीष्मः—

कार्यन्ते सर्वथा न्यायात् सच्चासच्च कृतं तथा ।
तत्राश्वसेच्च सत् कृत्वा ह्यसत् कृत्वा न विश्वसेत् ॥ १

काल एवान्तरा शक्तिर् निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्मार्थेषु प्रवर्तते ॥ २

यदा त्वस्य भवेद्बुद्धिर् धर्म्या चार्थप्रदर्शनी ।
तदाश्वसीत धर्मात्मा दृढबुद्धिर्न विश्वसेत् ॥ ३

एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम् ।
कालयुक्तो ह्युभयविच् छेषमर्थं समाचरेत् ॥ ४

यथा ह्युपस्थितैश्वर्यात् प्रजायन्ते नरा जनात् ।
एवमेवात्मनाऽऽत्मानं पूजयन्तीह धार्मिकाः ॥ ५

भावशुद्धिस्तु तपसा देवतानां च पूजया ।
सनातनेन शुद्ध्या च श्रुतदानजपैरपि ॥ ६

न ह्यशुद्धस्तु तां दद्याद् धर्मकाले कथञ्चन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ ७

स्प्रष्टुमप्यसमर्थोऽपि ज्वलन्तमिव पावकम् ।
अधर्मसन्ततौ धर्मे [1]कुरुते परकारणात् ॥ ८

कुर्युस्त्रियोऽपि धर्मेण [2]धर्मो हि विजयावहः ।
त्रयाणामपि लोकानां त्रिलोककरणाद् भवेत् ॥ ९

तत्र कश्चिन्नयेत् प्राज्ञं गृहीत्वैव करे नरम् ।
ऊह्यमानस्तु धर्मेण प्राप्नुयात् परमच्युतम् ॥ १०
विश्वास एव कर्तव्यो धर्मे बहुफलेऽच्छले ॥ १०॥

पालय त्वं प्रजास्सर्वाश् शान्तात्मा त्वनुशासितः ।
द्वैपायनस्स्वयं चक्षुः कृष्णस्ते तु परायणम् ॥ ११॥

वैशम्पायनः—

इत्युक्त्वोपासनार्थाय विरराम महामतिः ॥ १२

तूष्णीम्भूते ततो भीष्मे पटे चित्र इवार्पिते ।
मुहूर्तमिव तं ध्यात्वा व्यासस्सत्यवतीसुतः ॥ १३
नृपं शयानं गाङ्गेयम् इदमाह वचस्त्वरन् ॥ १३॥

व्यासः—

राजन् प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।

1 क—दश पादा न सन्ति 2. घ—इतः षट् पादा न सन्ति

सहितो भ्रातृभिस्सर्वैः पार्थिवैश्चानुयायिभिः ॥ १४॥

उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता ॥ १५

तमिमं पुनरागन्तुम् अनुज्ञातुं त्वमर्हसि ॥ १५॥

वैशम्पायनः—

एवमुक्तो भगवता व्यासेन पृथिवीपतिः ।
युधिष्ठिरं सहामात्यम् अनुजज्ञे नदीसुतः ॥ १६॥

उवाच चैनं मधुरं ततश्शान्तनवो नृपः ॥ १७

भीष्मः—

प्रविशस्व पुरं राजन् धर्मे ते ध्रियतां मनः १७॥

यजस्व विविधैर्यज्ञैः पावनैराप्तदक्षिणैः ।
ययातिरिव राजेन्द्र श्रद्धादमपुरस्सरः ॥ १८॥

क्षत्रधर्मरतः पार्थ पितॄन् देवांश्च तर्पयन् ।
श्रेयसा योक्ष्यसे राजन् व्येतु ते मानसो ज्वरः ॥ १९॥

रञ्जयस्व प्रजास्सर्वाः प्रकृतीः परिसान्त्वय ।
सुहृदः फलसत्कारैर् अभ्यर्चय यथार्हतः ॥ २०॥

अनु त्वामुपजीवन्तु मित्राणि सुहृदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥ २१॥

आगन्तव्यं च भवता साधयस्वेह पार्थिव ।

विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥ २२॥

वैशम्पायनः—

तथेत्युक्त्वा च कौन्तेयस् सोऽभिवाद्य पितामहम् ।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥ २३॥

धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम् ।
सह तैर्ऋषिभिश्चैव भ्रातृभिश्च समन्वितः ॥ २४॥

पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिवः ।
प्रविवेश पुरश्रेष्ठं तदा वारणसाह्वयम् ॥ २५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
॥ ८९ ॥ आनुशासनिकपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
[ अस्मिन्नध्याये २५॥ श्लोकाः ]
[ आनुशासनिकपर्व समाप्तम् ]

---

## ॥ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

### ॥ भीष्मस्वर्गारोहणपर्व ॥

युधिष्ठिरेण भीष्मसंस्कारोपयोगिसम्भारप्रस्थापनपूर्वकं कृष्णधृतराष्ट्रादिभिः सह भीष्मसमीपं प्रत्यागमनम् ॥ १ ॥ युधिष्ठिरेणाभिवादनपूर्वकं कृष्णाद्यागमनं निवेदितेन भीष्मेण स्वस्य कृष्णयाथात्म्यज्ञानप्रकाशनेन तत्प्रणामस्तुतिपूर्वकं व्यासकृष्णधृतराष्ट्रादिभ्यः स्वस्य प्राणोत्सर्गाभ्यनुज्ञानप्रार्थना ॥ २ ॥

वैशम्पायनः—

ततः कुन्तीसुतो राजा पौरजानपदाञ् जनान् ।
पूजयित्वा यथान्यायम् अनुजज्ञे गृहान् प्रति ॥ १

सान्त्वयामास नारीश्च हतपुत्रा हतेश्वराः ।
विपुलैरर्थदानैश्च ततः पाण्डुसुतो नृपः ॥ २

सोऽभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः ।
उपस्थाप्य नरश्रेष्ठस् सर्वाश्च प्रकृतीस्तथा ॥ ३

द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च नित्यशः ।
प्रतिगृह्याशिषो मुख्यास् ततो धर्मभृतां वरः ॥ ४

उषित्वा शर्वरीः श्रीमान् [1]पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ ५

1. क-ख-ब—पञ्चाहं नगरो

स निर्ययौ गजपुराद् याजकैः परिवारितः ॥ ५॥

दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ।
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः ॥ ६॥

चन्दनागरुमुख्यानि तथा कालागरूणि च ।
तथा प्रस्थाप्य कौन्तेयो भीष्मसंसाधनाय वै ॥ ७॥

माल्यानि च महार्हाणि रत्नानि विविधानि च ।
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च यशस्विनीम् ॥ ८॥

मातरं च पृथां धीमान् भ्रातॄंश्च भरतर्षभः ।
जनार्दनेनानुगतो विदुरेण च धीमता ॥ ९॥

युयुत्सुना च कौरव्यो युयुधानेन चाभि भो ।
महता राजभोग्येन पारिबर्हेण संवृतः ॥ १०॥

स्तूयमानो महाराजो भीष्मस्यान्तिकमाव्रजत् ॥ ११

निश्चक्राम पुरात्तस्माद् यथा देवपतिस्तथा ।
आससाद कुरुक्षेत्रे ततश्शान्तनवं नृपः ॥ १२

उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च ॥ १३

हतशिष्टैर्नृपैश्चान्यैर् नानादेशसमागतैः ।
रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः ॥ १४

शयानं वीरशयने ददर्श नृपतिस्ततः ।
ततो रथादवारोहद् भ्रातृभिस्सह धर्मराट् ॥ १५

अभिवाद्याथ कौन्तेयः पितामहमरिन्दमम् ।
द्वैपायनप्रभृतिभिर् मुनिभिः प्रतिनन्दितः ॥ १६

ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिश्च सहाच्युतः ।
आसाद्य शरतल्पस्थम् ऋषिभिः परिवारितम् ॥ १७

अब्रवीद्भरतश्रेष्ठो धर्मराजो युधिष्ठिरः ।
भ्रातृभिस्सह कौरव्यं शयानं निम्नगासुतम् ॥ १८

युधिष्ठिरः—

युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते ॥ १९

प्राप्तोऽस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्या ब्राह्मणाश्चेमे ऋत्विजो नागरा इमे ॥ २०

पुत्रश्च ते महाराज धृतराष्ट्रो जनेश्वरः ।
उपस्थितस्सहामात्यो वासुदेवश्च वीर्यवान् ॥ २१

हतशिष्टाश्च राजानस् सर्वे च कुरुजाङ्गलाः ।
तान् पश्य कुरुशार्दूल समुन्मीलय लोचने ॥ २२

यच्चेह किञ्चित् कर्तव्यं तत् सर्वं प्रापितं मया ।
यथोक्तं भवता काले सर्वमेव च तत् कृतम् ॥ २३

वैशम्पायनः—

एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।
ददर्श भारतान् सर्वान् संस्थितान् परिवार्य तान् ॥ २४

ततश्च बलवद् भीष्मः प्रगृह्य विपुलं भुजम् ।
ओघमेघस्वनो वाग्मी काले वचनमब्रवीत् ॥ २५

भीष्मः—

दिष्ट्या प्राप्तोऽसि कौन्तेय सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान् सहस्रांशुर्दिवाकरः ॥ २६

अष्टपञ्चाशतं रात्र्यश् शयानस्याद्य मे गताः ।
शरेषु निशिताग्रेषु यथा वर्षशतं तथा ॥ २७

[1]माघोऽयं समनुप्राप्तो मासः पुण्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥ २८

वैशम्पायनः—

एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रं तथाऽऽमन्त्र्य काले वचनमब्रवीत् ॥ २९

भीष्मः—

राजन् विदितधर्मोऽसि बुद्ध्या वीतार्थसंशयः ।
बहुश्रुतास्त्वया वृद्धा बहवः पर्युपासिताः ॥ ३०

वेत्थ शास्त्राणि सूक्ष्माणि धर्मांश्च मनुजेश्वर ।

1. ख—अर्धद्वयं नास्ति

वेदांश्च चतुरस्सर्वान् षडङ्गैरुपबृंहितान् ॥ ३१

न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा ।
श्रुतं [1]धर्मरहस्यं ते कृष्णद्वैपायनादपि ॥ ३२

यथा तव सुता राजंस् तथैव तव पाण्डवाः ।
तान् पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥ ३३

धर्मराजो हि राजेन्द्र स्थास्यते शासने तव ।
आनृशंस्यपरं ह्येनं जानामि [2]तु युधिष्ठिरम् ॥ ३४

तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः ।
ईर्ष्याभिभूता दुर्वृत्तास् तान् न शोचितुमर्हसि ॥ ३५

वैशम्पायनः—

एतावदुक्त्वा वचनं धृतराष्ट्रं मनीषिणः ।
वासुदेवं महात्मानम् अभ्यभाषत कौरवः ॥ ३६

भीष्मः—

भगवन् देवदेवेश सुरासुरनमस्कृत ।
त्रिविक्रम नमस्तेऽस्तु शङ्खचक्रगदाधर ॥ ३७

वासुदेवो हिरण्यात्मा पुरुषस्सविता विराट् ।
जीवभूतोऽनुरूपस्त्वं परमात्मा सनातनः ॥ ३८

1. ख—देवरहस्यं ते
2. ख—गुरुवत्सलम्

त्वद्भक्तं [1]त्वद्गतस्वान्तम् अदारमपरिग्रहम् ।
त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ॥ ३९

अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम ।
रक्ष्याश्च ते पाण्डवेया भवानेषां परायणम् ॥ ४०

उक्तवानस्मि दुर्बुद्धिं मन्दं दुर्योधनं पुरा ॥ ४०॥

यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ॥ ४१॥

सन्धानस्य परः कालस् तवेति च पुनः पुनः ।
न च मे तद्वचो मूढः कृतवान् स सुमन्दधीः ॥ ४२॥

घातयित्वेह पृथिवीं ततस्स निधनं गतः ॥ ४३

त्वां तु जानाम्यहं देवं पुराणमृषिसत्तमम् ।
नरेण सहितं देवं बदर्यां सुचिरोषितम् ॥ ४४

तथा मे नारदः प्राह व्यासश्च सुमहातपाः ।
नरनारायणावेतौ सम्भूतौ मानुषेष्विह ॥ ४५

श्रीभगवान्—

अनुजानामि भीष्म त्वां वसूनाप्नुहि पार्थिव ।
न तेऽस्ति वृजिनं किञ्चिद् छुद्धात्मैश्वर्यसंयुतः ॥ ४६

पितृभक्तोऽसि राजर्षिर् मार्कण्डेय इवापरः ।

---

1. ख—त्वद्गतिं बालं त्वामेव शरणं गतम्

तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ ४७

वैशम्पायनः—

एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वान् ससुहृदस्तथा ॥ ४८

भीष्मः—

प्राणानुत्स्रष्टुमिच्छामि तन्माऽनुज्ञातुमर्हथ ।
सत्ये प्रयतितव्यं च सत्यं हि परमं बलम् ॥ ४९

आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारत ॥ ५०

वैशम्पायनः—

इत्युक्त्वा सुहृदस्सर्वास् तथा सम्पूज्य चैव हि ।
धनं बहुविधं राजन् दत्त्वा नित्यं द्विजातिषु ॥ ५१

पुनरेवाब्रवीद्धीमान् युधिष्ठिरमिदं वचः ॥ ५१॥

भीष्मः—

ब्राह्मणाश्चैव ते सर्वे वृद्धाश्चैव विशेषतः ।
आचार्या ऋत्विजश्चैव पूजनीया नराधिप ॥ ५२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
॥ ९० ॥ भीष्मस्वर्गारोहणपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये ५२॥ श्लोकाः ]

## ॥ षट्पञ्चाशदधिकशततमोऽध्यायः ॥

भीष्मेण भगवद्ध्यानपूर्वकं स्वशरीरमूर्धमध्योद्भेदनेन तेजो ज्वालारूपेण सर्वापरोक्षमाकाशप्रवेशनेन क्षणादन्तर्धानम् ॥ १ ॥ ततो धृतराष्ट्रयुधिष्ठिरादिभी राजवैभवेन चितारोपणेन विधिवदग्निना समुद्दीपनम् ॥ २ ॥ ततो गङ्गामवगाह्य कृतोदकेषु युधिष्ठिरादिषु मूर्तीभूय जलादुद्गत्य भीष्मं प्रति सकरुणं विलापेन शोचन्तीं गङ्गां प्रति कृष्णादिभिराश्वासनम् ॥ ३ ॥

वैशम्पायनः—

एवमुक्त्वा कुरून् सर्वान् भीष्मश्शान्तनवस्तदा ।
तूष्णीं बभूव कौरव्यस् स मुहूर्तं कुरूद्वह ॥ १

समादधत् स्वमात्मानं धारणानुक्रमात् स्थितः ।
तस्योर्ध्वमगमन् प्राणास् सन्निरुद्धा महात्मनः ॥ २

इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम् ॥ २॥

यद्यन्मुञ्चति गात्राणां स शन्तनुसुतस्तदा ।
तत्तद्विशल्यमभवद् योगयुक्तस्य वै क्रमात् ॥ ३॥

क्षणेन प्रेक्षतां तेषां विशल्यस्सोऽभवत् तदा ॥ ४

तं दृष्ट्वा विस्मितास्सर्वे वासुदेवपुरोगमाः ।
सङ्गतैर्मुनिभिस्सर्वैस् तदा व्यासादिभिर्नृप ॥ ५

सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु वै ।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात ह ॥ ६

देवदुन्दुभिनादश्च पुष्पवर्षैर्महानभूत् ।
सिद्धा ब्रह्मर्षयश्चैव साधुसाध्विति हर्षिताः ॥ ७

महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप ।
निस्सृत्याकाशमाविश्य क्षणेनान्तरधीयत ॥ ८

एवं स नृपशार्दूल श्रीमान् शान्तनवस्तदा ।
समयुज्यत लोकैस्स्वैर् भारतानां कुलोद्वहः ॥ ९

ततस्त्वादाय दारूणि चन्दनान्यगरूणि च ।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा ॥ १०
युयुत्सुश्चापि कौरव्यः प्रेक्षकास्त्वितरेऽभवन् ॥ १०॥

युधिष्ठिरश्च गाङ्गेयं धृतराष्ट्रश्च दुःखितौ ।
छादयामासतुरुभौ क्षौमैर्माल्यैश्च कौरवम् ॥ ११॥

धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम् ।
चामरे व्यजने शुभ्रे भीमसेनार्जुनावुभौ ॥ १२॥
[1]छत्रे च पर्यगृह्णीतां माद्रीपुत्रावुभौ तदा ॥ १३
युधिष्ठिरेण सहितो धृतराष्ट्रस्तु पादतः ॥ १३॥

वृद्धास्स्त्रियः कौरवाणां भीष्मं कुरुकुलोद्वहम् ।
तालवृन्तान्युपादाय पर्यवीजन् समन्ततः ॥ १४॥

ततोऽस्य विधिवच्चक्रुः पितृमेधं महात्मनः ।

---

1. क—ते उभे पर्य ; ख—उष्णीषे पर्यगृ

याजका जुहुवुश्चाग्निं जगुस्सामानि सामगाः ॥ १५॥
ततश्चन्दनकाष्ठैश्च तथा कालेयकैरपि ।
कालागुरुप्रभृतिभिर् गन्धैश्चाज्यघटैरपि ॥ १६॥
समवच्छाद्य गाङ्गेयं प्रज्वाल्य च हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखा नृप ॥ १७॥
प्रज्वाल्य तु नरश्रेष्ठं गाङ्गेयं कुरुसत्तमम् ।
जग्मुर्भागीरथीतीरम् ऋषिजुष्टं कुरूद्वहाः ॥ १८॥
अनुगम्यमाना व्यासेन नारदेनासितेन च ।
कृष्णेन भरतस्त्रीभिर् ये च पौरास्समागताः ॥ १९॥
उदकं चक्रिरे सर्वे गाङ्गेयस्य महात्मनः ।
विधिवत् क्षत्रियश्रेष्ठास् स च पौरजनस्तदा ॥ २०॥
सा च भागीरथी देवी तनयस्योदके कृते ।
उत्थाय सलिलात् तस्माद् रुदती शोकलालसा ॥ २१॥
परिदेवयती तत्र कौरव्यानभ्यभाषत ॥ २२

गङ्गा—

निबोधत यथावृत्तम् उच्यमानं मया नृपाः ।
राजवृत्तेन सम्पन्नः प्रज्ञयाऽभिजनेन च ॥ २३
समर्थः कुरुवृद्धानां पितृभक्तो दृढव्रतः ॥ २३॥
जामदग्न्येन रामेण पुरा यो न पराजितः ।
दिव्यैरस्त्रैर्महावीर्यैस् स हतोऽद्य शिखण्डिना ॥ २४॥

अश्मसारमयं नूनं हृदयं मम पार्थिवाः ।
अपश्यन्त्याः प्रियं पुत्रं यन्न दीर्यति मेऽद्य वै ॥ २५॥

समेतं पार्थिवाः क्षत्रं काशिपुर्यां स्वयंवरे ।
विजित्यैकरथेनाजौ कन्याश्चैव जहार ह ॥ २६॥

यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन ।
हतं शिखण्डिना श्रुत्वा यन्न दीर्यति मे मनः ॥ २७॥

जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना ।
योधयन् नापि निहतो निहतस्स शिखण्डिना ॥ २८॥

वैशम्पायनः—

एवं वाक्यं बहुविधं विलपन्तीं महानदीम् ।
आश्वासयामास तदा साम्ना दामोदरो विभुः ॥ २९॥

श्रीभगवान्—

समाश्वसिहि गङ्गे त्वं मा शुचश्शुभदर्शने ।
गतः परमिकां सिद्धिं तव पुत्रो न संशयः ॥ ३०॥

वसुरेष महातेजाश् शापदोषेण शोभने ।
मनुष्यतामनुप्राप्तो नैनं शोचितुमर्हसि ॥ ३१॥

स एष क्षत्रधर्मेण युध्यमानो रणाजिरे ।
धनञ्जयेन निहतो नैव तुन्नश्शिखण्डिना ॥ ३२॥

भीष्मं हि कुरुशार्दूलम् उद्यतेषुं महारणे ।
न शक्तस्समरे हन्तुं साक्षादपि शतक्रतुः ॥ ३३॥

स्वच्छन्देन सुतस्तुभ्यं गतस्स्वर्गं शुभानने ।
न शक्तास्तं निहन्तुं हि रणे वै सर्वदेवताः ॥ ३४॥

तस्मात् त्वं हि सरिच्छ्रेष्ठे मा शुचः कुरुनन्दनम् ।
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ॥ ३५॥

वैशम्पायनः—

इत्युक्ता सा तु कृष्णेन व्यासेन सरितां वरा ।
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ॥ ३६॥

सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृपाः ।
अनुज्ञाप्य च ते सर्वे न्यवर्तन्त जनाधिपाः ॥ ३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
अनुशासनपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
॥ ९० ॥ भीष्मस्वर्गारोहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३७॥ श्लोकाः ]
[ भीष्मस्वर्गारोहणपर्व समाप्तम् ]
॥ अनुशासनपर्व समाप्तम् ॥
[ ॥ अस्मिन्ननुशासनपर्वणि १०२४९॥ श्लोकाः ४० वाक्यानि ॥ ]

---

अतः परमाश्वमेधिकं पर्व भविष्यति तस्यायमाद्यः श्लोकः ॥

---

वैशम्पायनः—

कृतोदकं तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुर् उत्तताराकुलेन्द्रियः ॥

इति

---

॥ श्रीरस्तु ॥

# ॥ श्रीमन्महाभारतम् ॥

तत्र

# अनुशासनपर्वणि

॥ औत्तराहकोशानुसारिणः

अधिका अध्यायाः ॥

## ॥ कुम्भघोणपुस्तके - सप्तषष्टितमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - द्वात्रिंशोऽध्यायः ॥

(To face P. 371 of Vol XVI)

भीष्मेण युधिष्ठिरं प्रति शरणागतरक्षणफलप्रतिपादकश्येनकपोतोपाख्यानकथनम् ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ॥ १

शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम् ।
किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥ २

भीष्मः—

इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः ।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥ ३

प्रपात्यमानश्श्येनेन कपोतः प्रियदर्शनः ।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ॥ ४

स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम् ।
आश्वास्याश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥ ५

भयं ते सुमहत् कस्मात् कुत्र किं वा कृतं त्वया ।
येन त्वमिह सम्प्राप्तो विसंज्ञो भ्रान्तचेतनः ॥ ६

नवनीलोत्पलापीड चारुवर्ण सुदर्शन ।
दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव ॥ ७

मत्सकाशमनुप्राप्तं न त्वां कश्चित् समुत्सहेत् ।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ॥ ८

काशिराज्यं तदद्यैव त्वदर्थं जीवितं तथा ।
त्यजेयं भव विस्रब्धः कपोत न भयं तव ॥ ९

श्येनः—

ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि ।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ॥ १०

मांसं च रुधिरं चास्य मज्जा मेदश्च मे हितम् ।
परितोषकरो ह्येष मम माऽस्याग्रतो भव ॥ ११

तृष्णा मे बाधतेत्युग्रा क्षुधा निर्दहतीव माम् ।
मुञ्चैनं नहि शक्ष्यामि राजन् मन्दयितुं क्षुधाम् ॥ १२

मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः ।
किञ्चिदुच्छ्वासनिश्श्वासं न राजन् गोप्तुमर्हसि ॥ १३

यदि स्वविषये राजन् प्रभुस्त्वं रक्षणे नृणाम् ।
खेचरस्य तृषार्तस्य न त्वं प्रभुरथोत्तम ॥ १४

यदि वैरिषु भृत्येषु स्वजनव्यवहारयोः ।
विषयेष्विन्द्रियाणां च आकाशे मा पराक्रम ॥ १५

प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते ।
यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि ॥ १६

भीष्मः—

श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः ।
सम्भाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत ॥ १७

राजा—

गोवृषो वा वराहो वा मृगो वा महिषोऽपि वा ।
त्वदर्थमद्य क्रियतां क्षुधाप्रशमनाय ते ॥ १८

शरणागतं न त्यजेयम् इति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥ १९

श्येनः—

न वराहं न चोक्षाणं न चान्यान् विविधान् द्विजान् ।
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ २०

यस्तु मे विहितो भक्ष्यस् स्वयं देवैस्सनातनः ।
श्येनाः कपोतान् खादन्ति स्थितिरेषा सनातनी ॥ २१

उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ॥ २२

भीष्मः—

महाननुग्रहो मेऽद्य यस्त्वमेवमिवात्थ माम् ॥ २२॥

बाढमेव करिष्यामीत्युक्त्वाऽसौ राजसत्तमः ।
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ॥ २३॥

अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ।
हाहाभूता विनिष्क्रान्ताश् श्रुत्वा परमदुःखिताः ॥ २४॥

तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ।
बभूव सुमहान् नादो मेघगम्भीरनिःस्वनः ॥ २५॥

निरुद्धं गगनं सर्वं व्यभ्रं मेघैस्समन्ततः ।
मही प्रचलिता चासीत् तस्य सत्येन कर्मणा ॥ २६॥

स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ।
तानि मांसानि सञ्छिद्य तुलां पूरयतेऽशनैः ॥ २७॥

तथाऽपि न समस्तेन कपोतेन बभूव ह ॥ २८

अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुलां ततस्समारूढस् स्वं मांसक्षयमुत्सृजन् ॥ २९

ततस्सेन्द्रास्त्रयो लोकास् तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाकाशगैस्तत्र वादिता देवदुन्दुभिः ॥ ३०

अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैर् अभिवृष्टः पुनः पुनः ॥ ३१

देवगन्धर्वसङ्घातैर् अप्सरोभिश्च सर्वतः ।
नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ॥ ३२

हेमप्रासादसम्बाधं मणिकाञ्चनतोरणम् ।
सवैडूर्यमणिस्तम्भं विमानं समधिष्ठितः ॥ ३३

स राजर्षिर्गतस्स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥ ३४

भक्तानामनुरक्तानाम् आश्रितानां च रक्षिता ।
दयावान् सर्वभूतेषु परत्र सुखमेधते ॥ ३५

साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति ।
किं न प्राप्तं भवेत्तेन स्वव्याजेनेह कर्मणा ॥ ३६

स राजर्षिर्विशुद्धात्मा धीरस्सत्यपराक्रमः ।
काशीनामीश्वरः ख्यातस् त्रिषु लोकेषु कर्मणा ॥ ३७

योऽप्यन्यः कारयेदेवं शरणागतरक्षणम् ।
सोऽपि गच्छेत तामेव गतिं भरतसत्तम ॥ ३८

इदं वृत्तं हि राजर्षे वृषदर्भस्य कीर्तयन् ।
पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ॥ ३९

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

---

## ।। कुम्भघोणपुस्तके त्रिनवतितमोऽध्यायः ।।

## ।। पूनाचित्रशालापुस्तके अष्टपञ्चाशोऽध्यायः ।।

(To face P. 491 of Vol XVI)

भीष्मेण युधिष्ठिरं प्रति तटाकादिप्रतिष्ठाया वृक्षाद्यारोपणस्य च फलनिरूपणम् ॥

युधिष्ठिरः—

आरामाणां तटाकानां यत् फलं कुरुपुङ्गव ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ।। १

भीष्मः—

सुप्रदर्शा बलवती चित्रा धातुविभूषिता ।
उपेता सर्वभूतैश्च श्रेष्ठा भूमिरिहोच्यते ।। २

तस्याः क्षेत्रविशेषाश्च तटाकानां च बन्धनम् ।
औदकानि च सर्वाणि प्रवक्ष्याम्यनुपूर्वशः ।। ३

तटाकानां च वक्ष्यामि कृतानां चापि ये गुणाः ।
त्रिषु लोकेषु सर्वत्र पूजनीयस्तटाकवान् ।। ४

अथ वा मित्रसदनं मैत्रं मित्रविवर्धनम् ।
कीर्तिसञ्जननं श्रेष्ठं तटाकानां निवेशनम् ।। ५

धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।

तटाकसुकृतं देशे क्षेत्रमेकं महाश्रयम् ॥ ६
चतुर्विधानां भूतानां तटाकमुपलक्षयेत् ।
तटाकानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥ ७
देवा मनुष्यगन्धर्वाः पितरोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥ ८
तस्मात्तांस्ते प्रवक्ष्यामि तटाके ये गुणास्स्मृताः ।
या च तत्र फलावाप्तिर् ऋषिभिस्समुदाहृता ॥ ९
वर्षाकाले तटाके तु सलिलं यस्य तिष्ठति ।
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ॥ १०
शरत्काले तु सलिलं तटाके यस्य तिष्ठति ।
गोसहस्रस्य स प्रेत्य लभते फलमुत्तमम् ॥ ११
हेमन्तकाले सलिलं तटाके यस्य तिष्ठति ।
स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् ॥ १२
यस्य वै शैशिरे काले तटाके सलिलं भवेत् ।
तस्याग्निष्टोमयज्ञस्य फलमाहुर्मनीषिणः ॥ १३
तटाकं सुकृतं यस्य वसन्ते तु महाश्रयम् ।
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥ १४
निदाघकाले पानीयं तटाके यस्य तिष्ठति ।
वाजिमेधफलं तस्य फलं वै मुनयो विदुः ॥ १५

स कुलं तारयेत् सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति सलिलं साधवश्च नरास्सदा ॥ १६

तटाके यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥ १७

यत् पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तटाके यस्य तत् सर्वं प्रेत्यानन्त्याय कल्पते ॥ १८

दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ १९

तिलान् ददत पानीयं दीपान् ददत जागृत ।
ज्ञातिभिस्सह मोदध्वम् एतत् प्रेत्य सुदुर्लभम् ॥ २०

सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ २१

एवमेतत्तटाकस्य कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामवरोपणम् ॥ २२

स्थावराणां च भूतानां जातयष्षट् प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस् त्वक्सारास्तृणजातयः ॥ २३

एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् ॥ २४

लभते नाम लोके च पितृभिश्च महीयते ।

देवलोके गतस्यापि नाम तस्य न नश्यति ॥ २५

अतीतानागते चोभे पितृवंशं च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् ॥ २६

तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः ।
परलोकगतस्स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ॥ २७

पुष्पैस्सुरगणान् वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथिं तात पूजयन्ति महीरुहः ॥ २८

किन्नरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ॥ २९

पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ।
वृक्षदं पुत्रवद्वृक्षास् तारयन्ति परत्र तु ॥ ३०

तस्मात्तटाके सद्वृक्षा रोप्याश्श्रेयोर्थिना सदा ।
पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्मतस्स्मृताः ॥ ३१

तटाककृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥ ३२

तस्मात्तटाकं कुर्वीत आरामांश्चैव रोपयेत् ।
यजेच्च विविधैर्यज्ञैस् सत्यं च सततं वदेत् ॥ ३३

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
[अस्मिन्नध्याये ३३ श्लोकाः]

॥ कुम्भघोणपुस्तके एकसप्तत्यधिकशततमोऽध्यायः ॥

॥ पूनाचित्रशालापुस्तके नवाधिकशततमोऽध्यायः ॥

( To face P. 916 of Vol XVII )

भीष्मेण युधिष्ठिरं प्रति मार्गशीर्षादिकार्तिकान्तेषु द्वादशमासेषु द्वादशद्वादशीषु केशवादिदामोदरान्तभगवद्रूपविशेषपूजाफलविशेष कथनम् ॥

युधिष्ठिरः—

सर्वेषामुपवासानां यच्छ्रेयस्सुमहत् फलम् ।
यच्चाप्यसंशयं लोके तन्मे त्वं वक्तुमर्हसि ॥ १

भीष्मः—

शृणु राजन् यथा गीतं स्वयमेव स्वयम्भुवा ।
यत् कृत्वा निर्वृतो भूयात् पुरुषो नात्र संशयः ॥ २

द्वादश्यां मार्गशीर्षे तु अहोरात्रेण केशवम् ।
अर्च्याश्वमेधं प्राप्नोति दुष्कृतं चास्य नश्यति ॥ ३

तथैव पौषमासे तु पूज्यो नारायणेति च ।
वाजपेयमवाप्नोति सिद्धिं च परमां व्रजेत् ॥ ४

अहोरात्रेण द्वादश्यां माघमासे तु माधवम् ।

राजसूयमवाप्नोति कुलं चैव समुद्धरेत् ॥ ५

तथैव फाल्गुने मासि गोविन्देति च पूजयन् ।
अतिरात्रमवाप्नोति सोमलोकं च गच्छति ॥ ६

अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन् ।
पौण्डरीकमवाप्नोति देवलोकं च गच्छति ॥ ७

वैशाखमासे द्वादश्यां पूजयन्मधुसूदनम् ।
अग्निष्टोममवाप्नोति सोमलोकं च गच्छति ॥ ८

अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमम् ।
गवां मेधमवाप्नोति अप्सरोभिश्च मोदते ॥ ९

आषाढे मासि द्वादश्यां वामनेति च पूजयन् ।
नरमेधमवाप्नोति पुण्यं च लभते महत् ॥ १०

अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम् ।
पञ्चयज्ञानवाप्नोति विमानस्थश्च मोदते ॥ ११

तथा भाद्रपदे मासि हृषीकेशेति पूजयन् ।
सौत्रामणिमवाप्नोति पूतात्मा भवते च हि ॥ १२

द्वादश्यामाश्विने मासि पद्मनाभेति चार्चयन् ।
गोसहस्रफलं पुण्यं प्राप्नुयान्नात्र संशयः ॥ १३

द्वादश्यां कार्तिके मासि पूज्यो दामोदरेति च ।

गवां यज्ञमवाप्नोति पुमान् स्त्री वा न संशयः ॥ १४

अर्चयेत् पुण्डरीकाक्षम् एवं संवत्सरं तु यः ।
जातिस्मरत्वं प्राप्नोति विन्द्याद्बहु सुवर्णकम् ॥ १५

अहन्यहनि तद्भावम् उपेन्द्रं योऽधिगच्छति ।
समाप्ते भोजयेद्विप्रान् अथ वा दापयेद्घृतम् ॥ १६

अतः परं नोपवासो भवतीति विनिश्चयः ।
उवाच भगवान् विष्णुस् स्वयमेव पुरातनम् ॥ १७

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके द्विसप्तत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके दशाधिकशततमोऽध्यायः ॥

( To face P. 916 of Vol XVII )

भीष्मेण युधिष्ठिरं प्रति शरीरसौन्दर्यादिफलकचान्द्रव्रताचरणप्रकार-कथनम् ॥

वैशम्पायनः—

शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् ।
उपगम्य महाप्राज्ञः पर्यपृच्छद्युधिष्ठिरः ॥ १

अङ्गानां रूपसौभाग्यं प्रियं चैव कथं भवेत् ।
धर्मार्थकामसंयुक्तस् सुखभागी कथं भवेत् ॥ २

भीष्मः—

मार्गशीर्षस्य मासस्य चन्द्रे मूलेन संयुते ।
पादौ मूलेन राजेन्द्र जङ्घायामथ रोहिणीम् ॥ ३

अश्विन्यां सक्थिनी चैव ऊरू चाषाढयोस्तथा ।
गुह्यं तु फाल्गुनी विद्यात् कृत्तिका कटिकास्तथा ॥ ४

नाभिं भाद्रपदे विद्याद् रेवत्यामक्षिमण्डलम् ।
पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्तथा ॥ ५

बाहुभ्यां तु विशाखासु हस्तौ हस्तेन निर्दिशेत् ।
पुनर्वस्वङ्गली राजन्नाश्लेषासु नखास्तथा ॥ ६

ग्रीवां ज्येष्ठा च राजेन्द्र श्रवणेन तु कर्णयोः ।
मुखं पुष्येण दानेन दन्तोष्ठौ स्वातिरुच्यते ॥ ७

हासं शतभिषां चैव मघां चैवाथ नासिकाम् ।
नेत्रे मृगशिरो विद्याल्ललाटे मित्रमेव तु ॥ ८

भरण्यां तु शिरो विद्यात् केशानार्द्रां नराधिप ।
समाप्ते तु घृतं दद्याद् ब्राह्मणे वेदपारगे ॥ ९

सुभगो दर्शनीयश्च ज्ञानभाग्यथ जायते ।
जायते परिपूर्णाङ्गः पौर्णमास्येव चन्द्रमाः ॥ १०

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
[ अस्मिन्नध्याये १० श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके अष्टाशीत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके पञ्चविंशत्यधिकशततमोऽध्यायः ॥

( To face P. 984 of Vol XVII )

भीष्मेण युधिष्ठिरं प्रति श्राद्धविध्यादिप्रतिपादकपितृदेवदूतादिसंवादानुवादः ॥

---

युधिष्ठिरः—

जन्म मानुष्यकं प्राप्य कर्मक्षेत्रं सुदुर्लभम् ।
श्रेयोर्थिना दरिद्रेण किं कर्तव्यं पितामह ॥ १

दानानामुत्तमं यच्च देयं यच्च यथा यथा ।
मान्यान् पूज्यांश्च गाङ्गेय रहस्यं वक्तुमर्हसि ॥ २

वैशम्पायनः—

एवं पृष्टो नरेन्द्रेण पाण्डवेन यशस्विना ।
धर्माणां परमं गुह्यं भीष्मः प्रोवाच पार्थिवम् ॥ ३

भीष्मः—

शृणुष्वावहितो राजन् धर्मगुह्यानि भारत ।
यथा हि भगवान् व्यासः पुरा कथितवान् मयि ॥ ४

देवगुह्यमिदं राजन् यमेनाक्लिष्टकर्मणा ।
नियमस्थेन युक्तेन तपसो महतः फलम् ॥ ५

येन यः प्रीयते देवः प्रीयन्ते पितरस्तथा ।

ऋषयः प्रमथाश्श्रीश्च चित्रगुप्तो दिशां गजाः ॥ ६

ऋषिधर्मस्स्मृतो यत्र सरहस्यो महाफलः ।
महादानफलं चैव सर्वयज्ञफलं तथा ॥ ७

यश्चैतदेवं जानीयाज् ज्ञात्वा वा कुरुतेऽनघ ।
सदोषोऽदोषवांश्चेह तैर्गुणैस्सह युज्यते ॥ ८

दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः ॥ ९

अर्धेनैतानि सर्वाणि नृपतिः कथ्यतेऽधिकः ।
त्रिवर्गसहितं शास्त्रं पवित्रं पुण्यलक्षणम् ॥ १०

धर्मव्याकरणं पुण्यं रहस्यश्रवणं महत् ।
श्रोतव्यं धर्मसंयुक्तं विहितं त्रिदशैस्स्वयम् ॥ ११

पितॄणां यत्र गुह्यानि प्रोच्यन्ते श्राद्धकर्मणि ।
देवतानां च सर्वेषां रहस्यं कथ्यतेऽखिलम् ॥ १२

ऋषिधर्मस्स्मृतो यत्र सरहस्यो महाफलः ।
महायज्ञफलं चैव सर्वदानफलं तथा ॥ १३

ये पठन्ति सदा मर्त्या येषां चैवोपतिष्ठति ।
श्रुत्वा च फलमाचष्टे स्वयं नारायणः प्रभुः ॥ १४

गवां फलं तीर्थफलं यज्ञानां चैव यत् फलम् ।
एतत् फलमवाप्नोति यो नरोऽतिथिपूजकः ॥ १५

श्रोतारश्श्रद्दधानाश्च येषां शुद्धं च मानसम् ।
तेषां व्यक्तं जिता लोकाश् श्रद्दधानेन साधुना ॥ १६

मुच्यते किल्बिषाच्चैव न स पापेन लिप्यते ।
धर्मं च लभते नित्यं प्रेत्य लोकगतो नरः ॥ १७

कस्यचित्त्वथ कालस्य देवदूतो यदृच्छया ।
स्थितो ह्यन्तर्हितो भूत्वा पर्यभाषत वासवम् ॥ १८

देवदूतः—
यौ तौ कामगुणोपेतावश्विनौ भिषजां वरौ ।
आज्ञयाऽहं तयोः प्राप्तस् सनरान् पितृदैवतान् ॥ १९

कस्माद्धि मैथुनं श्राद्धे दातुर्भोक्तुश्च वर्जितम् ।
किमर्थं च त्रयः पिण्डाः प्रविभक्ताः पृथक् पृथक् ॥ २०

प्रथमः कस्य दातव्यो मध्यमः क्व च गच्छति ।
उत्तरश्च स्मृतः कस्य एतदिच्छामि वेदितुम् ॥ २१

भीष्मः—
श्रद्दधानेन दूतेन भाषितं धर्मसंहितम् ।
पूर्वस्थास्त्रिदशास्सर्वे पितरः पूज्य खेचरम् ॥ २२

पितरः—
स्वागतं तेऽस्तु भद्रं ते श्रूयतां खेचरोत्तम ।
गूढार्थः परमः प्रश्नो भवता समुदीरितः ॥ २३

श्राद्धं दत्त्वा च भुक्त्वा च पुरुषो यस्स्त्रियं व्रजेत् ।

पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥ २४

प्रविभागं तु पिण्डानां प्रवक्ष्याम्यनुपूर्वशः ।
पिण्डो ह्यधस्ताद्गच्छंस्तु अप आविश्य भावयेत् ॥ २५

पिण्डं तु मध्यमं तत्र पत्नी त्वेका समश्नुते ।
पिण्डस्तृतीयो यस्तेषां तं दद्याज्जातवेदसि ॥ २६

एष श्राद्धविधिः प्रोक्तो यथा धर्मो न लुप्यते ॥ २६॥

पितरस्तस्य तुष्यन्ति प्रहृष्टमनसस्सदा ।
प्रजा विवर्धते चास्य अक्षयं चोपतिष्ठति ॥ २७॥

देवदूतः—

आनुपूर्व्येण पिण्डानां प्रविभागः पृथक् पृथक् ।
पितॄणां त्रिषु सर्वेषां निरुक्तं कथितं त्वया ॥ २८॥

एकस्समुद्धृतः पिण्डो ह्यधस्तात् कस्य गच्छति ।
कं वा प्रीणयते देवं कथं तारयते पितॄन् ॥ २९॥

मध्यमं तु तदा पत्नी भुङ्क्तेऽनुज्ञातमेव हि ।
किमर्थं पितरस्तस्य कव्यमेव च भुञ्जते ॥ ३०॥

अत्र यस्त्वन्तिमः पिण्डो गच्छते जातवेदसम् ।
भवते का गतिस्तस्य कं वा समनुगच्छति ॥ ३१॥

एतदिच्छाम्यहं श्रोतुं पिण्डेषु त्रिषु या गतिः ।
फलं वृत्तिं च मार्गं च यश्चैनं प्रतिपद्यते ॥ ३२॥

पितरः—

सुमहानेष प्रश्नो वै यस्त्वया समुदीरितः ।
रहस्यमद्भुतं चापि पृष्टाःस्म गगनेचर ॥ ३३॥

एतदेव प्रशंसन्ति देवाश्च मुनयस्तथा ।
तेऽप्येवं नाभिजानन्ति पितृकार्यविनिश्चयम् ॥ ३४॥

वर्जयित्वा महात्मानं चिरजीविनमुत्तमम् ॥ ३५

पितृभक्तस्तु यो विप्रो वरलब्धो महायशाः ।
त्रयाणामपि पिण्डानां श्रुत्वा भगवतो गतिम् ॥ ३६

देवदूतेन यः पृष्टश् श्राद्धस्य विधिनिश्चयः ।
गतिं त्रयाणां पिण्डानां शृणुष्वावहितो मम ॥ ३७

अपो गच्छति यो ह्यत्र शशिनं ह्येष प्रीणयेत् ।
शशी प्रीणयते देवान् पितृंश्चैव महामते ॥ ३८

भुङ्क्ते तु पत्नी यं चैषाम् अनुज्ञाता तु मध्यमम् ।
पुत्रकामाय पुत्रं तु प्रयच्छन्ति पितामहाः ॥ ३९

हव्यवाहे तु यः पिण्डो दीयते तन्निबोध मे ।
पितरस्तेन तृप्यन्ति प्रीताः कामान् दिशन्ति च ॥ ४०
एतत् ते कथितं सर्वं त्रिषु पिण्डेषु या गतिः ॥ ४०॥

ऋत्विग्भ्यो यजमानस्य पितृत्वमनुगच्छति ।
तस्मिन्नहनि मन्यन्ते परिहार्यं हि मैथुनम् ॥ ४१॥

शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम ।

ये मया कथिता दोषास् ते तथा स्युर्न चान्यथा ॥ ४२॥
तस्मात् स्नातश्शुचिः क्षान्तश् श्राद्धं भुञ्जीत वै द्विजः ।
प्रजा विवर्धते चास्य यश्चैवं सम्प्रयच्छति ॥ ४३॥

भीष्मः—

ततो विद्युत्प्रभो नाम ऋषिराह महातपाः ।
आदित्यतेजसा तस्य तुल्यं रूपं प्रकाशते ॥ ४४॥
स च धर्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् ॥ ४५

विद्युत्प्रभः—

तिर्यग्योनिगतान् सत्वान् मर्त्या हिंसन्ति मोहिताः ।
कीटान् पिपीलिकान् सर्पान् मेषान् समृगपक्षिणः ॥ ४६
किल्बिषं सुबहु प्राप्ताः किंस्विदेषां प्रतिक्रिया ॥ ४६॥

भीष्मः—

ततो देवगणास्सर्वे ऋषयश्च तपोधनाः ।
पितरश्च महाभागाः पूजयन्ति स्म तं मुनिम् ॥. ४७॥

शक्रः—

कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च ।
एतानि मनसा ध्यात्वा अवगाहेत् ततो जलम् ॥ ४८॥
तथा मुच्यति पापेन राहुणा चन्द्रमा यथा ॥ ४९
त्र्यहं स्नातस्स भवति निराहारश्च वर्तते ।
स्पृशते यो गवां पृष्ठं वालधिं च नमस्यति ॥ ५०

भीष्मः—

ततो विद्युत्प्रभो वाक्यम् अभ्यभाषत वासवम् ।

विद्युत्प्रभः—

अयं सूक्ष्मतरो धर्मस् तं निबोध शतक्रतो ॥ ५१

घृष्टो वटकषायेण अनुलिप्तः प्रियङ्गुणा ।
क्षीरेण षष्टिकान् भुक्त्वा सर्वपापैः प्रमुच्यते ॥ ५२

श्रूयतां चापरं गुह्यं रहस्यमृषिचिन्तितम् ।
श्रुतं मे भाषमाणस्य स्थाणोस्स्थाने बृहस्पतेः ॥ ५३

रुद्रेण सह देवेश तन्निबोध शचीपते ॥ ५३॥

पर्वतारोहणं कृत्वा एकपादो विभावसुम् ।
निरीक्षेत निराहार ऊर्ध्वबाहुः कृताञ्जलिः ॥ ५४॥

तपसा महता युक्त उपवासफलं लभेत् ॥ ५५

रश्मिभिस्तापितोऽर्कस्य सर्वपापमपोहति ।
ग्रीष्मकालेऽथ वा शीते एवं पापमपोहति ॥ ५६

ततः पापात् प्रमुक्तस्य द्युतिर्भवति शाश्वती ।
तेजसा सूर्यवद्दीप्तो भ्राजते सोमवत् पुनः ॥ ५७

भीष्मः—

मध्ये त्रिदशवर्गस्य देवराजश्शतक्रतुः ।
उवाच मधुरं वाक्यं बृहस्पतिमनुत्तमम् ॥ ५८

शक्रः—

धर्मगुह्यं तु भगवन् मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास् तान् यथावदुदीरय ॥ ५९

बृहस्पतिः—

प्रतिमेहन्ति ये सूर्यम् अनिलं द्विषते च ये ।
हव्यवाहे प्रदीप्ते च समिधं ये न जुह्वति ॥ ६०

बालवत्सां च ये धेनुं दुहन्ति क्षीरकारणात् ।
तेषां दोषान् प्रवक्ष्यामि तान् निबोध शचीपते ॥ ६१

भानुमाननिलश्चैव हव्यवाहश्च वासव ।
लोकानां मातरश्चैव गावस्सृष्टास्स्वयम्भुवा ॥ ६२

लोकांस्तारयितुं शक्ता मर्त्येष्वेतेषु देवताः ।
सर्वे भवन्तश्शृण्वन्तु एकैकं धर्मनिश्चयम् ॥ ६३

वर्षाणि षडशीतिं तु दुर्वृत्ताः कुलपांसनाः ।
स्त्रियस्सर्वाश्च दुर्वृत्ताः प्रतिमेहन्ति या रविम् ॥ ६४

अनिलद्वेषिणश्शक्र गर्भस्था च्यवते प्रजा ॥ ६४॥

हव्यवाहस्य दीप्तस्य समिधं ये न जुह्वति ।
अग्निकार्येषु वै तेषां हव्यं नाश्नाति पावकः ॥ ६५॥

क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः ।
न तेषां क्षीरपाः केचिज् जायन्ते कुलवर्धनाः ॥ ६६॥

प्रजाक्षयेण युज्यन्ते कुलवंशक्षयेण च ।
एवमेतत् पुरा दृष्टं कुलवृद्धैर्द्विजातिभिः ॥ ६७॥

तस्माद्वर्ज्यानि वर्ज्यानि कार्यं कार्यं च नित्यशः ।

भूतिकामेन मर्त्येन सत्यमेतद्ब्रवीमि ते ॥ ६८॥

भीष्मः—

ततस्सर्वा महाभाग देवतास्समरुद्गणाः ।
ऋषयश्च महाभागाः पृच्छन्ति स्म पितॄंस्ततः ॥ ६९॥

देवादयः—

पितरः केन तुष्यन्ति मर्त्यानामल्पचेतसाम् ।
अक्षयं च कथं दानं भवेच्चैवौर्ध्वदेहिकम् ॥ ७०॥

आनृण्यं वा कथं मर्त्या गच्छेयुः केन कर्मणा ।
एतदिच्छामहे श्रोतुं परं कौतूहलं हि नः ॥ ७१॥

पितरः—

न्यायतो वै महाभागास् संशयस्समुदाहृतः ।
श्रूयतां येन तुष्यामो मर्त्यानां साधुकर्मणाम् ॥ ७२॥

नीलषण्डप्रमोक्षेण अमावास्यां तिलोदकैः ।
वर्षासु दीपकैश्चैव पितृणामनृणो भवेत् ॥ ७३॥

अक्षयं निर्व्यलीकं च दानमेतन्महाफलम् ।
अस्माकं परितोषश्च अक्षयः परिकीर्त्यते ॥ ७४॥

श्रद्दधानाश्च ये मर्त्या आहरिष्यन्ति सन्ततिम् ।
दुर्गात् ते तारयिष्यन्ति नरकात् प्रपितामहान् ॥ ७५॥

भीष्मः—

पितृणां भाषितं श्रुत्वा हृष्टरोमा तपोधनः ।
वृद्धगार्ग्यो महातेजास् तानेवं वाक्यमब्रवीत् ॥ ७६॥

वृद्धगार्ग्यः—

के गुणा नीलषण्डस्य प्रमुक्तस्य तपोधनाः ।
वर्षासु दीपदानेन तथैव च तिलोदकैः ॥ ७७॥

पितरः—

नीलषण्डस्य लाङ्गूलं तोयमभ्युद्धरेद्यदि ।
षष्टिं वर्षसहस्राणि पितरस्तेन तर्पिताः ॥ ७८॥
यस्तु शृङ्गगतं पङ्कं कूलादुद्धृत्य तिष्ठति ।
पितरस्तेन गच्छन्ति सोमलोकमसंशयम् ॥ ७९॥
वर्षासु दीपदानेन शशीवच्छोभते नरः ।
तमोरूपं न तस्यास्ति दीपकं यः प्रयच्छति ॥ ८०॥
अमावास्यां तु ये मर्त्याः प्रयच्छन्ति तिलोदकम् ।
पात्रमौदुम्बरं गृह्य मधुमिश्रं तपोधन ॥ ८१॥
कृतं भवति तैश्श्राद्धं सरहस्यं यथार्थवत् ॥ ८२
हृष्टपुष्टमनास्तेषां प्रजा भवति नित्यदा ।
कुलवंशस्य वृद्धिस्तु पिण्डदस्य फलं भवेत् ॥ ८३
श्रद्दधानस्तु यः कुर्यात् पितॄणामनृणो भवेत् ॥ ८३॥

भीष्मः—

एवमेष समुद्दिष्टश्श्राद्धकालक्रमस्तथा ।
विधिः पात्रं फलं चैव यथावदनुकीर्तितम् ॥ ८४॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥
[ अस्मिन्नध्याये ८४॥ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके एकोननवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके षड्विंशत्यधिकशततमोऽध्यायः ॥

विष्णुनेन्द्रं प्रति स्वप्रीतिकरधर्मकथनम् ॥ १ ॥ तथा बलदेवदेवाग्नि-विश्वामित्रादिभिः पृथक् पृथक् धर्मविशेषकथनम् ॥ २ ॥

भीष्मः—

केन ते च भवेत् प्रीतिः कथं तुष्टिं तु गच्छसि ।
इति पृष्टस्सुरेन्द्रेण प्रोवाच हरिरीश्वरः ॥ १

श्रीभगवान्—

ब्राह्मणानां परीवादो मम विद्वेषणं महत् ।
ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ॥ २

नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथाऽऽत्मनः ।
तेषां तुष्यामि मर्त्यानां यश्चक्रे च बलिं हरेत् ॥ ३

वामनं ब्राह्मणं दृष्ट्वा वराहं च जलोत्थितम् ।
उद्धृतां धरणीं चैव मूर्ध्ना धारयते तु यः ॥ ४
न तेषामशुभं किञ्चित् कल्मषं चोपपद्यते ॥ ४॥

अश्वत्थं रोचनां गां च पूजयेद्यो नरस्सदा ।
पूजितं च जगत्तेन सदेवासुरमानुषम् ॥ ५॥

तेन रूपेण तेषां च पूजां गृह्णामि तत्त्वतः ।

पूजा ममैषा नास्त्यन्या यावल्लोकाः प्रतिष्ठिताः ॥ ६॥

अन्यथा हि वृथा मर्त्याः पूजयन्त्यल्पबुद्धयः ।
नाहं तत् प्रतिगृह्णामि न सा तुष्टिकरी मम ॥ ७॥

इन्द्रः—

चक्रं पादौ वराहं च ब्राह्मणं चापि वामनम् ।
उद्धृतां धरणीञ्चैव किमर्थं त्वं प्रशंससि ॥ ८॥

भवान् सृजति भूतानि भवान् संहरति प्रजाः ।
प्रकृतिस्सर्वभूतानां समर्त्यानां सनातनी ॥ ९॥

भीष्मः—

सम्प्रहस्य ततो विष्णुर् इदं वचनमब्रवीत् ॥ १०

श्रीभगवान्—

चक्रेण निहता दैत्याः पद्भ्यां क्रान्ता वसुन्धरा ।
वाराहं रूपमास्थाय हिरण्याक्षो निपातितः ॥ ११

वामनं रूपमास्थाय जितो राजा मया बलिः ॥ ११॥

परितुष्टो भवाम्येवं मानुषाणां महात्मनाम् ।
तन्मां ये पूजयिष्यन्ति नास्ति तेषां पराभवः ॥ १२॥

अपि वा ब्राह्मणं दृष्ट्वा ब्रह्मचारिणमागतम् ।
ब्राह्मणाग्र्याहुतिं दत्त्वा अमृतं तस्य भोजनम् ॥ १३॥

ऐन्द्रीं सन्ध्यामुपासित्वा आदित्याभिमुखस्स्थितः ।

सर्वतीर्थेषु स स्नातो मुच्यते सर्वकिल्बिषैः ॥ १४॥

एतद्वः कथितं गुह्यम् अखिलेन तपोधनाः ।
संशयं पृच्छमानानां किं भूयः कथयाम्यहम् ॥ १५॥

बलदेवः—

श्रूयतां परमं गुह्यं मानुषाणां सुखावहम् ।
अजानन्तो यदबुधाः क्लिश्यन्ते भूतपीडिताः ॥ १६॥

कल्य उत्थाय यो मर्त्यस् स्पृशेद्गां वै घृतं दधि ।
सर्षपं च प्रियङ्गुं च कल्मषात् प्रतिमुच्यते ॥ १७॥

भूतानि चैव सर्वाणि अग्रतः पृष्ठतोऽपि वा ।
उच्छिष्टं वाऽपि छिद्रेषु वर्जयन्ति तपोधनाः ॥ १८॥

देवाः—

प्रगृह्यौदुम्बरं पात्रं तोयपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद् यद्वा सङ्कल्पयेद्व्रतम् ॥ १९॥

देवतास्तस्य तुष्यन्ति कामिकं चापि सिध्यति ॥ २०

अन्यथा हि वृथा मर्त्याः कुर्वते स्वल्पबुद्धयः ।
उपवासे बलौ चापि ताम्रपात्रं विशिष्यते ॥ २१

बलिर्भिक्षा तथाऽर्घ्यं च पितॄणां च तिलोदकम् ।
ताम्रपात्रेण दातव्यम् अन्यथाऽल्पफलं भवेत् ॥ २२

गुह्यमेतत् समुद्दिष्टं यथा तुष्यन्ति देवताः ॥ २२॥

धर्मः—

राजपौरुषिके विप्रे घाण्टिके परिचारिके ।
गोरक्षके वाणिजके तथा कारुकुशीलवे ॥ २३॥

मित्रद्रुह्यनधीयाने यश्च स्याद्वृषलीपतिः ।
एतेषु दैवं पित्र्यं वा न देयं स्यात् कथञ्चन ॥ २४॥

पिण्डदास्तस्य हीयन्ते न च प्रीणाति वै पितॄन् ॥ २५

अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्तते ।
पितरस्तस्य देवाश्च अग्नयश्च तथैव हि ॥ २६

निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात् ॥ २६॥

स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः ।
तुल्यदोषो भवत्येभिर् यस्यातिथिरनर्चितः ॥ २७॥

अग्नि—

पादमुद्यम्य यो मर्त्यस् स्पृशेद्गाश्च सुदुर्मतिः ।
ब्राह्मणं वा महाभागं दीप्यमानं तथाऽनलम् ॥ २८॥

तस्य दोषान् प्रवक्ष्यामि तच्छृणुध्वं समाहिताः ॥ २९

दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै ।
वैमनस्यं च देवानां कृतं भवति पुष्कलम् ॥ ३०

पावकश्च महातेजा हव्यं न प्रतिगृह्णति ॥ ३०॥

आजन्मनां शतं चैव नरके पच्यते तु सः ।

निष्कृतिं च न तस्यापि अनुमन्यन्ति कर्हिचित् ॥ ३१॥

तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन ।

ब्राह्मणश्च महातेजा दीप्यमानस्तथाऽनलः ॥ ३२॥

श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ॥ ३३

एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत् ॥ ३३॥

विश्वामित्रः—

श्रूयतां परमं गुह्यं रहस्यं धर्मसंहितम् ॥ ३४

परमान्नेन यो दद्यात् पितॄणामौपहारिकम् ।

गजच्छायायां पूर्वस्यां कुतपे दक्षिणामुखः ॥ ३५

यदा भाद्रपदे मासि भवते बहुले मघा ।

श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः ॥ ३६

कृतं तेन महच्छ्राद्धं वर्षाणीह त्रयोदश ॥ ३६॥

गावः—

बहुले समङ्गे ह्यकुतोभये च
क्षेमे च सख्येव हि भूयसी च ।
यथा पुरा ब्रह्मपुरे सवत्सा
शतक्रतोर्वज्रधरस्य यज्ञे ॥ ३७॥

भूयश्च या विष्णुपदे स्थिता या
विभावसोश्चापि पथे स्थिता या ।

देवाश्च सर्वे सह नारदेन
प्रकुर्वते सर्वसहेति नाम ॥ ३८॥

मन्त्रेणैतेनाभिवन्देत यो वै
विमुच्यते पापकृतेन कर्मणा ।
लोकानवाप्नोति पुरन्दरस्य
गवां फलं चन्द्रमसो द्युतिं च ॥ ३९॥

एतं हि मन्त्रं त्रिदशाभिजुष्टं
पठेत यः पर्वसु गोष्ठमध्ये ।
न तस्य पापं न भयं न शोकस्
सहस्रनेत्रस्य च याति लोकम् ॥ ४०॥

भीष्मः—

अथ सप्त महाभागा ऋषयो लोकविश्रुताः ।
वसिष्ठप्रमुखास्सर्वे ब्रह्माणं पद्मसम्भवम् ॥ ४१॥
प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयस्स्थिताः ॥ ४२

उवाच वचनं तेषां वसिष्ठो ब्रह्मवित्तमः ।
सर्वप्राणिहितं प्रश्नं ब्रह्मक्षत्रे विशेषतः ॥ ४३

वसिष्ठः—

द्रव्यहीनाः कथं मर्त्या दरिद्रास्साधुवर्तिनः ।
प्राप्नुवन्तीह यज्ञस्य फलं केन च कर्मणा ॥ ४४

भीष्मः—

एतच्छ्रुत्वा वचस्तेषां ब्रह्मा वचनमब्रवीत् ॥ ४४॥

ब्रह्मा—

अहो प्रश्नो महाभागा गूढार्थः परमश्शुभः ।
सूक्ष्मश्श्रेयांश्च मर्त्यानां भवद्भिस्समुदाहृतः ॥ ४५॥

श्रूयतां सर्वमाख्यास्ये निखिलेन तपोधनाः ।
यथा यज्ञफलं मर्त्यो लभते नात्र संशयः ॥ ४६॥

पौषमासस्य शुक्ले वै यदा युज्येत रोहिणी ।
तेन नक्षत्रयोगेन आकाशशयनो भवेत् ॥ ४७॥

एकवस्त्रश्शुचिस्स्नातश्श्रद्धानस्समाहितः ।
सोमस्य रश्मयः पीत्वा महायज्ञफलं लभेत् ॥ ४८॥

एतद्वः परमं गुह्यं कथितं द्विजसत्तमाः ।
यन्मां भवन्तः पृच्छन्ति सूक्ष्मतत्त्वार्थदर्शिनः ॥ ४९॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥
[अस्मिन्नध्याये ४९॥ श्लोकाः]

## ॥ कुम्भघोणपुस्तके - नवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - सप्तविंशत्यधिकशततमोऽध्यायः ॥

सूर्यगार्ग्यादिभिः पृथक्पृथग्धर्मरहस्यकथनम् ॥

विभावसुः—

सलिलस्याञ्जलिं पूर्णम् अक्षतांश्च घृतोत्तरान् ।
सोमस्योत्तिष्ठमानस्य तज्जलं चाक्षतांश्च तान् ॥ १

स्थितो ह्यभिमुखो मर्त्यः पौर्णमास्यां बलिं हरेत् ।
अग्निकार्यं कृतं तेन हुताश्चास्याग्नयस्त्रयः ॥ २

वनस्पतिं च यो हन्याद् अमावास्यामबुद्धिमान् ।
अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया ॥ ३

दन्तकाष्ठं तु यः खादेद् अमावास्यामबुद्धिमान् ।
हिंसितश्चन्द्रमास्तेन पितरश्चोद्विजन्ति च ॥ ४

हव्यं न तस्य देवाश्च प्रतिगृह्णन्ति पर्वसु ।
कुप्यन्ते पितरश्चास्य कुले वंशोऽस्य हीयते ॥ ५

श्रीः—

प्रकीर्णं भाजनं यत्र भिन्नभाण्डमथासनम् ।
योषितश्चैव हन्यन्ते कश्मलोपहते गृहे ॥ ६

देवताः पितरश्चैव उत्सवे पर्वणीषु वा ।
निराशाः प्रतिगच्छन्ति कश्मलोपहताद्गृहात् ॥ ७

अङ्गिराः—

यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके ।
सुवर्चलामूलहस्तः प्रजा तस्य विवर्धते ॥ ८

गार्ग्यः—

आतिथ्यं सततं कुर्याद् दीपं दद्यात् प्रतिश्रये ।
वर्जयानो दिवास्वापं न च मांसानि भक्षयेत् ॥ ९

गोब्राह्मणं न हिंस्याच्च पुष्कराणि च कीर्तयेत् ।
एष श्रेष्ठतमो धर्मस् सरहस्यो महाफलः ॥ १०

अपि क्रतुशतैरिष्ट्वा क्षयं गच्छति तद्धविः ।
न तु क्षीयन्ति ते धर्माश् श्रद्दधानैः प्रयोजिताः ॥ ११

इदं च परमं गुह्यं सरहस्यं निबोधत ।
श्राद्धकल्पे च दैवे च तैर्थिके पर्वणीषु च ॥ १२

रजस्वला च या नारी श्वित्रिकाऽपुत्रिका च या ।
एताभिश्चक्षुषा दृष्टं हविर्नाश्नन्ति देवताः ॥ १३

पितरश्च न तुष्यन्ति वर्षाण्यपि त्रयोदश ॥ १३॥

शुक्लवासाश्शुचिर्भूत्वा ब्राह्मणान् स्वस्ति वाचयेत् ।
कीर्तयेद्भारतं चैव तथा स्यादक्षयं हविः ॥ १४॥

धौम्यः—

भिन्नभाण्डं च खट्वां च कुक्कुटं शुनकं तथा ।
अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः ॥ १५॥

भिन्नभाण्डे कलिं प्राहुः खट्वायां तु धनक्षयः ।
कुक्कुटे शुनके चैव हविर्नाश्नन्ति देवताः ॥ १६॥

वृक्षमूले ध्रुवं सत्त्वं तस्माद्वृक्षं न रोपयेत् ॥ १७

जमदग्निः—

यो यजेदश्वमेधेन वाजपेयशतेन ह ।
अवाक्शिरा वा लम्बेत सत्रं वा स्फीतमाहरेत् ॥ १८

न यस्य हृदयं शुद्धं नरकं स ध्रुवं व्रजेत् ।
तुल्यं यज्ञश्च सत्यं च हृदयस्य च शुद्धता ॥ १९

शुद्धेन मनसा दत्त्वा सक्तुप्रस्थं द्विजातये ।
ब्रह्मलोकमनुप्राप्तः पर्याप्तं तन्निदर्शनम् ॥ २०

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

॥ कुम्भघोणपुस्तके - एकनवत्यधिकशततमोऽध्यायः ॥

॥ पूनाचित्रशालापुस्तके - अष्टाविंशत्यधिकशततमोऽध्यायः ॥

वायुना धर्मरहस्यकथनम् ॥

वायुः—

किञ्चिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास् ताञ् शृणुध्वं समाहिताः ॥ १
अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम् ।
दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः ॥ २
एतेन विधिना मर्त्यश् श्रद्धानस्समाहितः ।
चतुरो वार्षिकान् मासान् यो ददाति तिलोदकम् ॥ ३
भोजनं च यथाशक्त्या ब्राह्मणे देवपारगे ।
पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् ॥ ४
इदं चैवापरं गुह्यम् अप्रशस्तं निबोधत ॥ ४॥
अग्नेस्तु वृषलो नेता हविर्मूढाश्च योषितः ।
मन्यते धर्म एवेति स चाधर्मेण लिप्यते ॥ ५॥
अग्नयस्तस्य कुप्यन्ति शूद्रयोनिं स गच्छति ।

पितरश्च न तुष्यन्ति सहदेवैर्विशेषतः ॥ ६॥

प्रायश्चित्तं तु यत्तत्र ब्रुवतस्तन्निबोध मे ।
यत् कृत्वा तु नरस्सम्यक् सुखी भवति विज्वरः ॥ ७॥

गवां मूत्रपुरीषेण पयसा च घृतेन च ।
अग्निकार्यं त्र्यहं कुर्यान्निराहारस्समाहितः ॥ ८॥

ततस्संवत्सरे पूर्णे प्रतिगृह्णन्ति देवताः ।
हृष्यन्ति पितरश्चास्य श्राद्धकाल उपस्थिते ॥ ९॥

एष ह्यधर्मो धर्मश्च सरहस्यः प्रकीर्तितः ।
मर्त्यानां स्वर्गकामानां प्रेत्य स्वर्गसुखावहः ॥ १०॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥
[ अस्मिन्नध्याये १०॥ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके - द्विनवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - त्रिंशदधिकशततमोऽध्यायः ॥

लोमशेन धर्मरहस्यकथनम् ॥

लोमशः—

परदारेषु ये सक्ता अकृत्वा दारसङ्ग्रहम् ।
निराशाः पितरस्तेषां श्राद्धकाले भवन्ति वै ॥ १

परदाररतिर्यश्च यश्च वन्ध्यामुपासते ।
ब्रह्मस्वं हरते यश्च समदोषा भवन्ति ते ॥ २

असम्भाष्या भवन्त्येते पितॄणां नात्र संशयः ।
देवताः पितरश्चैषां नाभिनन्दन्ति तद्धविः ॥ ३

तस्मात् परस्य वै दारांस् त्यजेद्वन्ध्यां च योषितम् ।
ब्रह्मस्वं हि न हर्तव्यम् आत्मनो हितमिच्छता ॥ ४

श्रूयतां चापरं गुह्यं रहस्यं धर्मसंहितम् ।
श्रद्दधानेन कर्तव्यं गुरूणां वचनं सदा ॥ ५

द्वादश्यां पौर्णमास्यां च मासि मासि घृताक्षतम् ।
ब्राह्मणेभ्यः प्रयच्छेत तस्य पुण्यं निबोधत ॥ ६

सोमश्च वर्तते तेन समुद्रश्च महोदधिः ।
अश्वमेधचतुर्भागं फलं सृजति वासवः ॥ ७

दानेनैतेन तेजस्वी वीर्यवांश्च भवेन्नरः ।
प्रीतश्च भगवान् सोम इष्टान् कामान् प्रयच्छति ॥ ८

श्रूयतां चापरो धर्मस् सरहस्यो महाफलः ।
इदं कलियुगं प्राप्य मनुष्याणां सुखावहः ॥ ९

कल्यमुत्थाय यो मर्त्यस् स्नातश्शुक्लेन वाससा ।
तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यस्समाहितः ॥ १०

तिलोदकं च यो दद्यात् पितॄणां मधुना सह ।
दीपकं कृसरं चैव श्रूयतां तस्य यत् फलम् ॥ ११

तिलपात्रे फलं प्राह भगवान् पाकशासनः ।
गोप्रदानं च यः कुर्याद् भूमिदानं च शाश्वतम् ॥ १२

अग्निष्टोमं च यो यज्ञं यजेत बहुदक्षिणम् ।
तिलपात्रं सहैतेन समं मन्यन्ति देवताः ॥ १३

तिलोदकं सदा श्राद्धे मन्यन्ते पितरोऽक्षयम् ।
दीपे च कृसरे चैव तुष्यन्तेऽस्य पितामहाः ॥ १४

स्वर्गे च पितृलोके च पितृदेवाभिपूजितम् ।
एवमेतन्मयोद्दिष्टम् ऋषिदृष्टं पुरातनम् ॥ १५

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके - त्रिनवत्यधिकशततमोऽध्यायः ॥



## ॥ पूनाचित्रशालापुस्तके - एकविंशत्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रत्यरुन्धतीचित्रगुप्तोदितधर्मरहस्यकथनम् ॥

भीष्मः—

ततस्त्वृषिगणास्सर्वे पितरश्च सदेवताः ।
अरुन्धतीं तपोवृद्धाम् अपृच्छन्त समाहिताः ॥ १
समानशीलां वीर्येण वसिष्ठस्य महात्मनः ॥ १॥

ऋष्यादयः—

त्वत्तो धर्मरहस्यानि श्रोतुमिच्छामहे वयम् ।
यत्ते गुह्यतमं भद्रे तत् प्रभाषितुमर्हसि ॥ २॥

अरुन्धती—

तपोवृद्धिर्मया प्राप्ता भवतां स्मरणेन वै ।
भवतां च प्रसादेन धर्मान् वक्ष्यामि शाश्वतान् ॥ ३॥
सगुह्यान् सरहस्यांश्च ताञ् शृणुध्वमशेषतः ।
श्रद्दधाने प्रयोक्तव्या यस्य शुद्धं तथा मनः ॥ ४॥
अश्रद्दधानो मानी च ब्रह्महा गुरुतल्पगः ।
असम्भाष्या हि चत्वारो नैषां धर्मं प्रकाशयेत् ॥ ५॥
अहन्यहनि यो दद्यात् कपिलां द्वादशीस्समाः ।

मासि मासि च सत्रेण यो यजेत सदा नरः ॥ ६॥

गवां शतसहस्रं च यो दद्याज्ज्येष्ठपुष्करे ।
न तद्धर्मफलं तुल्यम् अतिथिर्यस्य तुष्यति ॥ ७॥

श्रूयतां चापरो धर्मो मनुष्याणां सुखावहः ।
श्रद्दधानेन कर्तव्यस् सरहस्यो महाफलः ॥ ८॥

कल्यमुत्थाय गोमध्ये गृह्य दर्भान् सहोदकान् ।
निषिञ्चेत गवां शृङ्गे मस्तकेन च तज्जलम् ॥ ९॥

प्रतीच्छेत निराहारस् तस्य धर्मफलं शृणु ॥ १०

श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु कानिचित् ।
सिद्धचारणजुष्टानि सेवितानि महर्षिभिः ॥ ११

अभिषेकस्समस्तेषां गवां शृङ्गोदकस्य च ॥ ११॥

भीष्मः—

साधु साध्विति चोदिष्टं दैवतैः पितृभिस्तथा ।
भूतैश्चैव सुसंहृष्टैः पूजिता साप्यरुन्धती ॥ १२॥

पितामहः—

अहो धर्मो महाभागे सरहस्य उदाहृतः ।
वरं ददामि ते धन्ये तपस्ते वर्धतां सदा ॥ १३॥

यमः—

रमणीया कथा दिव्या युष्मत्तो या मया श्रुता ।
श्रूयतां चित्रगुप्तस्य भाषितं मम च प्रियम् ॥ १४॥

रहस्यं धर्मसंयुक्तं शक्यं श्रोतुं महर्षिभिः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ॥ १५॥
न हि पुण्यं तथा पापं कृतं किञ्चिद् विनश्यति ।
पर्वकाले च यत् किञ्चिद् आदित्यं चाधितिष्ठति ॥ १६॥
प्रेतलोकं गते मर्त्ये तत्तत् सर्वं विभावसुः ।
प्रतिजानाति पुण्यात्मा तच्च तत्रोपयुज्यते ॥ १७॥
किञ्चिद्धर्मं प्रवक्ष्यामि चित्रगुप्तमतं शुभम् ॥ १८
पानीयं चैव दीपं च दातव्यं सततं तथा ।
उपानहौ च च्छत्रं च कपिला च यथातथम् ॥ १९
पुष्करे कपिला देया ब्राह्मणे वेदपारगे ।
अग्निहोत्रं च यत्नेन सर्वशः प्रतिपालयेत् ॥ २०
अयं चैवापरो धर्मश् चित्रगुप्तेन भाषितः ।
फलमस्य पृथक्त्वेन श्रोतुमर्हन्ति सत्तमाः ॥ २१
प्रलयं सर्वभूतैस्तु गन्तव्यं कालपर्ययात् ॥ २१॥
तत्र दुर्गमनुप्राप्ताः क्षुत्तृष्णापरिपीडिताः ।
दह्यमाना विपच्यन्ते न तत्रास्ति पलायनम् ॥ २२॥
अन्धकारं तमो घोरं प्रविशन्त्यल्पबुद्धयः ।
तत्र धर्मं प्रवक्ष्यामि येन दुर्गाणि सन्तरेत् ॥ २३॥
अल्पव्ययं महार्थं च प्रेत्य चैव सुखोदयम् ।

पानीयस्य गुणा दिव्याः प्रेतलोके विशेषतः ॥ २४॥

तत्र पुण्योदका नाम नदी तेषां विधीयते ।
अक्षयं सलिलं तत्र शीतलं ह्यमृतोपमम् ॥ २५॥

स तत्र तोयं पिबति पानीयं यः प्रयच्छति ॥ २६

प्रदीपस्य प्रदानेन श्रूयतां गुणविस्तरः ।
तमोन्धकारं नियतं दीपदो न प्रपश्यति ॥ २७

प्रभां चास्य प्रयच्छन्ति सोमभास्करपावकाः ।
देवताश्चानुमन्यन्ते विमलास्सर्वतो दिशः ॥ २८

द्योतते च यथाऽऽदित्यः प्रेतलोकगतो नरः ।
तस्माद्दीपः प्रदातव्यः पानीयं च विशेषतः ॥ २९

कपिलां ये प्रयच्छन्ति ब्राह्मणे वेदपारगे ।
पुष्करे च विशेषेण श्रूयतां तस्य यत् फलम् ॥ ३०

गोशतं सवृषं तेन दत्तं भवति शाश्वतम् ॥ ३०॥

पापं कर्म च यत् किञ्चिद् ब्रह्महत्यासमं भवेत् ।
शोधयेत् कपिला ह्येका प्रदत्तं गोशतं यथा ॥ ३१॥

तस्मात्तु कपिला देया कौमुद्यां ज्येष्ठपुष्करे ।
न तेषां विषमं किञ्चिन्न दुःखं न च कण्टकाः ॥ ३२॥

उपानहौ च यो दद्यात् पात्रभूते द्विजोत्तमे ।
छत्रदाने सुखां छायां लभते परलोकगः ॥ ३३॥

न हि दत्तस्य दानस्य नाशोऽस्तीह कदाचन ॥ ३४

भीष्मः—

चित्रगुप्तमतं श्रुत्वा हृष्टरोमा विभावसुः ।
उवाच देवतास्सर्वाः पितॄंश्चैव महाद्युतिः ॥ ३५

विभावसुः—

श्रुतं हि चित्रगुप्तस्य धर्मगुह्यं महात्मनः ॥ ३५॥

श्रद्दधानाश्च ये मर्त्या ब्राह्मणेषु महात्मसु ।
दानमेतत् प्रयच्छन्ति न तेषां विद्यते भयम् ॥ ३६॥

धर्मदोषास्त्विमे पञ्च येषां नास्तीह निष्कृतिः ।
असम्भाष्या अनाचारा वर्जनीया नराधमाः ॥ ३७॥

ब्रह्महा चैव गोघ्नश्च परदाररतश्च यः ।
अश्रद्दधानश्च नरस् स्त्रियं यश्चोपजीवति ॥ ३८॥

प्रेतलोकगता ह्येते नरके पापकर्मिणः ।
पच्यन्ते वै यथा मीनाः पूयशोणितभोजनाः ॥ ३९॥

असम्भाष्याः पितॄणां च देवानां चैव पञ्च ते ।
स्नातकानां च विप्राणां ये चान्ये च तपोधनाः ॥ ४०॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥
[अस्मिन्नध्याये ४०॥ श्लोकाः]

---

## ॥ कुम्भघोणपुस्तके - चतुर्नवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - एकत्रिंशदधिकशततमोऽध्यायः ॥

प्रमथैर्ऋषिगणान् प्रति प्रजानां स्वहिंसातदभावकारणाभिधानम् ॥

भीष्मः—

ततस्सर्वे महाभागा देवाश्च पितरश्च ह ।
ऋषयश्च महाभागाः प्रमथान् वाक्यमब्रुवन् ॥ १

देवर्षिपितरः—

भवन्तो वै महाभागा अपरोक्षनिशाचराः ।
उच्छिष्टानशुचीन् क्षुद्रान् कथं हिंसथ मानवान् ॥ २

के च स्मृताः प्रतीघाता येन मर्त्यान् न हिंसथ ।
रक्षोघ्नानि च कानि स्युर् यैर्गृहेषु प्रणश्यथ ॥ ३
श्रोतुमिच्छाम युष्माकं सर्वमेतन्निशाचराः ॥ ३॥

प्रमथाः—

मैथुनेन सदोच्छिष्टाः कृते चैवाधरोत्तरे ।
मोहान्मांसानि खादेत वृक्षमूले च यस्स्वपेत् ॥ ४॥

आमिषं शीर्षतो यस्य पादतो यश्च संविशेत् ।
तत उच्छिष्टकास्सर्वे बहुच्छिद्राश्च मानवाः ॥ ५॥

उदके चाप्यमेध्यानि श्लेष्माणं च प्रमुञ्चति ।
एते भक्ष्याश्च वध्याश्च मानुषा नात्र संशयः ॥ ६॥
एवंशीलसमाचारान् धर्षयामो हि मानवान् ॥ ७
श्रूयतां च प्रतीघातान् यैर्न शक्नुम हिंसितुम् ॥ ७॥
गोरोचनासमालम्भो वचाहस्तश्च यो भवेत् ।
घृताक्षतं च यो दद्यान्मस्तके तत्परायणः ॥ ८॥
ये च मांसं न खादन्ति तान् न शक्नुम हिंसितुम् ॥ ९
यस्य चाग्निर्गृहे नित्यं दिवारात्रौ च दीप्यते ॥ ९॥
तरक्षोश्चर्मदंष्ट्राश्च तथैव गिरिकच्छपः ।
आज्यधूमो बिडालश्च च्छागः कृष्णोऽथ पिङ्गलः ॥ १०॥
येषामेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम् ।
तान्यधृष्याण्यगाराणि पिशिताशैस्सुदारुणैः ॥ ११॥
लोकानस्मद्विधा ये च विचरन्ति यथासुखम् ॥ १२
तस्मादेतानि गेहेषु रक्षोघ्नानि विशां पते ।
एतद्वः कथितं सर्वं यत्र वस्संशयो महान् ॥ १३

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥
[अस्मिन्नध्याये १३ श्लोकाः]

## ॥ कुम्भघोणपुस्तके - पञ्चनवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - द्वात्रिंशदधिकशततमोऽध्यायः ॥

रेणुकनामकेन करेणुना देवादीन् प्रति दिग्गजगदितधर्मनिवेदनम् ॥

भीष्मः—

ततः पद्मप्रतीकाशः पद्मोद्भूतः पितामहः ।
उवाच वचनं देवान् वासवं च शचीपतिम् ॥ १

पितामहः—

अयं महाबलो नागो रसातलचरो बली ।
तेजस्वी रेणुको नाम महासत्त्वपराक्रमः ॥ २

अतितेजस्विनस्सर्वे महावीर्या महागजाः ।
धारयन्ति महीं कृत्स्नां सशैलवनकाननाम् ॥ ३

भवद्भिस्समनुज्ञातो रेणुकस्तान् महागजान् ।
धर्मगुह्यानि सर्वाणि गत्वा पृच्छतु तत्र वै ॥ ४

भीष्मः—

पितामहवचश्श्रुत्वा ते देवा रेणुकं तथा ।
प्रेषयामासुरव्यग्रा यत्र ते धरणीधराः ॥ ५

रेणुकः—

अनुज्ञातोऽस्मि देवैश्च पितृभिश्च महाबलाः ।
धर्मगुह्यानि युष्माकं श्रोतुमिच्छामि तत्त्वतः ॥ ६

कथयध्वं महाभागा यद्वस्तत्त्वं मनीषितम् ॥ ६॥

दिग्गजाः—

कार्तिके मासि चाश्लेषा बहुलस्याष्टमी शिवा ।
तेन नक्षत्रयोगेन यो ददाति गुडौदनम् ॥ ७॥

इमं मन्त्रं जपञ्छ्राद्धे यताहारो ह्यकोपनः ॥ ८

बलदेवप्रभृतयो ये नागा बलवत्तराः ।
अनन्ता ह्यक्षया नित्यं भोगिनस्सुमहाबलाः ॥ ९

तेषां कुलोद्भवा ये च महाभूता भुजङ्गमाः ।
ते मे बलिं प्रयच्छन्तु बलतेजोभिवृद्धये ॥ १०

यदा नारायणश्श्रीमान् उज्जहार वसुन्धराम् ।
तद्बलं तस्य देवस्य धरामुद्धरतस्तथा ॥ ११

एवमुक्त्वा बलिं तत्र वल्मीके तु निवेदयेत् ॥ ११॥

गजेन्द्र कुसुमाकीर्णं नीलवस्त्रानुलेपनम् ।
निर्वपेत्तं तु वल्मीके अस्तं याते दिवाकरे ॥ १२॥

एवं तुष्टास्ततस्सर्वे अधस्ताद्भारपीडिताः ।
श्रमं तं नावबुध्यामो धारयन्तो वसुन्धराम् ॥ १३॥

एवं मन्यामहे सर्वे भारार्ता निरपेक्षिणः ॥ १४

ब्राह्मणः क्षत्रियो वैश्यश्शूद्रो वा ह्युपोषितः ।
एवं संवत्सरं कृत्वा दानं बहुफलं लभेत् ॥ १५

वल्मीके बलिमादाय तन्नो बहुफलं मतम् ॥ १५॥

ये च नागा महावीर्यास् त्रिषु लोकेषु कृत्स्नशः ।
कृतातिथ्या भवेयुस्ते शतं वर्षाणि तत्त्वतः ॥ १६॥

भीष्मः—

दिग्गजानां च तच्छ्रुत्वा देवताः पितरस्तथा ।
ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकम् ॥ १७॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
[ अस्मिन्नध्याये १७ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके - षण्णवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

महेश्वरेण देवादीन् प्रति गोप्रशंसनम् ॥

---

श्रीमहेश्वरः—

सारमुद्धृत्य युष्माभिस् साधुधर्म उदाहृतः ।
धर्मगुह्यमिदं मत्तश् शृणुध्वं सर्व एव ह ॥ १

येषां धर्माश्रिता बुद्धिश् श्रद्दधानाश्च ये नराः ।
तेषां स्यादुपदेष्टव्यस् सरहस्यो महाफलः ॥ २

निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम् ।

एकभक्तं तथाऽश्नीयाच्छ्रूयतां तस्य यत् फलम् ॥ ३

इमा गावो महाभागाः पवित्रं परमं स्मृताः ।
त्रीन् लोकान् धारयन्ति स्म सदेवासुरमानुषान् ॥ ४

तासु चैव महापुण्यं शुश्रूषा च महाफलम् ।
अहन्यहनि धर्मेण युज्यते वै गवाह्निकः ॥ ५

मया ह्येता ह्यनुज्ञाताः पूर्वमासन् कृते युगे ।
ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ॥ ६

तस्माद्व्रजस्थानगतस् तिष्ठत्युपरि मे वृषः ।
रमेऽहं सह गोभिश्च तस्मात् पूज्यास्सदैव ताः ॥ ७

महाप्रभावा वरदा वरं दद्युरुपासिताः ।
ता गावोऽस्यानुमन्यन्ते सर्वकर्मसु यत् फलम् ॥ ८

तस्य तत्र चतुर्भागो यो ददाति गवाह्निकम् ॥ ८॥

इतिश्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥
[ अस्मिन्नध्याये ८॥ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके - सप्तनवत्यधिकशततमोऽध्यायः ॥

---

## ॥ पूनाचित्रशालापुस्तके - चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

---

स्कन्देन देवादीन् प्रति धर्मरहस्यविशेषकथनम् ॥

---

स्कन्दः—

ममाप्यनुमतो धर्मस् तं शृणुध्वं समाहिताः ॥ ॥

नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकां तु यः ।
अभिषेकं त्र्यहं कुर्यात् तस्य धर्मं निबोधत ॥ १॥
शोधयेदशुभं सर्वम् आधिपत्यं परत्र च ॥ २

यावच्च जायते मर्त्यस् तावच्छूरो भविष्यति ।
इदं चाप्यपरं गुह्यं सरहस्यं निबोधत ॥ ३

प्रगृह्यौदुम्बरं पात्रं पक्वान्नं मधुना सह ।
सोमस्योत्तिष्ठमानस्य पौर्णमास्यां बलिं हरेत् ॥ ४

तस्य धर्मफलं नित्यं श्रद्दधाना निबोधत ॥ ४॥

साध्या रुद्रास्तथाऽऽदित्या विश्वे देवास्तथाऽश्विनौ ।
मरुतो वसवश्चैव प्रतिगृह्णन्ति तं बलिम् ॥ ५॥

सोमश्च वर्धते तेन समुद्रश्च महोदधिः ॥ ६

एष धर्मो मयोद्दिष्टस् सरहस्यस्सुखावहः ॥ ६॥

विष्णुः—

धर्मगुह्यानि सर्वाणि देवतानां महात्मनाम् ।
ऋषीणां चैव गुह्यानि यः पठेदाह्निकं सदा ॥ ७॥

शृणुयाद्वाऽनसूयुर्यश् श्रद्दधानस्समाहितः ।
नास्य विघ्नः प्रभवति भयं चास्य न विद्यते ॥ ८॥

ये च धर्माश्शुभाः पुण्यास् सरहस्या उदाहृताः ।
तेषां धर्मफलं तस्य यः पठेत जितेन्द्रियः ॥ ९॥

नास्य पापं प्रभवति न च पापेन लिप्यते ॥ १०

पठेद्वा श्रावयेद्वाऽपि श्रुत्वा वा लभते फलम् ।
भुञ्जते पितरो देवा हव्यं कव्यमथाक्षयम् ॥ ११

श्रावयंश्चापि विप्रेन्द्रान् पर्वसु प्रयतो नरः ॥ ११॥

ऋषीणां देवतानां च पितॄणां चैव नित्यदा ।
भवत्यभिमतश्श्रीमान् धर्मेषु प्रयतस्सदा ॥ १२॥

कृत्वाऽपि पापकं कर्म महापातकवर्जितम् ।
रहस्यधर्मं श्रुत्वेमं सर्वपापैः प्रमुच्यते ॥ १३॥

भीष्मः—

एतद्धर्मरहस्यं वै देवतानां नराधिप ।
व्यासोदिष्टं मया प्रोक्तं सर्वदेवनमस्कृतम् ॥ १४॥

पृथिवी रत्नसम्पूर्णा ज्ञानं चेदमनुत्तमम् ।

इदमेव ततश्श्राव्यम् इति मन्येत धर्मवित् ॥ १५॥

नाश्रद्दधानाय न नास्तिकाय
न नष्टधर्माय न निर्घृणाय ।
न हेतुदुष्टाय गुरुद्विषे वा
नानात्मभूताय निवेद्यमेतत् ॥ १६॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥
[ अस्मिन्नध्याये १६॥ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके - अष्टनवत्यधिकशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भोज्याभोज्यान्नकानां भोजनीयानां जनानां च विवेचनम् ॥

---

युधिष्ठिरः—

के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य ह ।
तथा वैश्यस्य के भोज्याः के शूद्रस्य च भारत ॥ १

भीष्मः—

ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः ।
वैश्याश्चापि तथा भोज्याश् शूद्राश्च परिवर्जिताः ॥ २

ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य ह ।
वर्जनीयास्तु वै शूद्रास् सर्वभक्षा विकर्मिणः ॥ ३

वैश्यास्तु भोज्या विप्राणां क्षत्रियाणां तथैव च ।
नित्याग्नयो विविक्ताश्च चातुर्मास्यरताश्च ये ॥ ४

शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च ॥ ५

शूद्राणां यस्तथा भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
पृथिवीमलमश्नन्ति ये द्विजाश्शूद्रभोजिनः ॥ ६

शूद्रस्य कर्मनिष्ठायां विकर्मस्थोऽपि पच्यते ।
ब्राह्मणः क्षत्रियो वैश्यो विकर्मस्थश्च पच्यते ॥ ७

स्वाध्यायनिरता विप्रास् तथा स्वस्त्ययने नृणाम् ।
रक्षणे क्षत्रियं प्राहुर् वैश्यं पुष्ट्यर्थमेव च ॥ ८

करोति कर्म यद्वैश्यस् तद्गत्वा ह्युपजीवति ।
कृषिगोरक्ष्यवाणिज्यम् अकुत्सा वैश्यकर्मणि ॥ ९

शूद्रकर्म तु यः कुर्याद् अपहाय स्वकर्म च ।
स विज्ञेयो यथा शूद्रो न च भोज्यः कदाचन ॥ १०

चिकित्सकः काण्डपृष्ठः पुराध्यक्षः पुरोहितः ।
सांवत्सरो वृथाध्यायी सर्वे ते शूद्रसम्मिताः ॥ ११

शूद्रकर्मस्वथैतेषु यो भुङ्क्ते निरपत्रपः ।

अभोज्यभोजनं भुक्त्वा भयं प्राप्नोति दारुणम् ॥ १२
कुलं वीर्यं च तेजश्च तिर्यग्योनित्वमेव च ।
स प्रयाति यथा श्वा वै निष्क्रियो धर्मवर्जितः ॥ १३
भुङ्क्ते चिकित्सकस्यान्नं तदन्नं च पुरीषवत् ।
पुंश्चल्यन्नं च मूत्रं स्यात् कारुकान्नं च शोणितम् ॥ १४
विद्योपजीविनोऽन्नं च यो भुङ्क्ते साधुसम्मतः ।
तदप्यन्नं यथा शौद्रं तत् साधुः परिवर्जयेत् ॥ १५
वचनीयस्य यो भुङ्क्ते तमाहुरशोणितं ह्रदम् ।
पिशुनं भोजनं भुङ्क्ते ब्रह्महत्यासमं विदुः ॥ १६
असत्कृतमवज्ञातं न भोक्तव्यं कदाचन ।
व्याधिं कुलक्षयं चैव क्षिप्रं प्राप्नोति ब्राह्मणः ॥ १७
नगरीरक्षिणो भुङ्क्ते श्वपचप्रवणो भवेत् ॥ १७॥
गोघ्ने च ब्राह्मणघ्ने च सुरापे गुरुतल्पगे ।
भुक्त्वाऽन्नं जायते विप्रो रक्षसां कुलवर्धनः ॥ १८॥
न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीववर्तिनि ।
जायते शबरावासे मध्यदेशबहिष्कृते ॥ १९॥
अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि ।
किमन्यदद्य कौन्तेय मत्तस्त्वं श्रोतुमिच्छसि ॥ २०॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥
[ अस्मिन्नध्याये २०॥ श्लोकाः ]

---

॥ कुम्भघोणपुस्तके - एकोनद्विशततमोऽध्यायः ॥

॥ पूनाचित्रशालापुस्तके - षट्त्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति अप्रतिग्राह्यप्रतिग्रहे अभोज्यभोजने च प्रायश्चित्तकथनम् ॥

युधिष्ठिरः—

उक्तास्तु भवता भोज्यास् तथाऽभोज्याश्च सर्वशः ।
अत्र मे प्रश्नसन्देहस् तन्मे वद पितामह ॥ १

ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे ।
नानाविधेषु भोज्येषु प्रायश्चित्तानि शंस मे ॥ २

भीष्मः—

हन्त वक्ष्यामि ते राजन् ब्राह्मणानां महात्मनाम् ।
प्रतिग्रहेषु भोज्ये च मुच्यते येन पाप्मनः ॥ ३

घृतप्रतिग्रहे चैव सावित्रीसमिदाहुतिः ।
तिलप्रतिग्रहे चैव सममेतद्युधिष्ठिर ॥ ४

मांसप्रतिग्रहे चैव मधुनो लवणस्य च ।
आदित्योदयनं स्थित्वा पूतो भवति ब्राह्मणः ॥ ५

काञ्चनं प्रतिगृह्याथ जपमानो गुरुश्रुतिम् ।

कृष्णायसं च विवृतं धारयन् मुच्यते द्विजः ॥ ६

एवं प्रतिगृहीतेऽथ धने वस्त्रे तथा स्त्रियाम् ।
एवमेव नरश्रेष्ठ सुवर्णस्य प्रतिग्रहे ॥ ७

अन्नप्रतिग्रहे चैव पायसेक्षुरसे तथा ।
इक्षुतैलपवित्राणां त्रिसन्ध्येऽप्सु निमज्जनम् ॥ ८

व्रीहौ पुष्पे फले चैव जले पिष्टमये तथा ।
यावके दधिदुग्धे च सावित्रीं शतशोऽन्विताम् ॥ ९

उपानहौ च च्छत्रं च प्रतिगृह्यौर्ध्वदेहिके ।
जपेच्छतं समायुक्तस् तेन मुच्येत पाप्मना ॥ १०

क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा ।
त्रीणि रात्राण्युपोषित्वा तेन पापाद्विमुच्यते ॥ ११

कृष्णपक्षे तु यश्श्राद्धं पितृणामश्नुते द्विजः ।
अन्नमेतदहोरात्रात् पूतो भवति ब्राह्मणः ॥ १२

न च सन्ध्यामुपासीत न च जप्यं प्रवर्तयेत् ।
न सङ्किरेत्तदन्नं च ततः पूयेत ब्राह्मणः ॥ १३

इत्यर्थमपराह्णे तु पितृणां श्राद्धमुच्यते ।
यथोक्तानां यदश्नीयुर् ब्राह्मणाः पूर्वकेतिताः ॥ १४

मृतकस्य तृतीयाहे ब्राह्मणो योऽन्नमश्नुते ।

स त्रिवेलं समुन्मज्ज्य द्वादशाहेन शुध्यति ॥ १५

द्वादशाहे व्यतीते तु कृतशौचो विशेषतः ।
ब्राह्मणेभ्यो हविर्दत्त्वा मुच्यते तेन पाप्मना ॥ १६

मृतस्य दशरात्रेण प्रायश्चित्तानि दापयेत् ।
सावित्रीं रैवतीमिष्टिं कूश्माण्डमघमर्षणम् ॥ १७

मृतकस्य त्रिरात्रे यस् समुद्दिष्टे समश्नुते ।
सप्तत्रिषवणं स्नात्वा पूतो भवति ब्राह्मणः ॥ १८

सिद्धिमाप्नोति विपुलाम् आपदं चैव नाप्नुयात् ॥ १८॥

यस्तु शूद्रैस्समश्नीयाद् ब्राह्मणोऽप्येकभोजने ।
अशौचं विधिवत्तस्य शौचमत्र विधीयते ॥ १९॥

यस्तु वैश्यैस्सहाश्नीयाद् ब्राह्मणोऽप्येकभोजने ।
स वै त्रिरात्रं दीक्षित्वा मुच्यते तेन कर्मणा ॥ २०॥

क्षत्रियैस्सह योऽश्नीयाद् ब्राह्मणोऽप्येकभोजने ।
आप्लुतस्सह वासोभिस् तेन मुच्येत पाप्मना ॥ २१॥

शूद्रस्य तु कुलं हन्ति वैश्यस्य पशुबान्धवान् ।
क्षत्रियस्य श्रियं हन्ति ब्राह्मणस्य सुवर्चसम् ॥ २२॥

प्रायश्चित्तं च शान्तिं च जुहुयात्तेन मुच्यते ।
सावित्रीं रैवतीमिष्टिं कूश्माण्डमघमर्षणम् ॥ २३॥

तथोच्छिष्टमथान्योन्यं सम्प्राशेन्नात्र संशयः ।
रोचना विरजाऽऽरात्रिर् मङ्गलालम्भनानि च ॥ २४॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥
[ अस्मिन्नध्याये २४॥ श्लोकाः ]

---

## ॥ कुम्भघोणपुस्तके - द्विशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - सप्तत्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दृष्टान्तप्रदर्शनपूर्वकं दानप्रशंसनम् ॥

---

युधिष्ठिरः—

दानेन वर्ततेत्याह तपसा चैव भारत ।
तदेतन्मे मनोदुःखं व्यपोह त्वं पितामह ॥ १
किंस्वित् पृथिव्यां ह्येतन्मे भवाञ् शंसितुमर्हति ॥ १॥

भीष्मः—

शृणु यैर्धर्मनिरतैस् तपसा भावितात्मभिः ।
लोका ह्यसंशयं प्राप्ता दानपुण्यरतैर्नृपैः ॥ २॥

सत्कृतश्च तथाऽऽत्रेयश् शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य सदा राजन् गतो लोकाननुत्तमान् ॥ ३॥

शिबिरौशीनरः प्राणान् प्रियस्य तनयस्य च ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ ४॥

प्रतर्दनः काशिपतिः प्रदाय तनयं स्वकम् ।
ब्राह्मणायातुलां कीर्तिम् इह चामुत्र चाश्नुते ॥ ५॥

रन्तिदेवश्च साङ्कृत्यो वसिष्ठाय महात्मने ।
अर्घ्यं प्रदाय विधिवल्लेभे लोकाननुत्तमान् ॥ ६॥

दिव्यं शतशलाकं च यज्ञार्थं काञ्चनं शुभम् ।
छत्रं देवावृधो दत्त्वा ब्राह्मणायास्थितो दिवम् ॥ ७॥

भगवानम्बरीषश्च ब्राह्मणायामितौजसे ।
प्रदाय सकलं राष्ट्रं सुरलोकमवाप्तवान् ॥ ८॥

सावित्रः कुण्डलं दिव्यं यानं च जनमेजयः ।
ब्राह्मणाय च गा दत्त्वा गतो लोकाननुत्तमान् ॥ ९॥

वृषादर्भिश्च राजर्षी रत्नानि विविधानि च ।
रम्यांश्चावसथान् दत्त्वा द्विजेभ्यो दिवमागतः ॥ १०॥

निमी राष्ट्रं च वैदर्भिः कन्यां दत्त्वा महात्मने ।
अगस्त्याय गतस्स्वर्गं सपुत्रपशुबान्धवः ॥ ११॥

जामदग्न्यश्च विप्राय भूमिं दत्त्वा महायशाः ।
रामोऽक्षयांस्तथा लोकाञ्र जगाम मनसोऽधिकान् ॥ १२॥

अवर्षति च पर्जन्ये सर्वभूतानि देवराट् ।

वसिष्ठो जीवयामास येन यातोऽक्षयां गतिम् ॥ १३॥

रामो दाशरथिश्चैव हुत्वा यज्ञेषु वै वसु ।
स गतो ह्यक्षयाँल्लोकान् यस्य लोके महद्यशः ॥ १४॥

कक्षसेनश्च राजर्षिर् वसिष्ठाय महात्मने ।
न्यासं यथावत् संन्यस्य जगाम सुमहायशः ॥ १५॥

करन्धमस्य पौत्रस्तु मरुत्तोऽविक्षितस्सुतः ।
कन्यामाङ्गिरसे दत्त्वा दिवमाशु जगाम सः ॥ १६॥

ब्रह्मदत्तश्च पाञ्चाल्यो राजा धर्मभृतां वरः ।
निधिं शङ्खमनुज्ञाप्य जगाम परमां गतिम् ॥ १७॥

राजा मित्रसहश्चैव वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां भार्यां दत्त्वा च त्रिदिवं गतः ॥ १८॥

मनोः पुत्रश्च सुद्युम्नो लिखिताय महात्मने ।
दण्डमुद्धृत्य धर्मेण गतो लोकाननुत्तमान् ॥ १९॥

सहस्रचित्यो राजर्षिः प्राणानिष्टान् महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ २०॥

सर्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मौद्गल्याय गतस्स्वर्गं शतद्युम्नो महीपतिः ॥ २१॥

भक्ष्यभोज्यस्य च कृतान् राशयः पर्वतोपमान् ।
शाण्डिल्याय पुरा दत्त्वा सुमन्युर्दिवमास्थितः ॥ २२॥

नाम्ना च द्युतिमान् नाम सात्वराजो महाद्युतिः ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥ २३॥

मदिराश्वश्च राजर्षिर् दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान् देवैरधिष्ठितान् ॥ २४॥

लोमपादश्च राजर्षिश् शान्तां दत्त्वा सुतं प्रभुः ।
ऋश्यशृङ्गाय विपुलैस् सर्वैः कामैरयुज्यत ॥ २५॥

कौत्साय दत्त्वा कन्यां तु हंसीं नाम यशस्विनीम् ।
गतोऽक्षयानतो लोकान् राजर्षिश्च भगीरथः ॥ २६॥

दत्त्वा शतसहस्रं तु गवां राजा भगीरथः ।
सवत्सानां कोहलाय गतो लोकाननुत्तमान् ॥ २७॥

एते चान्ये च बहवो दानेन तपसा च ह ।
युधिष्ठिर गतास्स्वर्गं निवर्तन्ते पुनः पुनः ॥ २८॥

तेषां प्रतिष्ठिता कीर्तिर् यावत् स्थास्यति मेदिनी ।
गृहस्थैर्दानतपसा यैर्लोका वै विनिर्जिताः ॥ २९॥

शिष्टानां चरितं ह्येतत् कीर्तितं मे युधिष्ठिर ।
दानयज्ञप्रजासर्गैर् एते हि दिवमास्थिताः ॥ ३०॥

दत्त्वा तु सततं तेऽस्तु कौरवाणां धुरन्धर ।
दानयज्ञक्रियायुक्ता बुद्धिर्धर्मोपचायिनी ॥ ३१॥

यत्र ते नृपशार्दूल सन्देहो वै भविष्यति ।
श्वः प्रभाते हि वक्ष्यामि सन्ध्या हि समुपस्थिता ॥ ३२॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥
[अस्मिन्नध्याये ३२॥ श्लोकाः]

---

## ॥ कुम्भघोणपुस्तके एकाधिकद्विशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके अष्टात्रिंशदधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दानस्य पञ्चविधत्वकथनपूर्वकं तत्तल्लक्ष्यप्रदर्शनम् ॥

---

युधिष्ठिरः—

श्रुतं मे भवतस्तात सत्यव्रतपराक्रम ।
दानधर्मेण महता ये प्राप्तास्त्रिदिवं नृपाः ॥ १

इमांस्तु श्रोतुमिच्छामि धर्मान् धर्मभृतांवर ।
दानं कतिविधं देयं किं तस्य च फलं लभेत् ॥ २

कथं केभ्यश्च धर्म्यं च दानं दातव्यमिष्यते ।
कैः कारणैः कतिविधं श्रोतुमिच्छामि तत्त्वतः ॥ ३

भीष्मः—

शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ ।

यथा दानं प्रदातव्यं सर्ववर्णेषु भारत ॥ ४

धर्मादर्थाद्भयात् कामात् कारुण्यादिति भारत ।
दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ॥ ५

इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।
इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता ॥ ६

ददाति वा दास्यति वा मह्यं दत्तमनेन वा ।
इत्यर्थिभ्यो निशम्यैव सर्वं दातव्यमर्थिने ॥ ७

नास्याहं न मदीयोऽयं पापं कुर्याद्विमानितः ।
इति दद्याद् भयादेव दृढं मूढाय पण्डितः ॥ ८

प्रियो मेऽयं प्रियोऽस्याहम् इति सम्प्रेक्ष्य बुद्धिमान् ।
वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रितः ॥ ९

दीनश्च याचते चायम् अल्पेनापि हि तुष्यति ।
इति दद्याद् दरिद्राय कारुण्यादिति सर्वथा ॥ १०

इति पञ्चविधं दानं पुण्यकीर्तिविवर्धनम् ।
यथाशक्त्या प्रदातव्यम् एवमाह प्रजापतिः ॥ ११

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ १२१ ॥
[ अस्मिन्नध्याये ११ श्लोकाः ]

---

॥ कुम्भघोणपुस्तके - एकपञ्चाशदधिकशततमोऽध्यायः ॥

पूनाचित्रशालापुस्तके

॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

( To face P. 1271 of Vol XVII )

महेश्वरेण मुनिगणान् प्रति श्रीकृष्णस्य वंशानुक्रमवर्णनपूर्वकं गुणगणानुवर्णनम् ॥

ऋषयः—

पिनाकिन् भगनेत्रघ्न सर्वलोकनमस्कृत ।
माहात्म्यं वासुदेवस्य श्रोतुमिच्छामि शङ्कर ॥ १

ईश्वरः—

पितामहादपि वरश् शाश्वतः पुरुषो हरिः ।
कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः ॥ २

दशबाहुर्महातेजा देवतारिनिषूदनः ।
श्रीवत्साङ्को हृषीकेशस् सर्वदैवतपूजितः ॥ ३

ब्रह्मा तस्योदरभवस् तस्याहं च शिरोभवः ।
शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुरासुराः ॥ ४

ऋषयो देहसम्भूतास् तस्य लोकाश्च शाश्वताः ।
पितामहगृहं साक्षात् सर्वदेवगृहं च सः ॥ ५

सोऽस्याः पृथिव्याः कृत्स्नायास् स्रष्टा त्रिभुवनेश्वरः ।
संहर्ता चैव भूतानां स्थावरस्य चरस्य च ॥ ६

स हि देववरस्साक्षाद् देवनाथः परन्तपः ।
सर्वज्ञस्सर्वसंश्लिष्टस् सर्वगस्सर्वतोमुखः ॥ ७

परमात्मा हृषीकेशस् सर्वव्यापी महेश्वरः ।
न तस्मात् परमं भूतं त्रिषु लोकेषु किञ्चन ॥ ८

सनातनो वै मधुहा गोविन्द इति विश्रुतः ।
स सर्वान् पार्थिवान् सङ्ख्ये घातयिष्यति मानदः ॥ ९

सुरकार्यार्थमुत्पन्नो मानुषं वपुरास्थितः ।
न हि देवगणाश्शक्तास् त्रिविक्रमविनाकृताः ॥ १०

भुवने देवकार्याणि कर्तुं नायकवर्जिताः ।
नायकस्सर्वभूतानां सर्वदेवनमस्कृतः ॥ ११

एतस्य देवनाथस्य देवकार्यपरस्य च ।
ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च ॥ १२

ब्रह्मा वसति गर्भस्थश् शरीरे सुखसंस्थितः ।
शर्वस्सुखं संश्रितश्च शरीरे सुखसंस्थितः ॥ १३

सर्वास्सुखं संश्रिताश्च शरीरे तस्य देवताः ।
स देवः पुण्डरीकाक्षश् श्रीगर्भश्श्रीसहोषितः ॥ १४

शार्ङ्गचक्रायुधः खड्गी सर्वनागरिपुध्वजः ।

उत्तमेन स शीलेन दमेन च शमेन च ॥ १५

पराक्रमेण वीर्येण वपुषा दर्शनेन च ।
आरोहेण प्रमाणेन धैर्येणार्जवसम्पदा ॥ १६

आनृशंस्येन रूपेण बलेन च समन्वितः ।
अस्त्रैस्समुदितस्सर्वैर् दिव्यैरद्भुतदर्शनैः ॥ १७

योगमायस्सहस्राक्षो निरपायो महामनाः ।
वीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ॥ १८

क्षमावांश्चानहंवादी ब्रह्मण्यो ब्रह्मनायकः ।
भयहर्ता भयार्तानां मित्राणां नन्दिवर्धनः ॥ १९

शरण्यस्सर्वभूतानां दीनानां पालने रतः ।
श्रुतवानर्थसम्पन्नस् सर्वभूतनमस्कृतः ॥ २०

समाश्रितानां वरदश् शत्रूणामपि धर्मवित् ।
नीतिज्ञो नीतिसम्पन्नो ब्रह्मवादी जितेन्द्रियः ॥ २१

भवार्थमिह देवानां बुद्ध्या परमया युतः ।
प्राजापत्ये शुभे मार्गे मानवे धर्मसंस्कृते ॥ २२

समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः ।
अङ्गो नाम मनोः पुत्रो अन्तर्धामा ततः परः ॥ २३

अन्तर्धाम्नो हविर्धामा प्रजापतिरनिन्दितः ।
प्राचीनबर्हिर्भविता हविर्धाम्नस्सुतो महान् ॥ २४

तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः ।
प्राचेतसस्तथा दक्षो भवितेह प्रजापतिः ॥ २५

दाक्षायण्यास्तथाऽऽदित्यो मनुरादित्यतस्तथा ।
मनोश्च वंशज इला सुद्युम्नश्च भविष्यति ॥ २६

बुधात् पुरूरवाश्चापि तस्मादायुर्भविष्यति ।
नहुषो भविता तस्माद् ययातिस्तस्य चात्मजः ॥ २७

यदुस्तस्मान्महासत्त्वः क्रोष्टा तस्माद्भविष्यति ।
क्रोष्टुश्चैव महान् पुत्रो वृजिनीवान् भविष्यति ॥ २८

वृजिनीवतश्च भविता उषङ्गुरपराजितः ।
उषङ्गोर्भविता पुत्रश् शूरश्चित्ररथस्तथा ॥ २९

तस्य त्ववरजः पुत्रश् शूरो नाम भविष्यति ॥ २९॥

तेषां विख्यातवीर्याणां चरित्रगुणशालिनाम् ।
यज्वनां सुविशुद्धानां वंशे ब्राह्मणसम्मते ॥ ३०॥

स शूरः क्षत्रियश्रेष्ठो महावीर्यो महायशाः ।
स्ववंशविस्तरकरं जनयिष्यति मानदः ॥ ३१॥

वसुदेव इति ख्यातं पुत्रमानकदुन्दुभिम् ॥ ३२

तस्य पुत्रश्चतुर्बाहुर् वासुदेवो भविष्यति ।
दाता ब्राह्मणसत्कर्ता ब्रह्मभूतो द्विजप्रियः ॥ ३३

राज्ञो मागधसंरुद्धान् मोक्षयिष्यति यादवः ॥ ३३॥

जरासन्धं तु राजानं निर्जित्य गिरिगह्वरे ।
सर्वपार्थिवरत्नाढ्यो भविष्यति स वीर्यवान् ॥ ३४॥

पृथिव्यामप्रतिहतो वीर्येण च भविष्यति ।
विक्रमेण च सम्पन्नस् सर्वपार्थिवपार्थिवः ॥ ३५॥

शूरसेनेषु भूत्वा स द्वारकायां वसन् प्रभुः ।
पालयिष्यति गां देवीं विजित्य नयवित् सदा ॥ ३६॥

तं भवन्तस्समासाद्य वाङ्माल्यैरर्हणैर्वरैः ।
अर्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् ॥ ३७॥

यो हि मां द्रष्टुमिच्छेत ब्राह्मणं च पितामहम् ।
द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवान् ॥ ३८॥

दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ॥ ३९॥

स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ॥ ४०॥

यश्च तं मानवे लोके संश्रयिष्यति केशवम् ।
तस्य कीर्तिर्जयश्चैव स्वर्गश्चैव भविष्यति ॥ ४१॥

धर्माणां देशिकस्साक्षात् स भविष्यति धर्मभाक् ।
धर्मवद्भिस्स देवेशो नमस्कार्यस्सदोद्यतैः ॥ ४२॥

धर्म एव परो हि स्यात् तस्मिन्नभ्यर्चिते विभौ ।

स हि देवो महातेजाः प्रजाहितचिकीर्षया ॥ ४३॥

धर्मार्थं पुरुषव्याघ्र ऋषिकोटीस्ससर्ज ह ॥ ४४

तास्सृष्टास्तेन विभुना पर्वते गन्धमादने ।
सनत्कुमारप्रमुखास् तिष्ठन्ति तपसाऽन्विताः ॥ ४५

तस्मात् स वाग्मी धर्मज्ञो नमस्यो द्विजपुङ्गवाः ॥ ४५॥

दिवि श्रेष्ठो हि भगवान् हरिर्नारायणः प्रभुः ।
वन्दितो हि स वन्देत मानितो मानयीत च ॥ ४६॥

अर्हितश्चार्हयेन्नित्यं पूजितः प्रतिपूजयेत् ।
दृष्टः पश्येदहरहस् संश्रितः प्रतिसंश्रयेत् ॥ ४७॥

अर्चितश्चार्चयेन्नित्यं स देवो द्विजसत्तमाः ॥ ४८

एतत् तस्यानवद्यस्य विष्णोर्वै परमं व्रतम् ।
आदिदेवस्य महतस् सज्जनाचरितं सदा ॥ ४९

भुवनेऽभ्यर्चितो नित्यं देवैरपि सनातनः ।
अभयेनानुरूपेण युज्यन्ते तमनुव्रताः ॥ ५०

कर्मणा मनसा वाचा स नमस्यो द्विजैस्सदा ।
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ॥ ५१

एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः ।
तं दृष्ट्वा सर्वशो देवं दृष्टास्स्युस्सुरसत्तमाः ॥ ५२

महावराहं तं देवं सर्वलोकपितामहम् ।

अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ ५३

तत्र च त्रितयं दृष्टं भविष्यति न संशयः ।
समस्ता हि वयं देवास् तस्य देहे वसामहे ॥ ५४

तस्य चैवाग्रजो भ्राता सिताद्रिनिचयप्रभः ।
हली बल इति ख्यातो भविष्यति धराधरः ॥ ५५

त्रिशिरास्तस्य दिव्यश्च शातकुम्भमयो द्रुमः ।
ध्वजस्तृणेन्द्रो देवस्य भविष्यति रथाश्रितः ॥ ५६

शिरो नागैर्महाभोगैः परिकीर्णं महात्मभिः ।
भविष्यति महाबाहोस् सर्वलोकेश्वरस्य च ॥ ५७

चिन्तितानि समेष्यन्ति शस्त्राण्यस्त्राणि चैव ह ।
अनन्तश्च स एवोक्तो भगवान् हरिरव्ययः ॥ ५८

समादिष्टश्च विबुधैर् दर्शय त्वमिति प्रभो ।
सुपर्णो यस्य वीर्येण कश्यपस्यात्मजो बली ॥ ५९

अन्तं नैवाशकद्द्रष्टुं देवस्य परमात्मनः ॥ ५९॥

स च शेषो विचरते परया वै मुदा युतः ।
अन्तर्वसति भोगेन परिरभ्य वसुन्धराम् ॥ ६०॥

य एव विष्णुस्सोऽनन्तो भगवान् वसुधाधरः ।
यो रामस्स हृषीकेशो योऽच्युतस्सधराधरः ॥ ६१॥

तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्यपराक्रमौ ।
द्रष्टव्यौ माननीयौ च चक्रलाङ्गलधारिणौ ॥ ६२॥

एष वोऽनुग्रहः प्रोक्तो मया पुण्यस्तपोधनाः ।
यद्भवन्तो यदुश्रेष्ठं पूजयेयुः प्रयत्नतः ॥ ६३॥

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥
[ अस्मिन्नध्याये ६३॥ श्लोकाः ]

॥ कुम्भघोणपुस्तके - द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥

पूनाचित्रशालापुस्तके
॥ अष्टाचत्वारिंशदधिकशततमोऽध्यायः ॥

भीष्मेण हिमवद्गिरौ नारदोदितकृष्णमहिमानुवादः ॥ १ ॥ पार्थकृष्णयोर्नरनारायणात्मकत्वकथनपूर्वकं कृष्णमहिमप्रशंसनम् ॥ २ ॥

नारदः—

अथ व्योम्नि महाञ् शब्दस् सविद्युत्स्तनयित्नुमान् ।
मेघैश्च गगनं नीलं संरुद्धमभवद्घनैः ॥ १

प्रावृषीव च पर्जन्यो ववृषे निर्मलं पयः ।
तमश्चैवाभवद्घोरं दिशश्च न चकाशिरे ॥ २

ततो देवगिरौ तस्मिन् रम्ये पुण्ये सनातने ।
न शर्वं भूतसङ्घं वा ददृशुर्मुनयस्तदा ॥ ३

व्यभ्रं च गगनं सद्यः क्षणेन समपद्यत ।
तीर्थयात्रां ततो विप्रा जग्मुश्चान्ये यथागतम् ॥ ४

तदद्भुतमचिन्त्यं च दृष्ट्वा ते विस्मिता भवन् ।
शङ्करस्योमया सार्धं संवादं त्वत्कथाश्रयम् ॥ ५

स भवान् पुरुषव्याघ्र ब्रह्मभूतस्सनातनः ।

यदर्थमनुशिष्टास्स्मो गिरिपृष्ठे महात्मना ॥ ६

द्वितीयं त्वद्भुतमिदं त्वत्तेजः कृतमद्य वै ।
दृष्ट्वा च विस्मिताः कृष्ण सा च नस्स्मृतिरागता ॥ ७

एतत् ते देवदेवस्य माहात्म्यं कथितं प्रभो ।
कपर्दिनो गिरीशस्य महाबाहो जनार्दन ॥ ८

भीष्मः—

इत्युक्तस्स तदा कृष्णस् तपोवननिवासिभिः ।
मानयामास तान् सर्वान् ऋषीन् देवकिनन्दनः ॥ ९

अथर्षयस्सम्प्रहृष्टाः पुनस्ते कृष्णमब्रुवन् ॥ ९॥

श्रीभगवान्—

पुनः पुनर्दर्शयास्मान् सदैव मधुसूदन ॥ १०

न हि नस्सा रतिस्स्वर्गे या च त्वद्दर्शने विभो ।
तदृतं च महाबाहो यदाह भगवान् भवः ॥ ११

एतत् ते सर्वमाख्यातं रहस्यमरिकर्शन ।
त्वमेव ह्यर्थतत्त्वज्ञः पृष्टोऽस्मान् पृच्छसे यदा ॥ १२

तदस्माभिरिदं गुह्यं त्वत्प्रियार्थमुदाहृतम् ।
न च तेऽविदितं किञ्चित् त्रिषु लोकेषु विद्यते ॥ १३

जन्म चैव प्रसूतिश्च यच्चान्यत् कारणं विभो ।
वयं तु बहुचापल्याद् अशक्ता गुह्यधारणे ॥ १४

ततस्थिते त्वयि विभो लघुत्वात् प्रलपामहे ।
न हि किञ्चित् तदाश्चर्यं यन्न वेत्ति भवानिह ॥ १५

दिवि वा भुवि वा देव सर्वं हि विदितं तव ।
साधयाम वयं कृष्ण बुद्धिं पुष्टिमवाप्नुहि ॥ १६

पुत्रस्ते सदृशस्तात विशिष्टो वा भविष्यति ।
महाप्रभावसंयुक्तो दीप्तिकीर्तिकरः प्रभुः ॥ १७

भीष्मः—

ततः प्रणम्य देवेशं यादवं पुरुषोत्तमम् ।
प्रदक्षिणमुपावृत्य प्रजग्मुस्ते महर्षयः ॥ १८

सोऽयं नारायणश्श्रीमान् दीप्त्या परमया युतः ।
व्रतं यथावत्तच्चीर्त्वा द्वारकां पुनरागमत् ॥ १९

पूर्णे च दशमे मासि पुत्रोऽस्य परमाद्भुतः ।
रुक्मिण्यां सम्मतो जज्ञे शूरो वंशधरः प्रभो ॥ २०

स कामस्सर्वभूतानां सर्वभावगतो नृप ।
असुराणां सुराणां च चरत्यन्तर्गतस्सदा ॥ २१

सोऽयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः ।
संश्रितः पाण्डवान् प्रेम्णा भवन्तश्चैनमाश्रिताः ॥ २२

कीर्तिर्लक्ष्मीर्धृतिश्चैव स्वर्गमार्गस्तथैव च ।
यत्रैष संस्थितस्तत्र देवो विष्णुस्त्रिविक्रमः ॥ २३

सेन्द्रा देवास्त्रयस्त्रिंशद् एष नात्र विचारणा ।
आदिदेवो महादेवस् सर्वभूतप्रतिश्रयः ॥ २४

अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः ।
अयं जातो महातेजास् सुराणामर्थसिद्धये ॥ २५

सुदुस्तरार्थतत्त्वस्य वक्ता कर्ता च माधवः ।
तव पार्थ जयः कृत्स्नस् तव कीर्तिस्तथाऽतुला ॥ २६

तवेयं पृथिवी देवी कृत्स्ना नाराणाश्रयात् ।
अयं नाथस्तवाचिन्त्यो यस्य नारायणो गतिः ॥ २७

स भवांस्त्वमुपाध्वर्यू रणाग्नौ हुतवान् नृपान् ।
कृष्णस्रुवेण महता युगान्ताग्निसमेन वै ॥ २८

दुर्योधनश्च शोच्योऽसौ सपुत्रभ्रातृबान्धवः ।
कृतवान् योऽबुधः क्रोधाद्धरिगाण्डीविविग्रहम् ॥ २९

दैतेया दानवेन्द्राश्च महाकाया महाबलाः ।
चक्राग्नौ क्षयमापन्ना दावाग्नौ शलभा इव ॥ ३०

प्रतियोद्धुं न शक्यो हि मानुषैरेष संयुगे ।
विहीनैः पुरुषव्याघ्र सत्त्वशक्तिबलादिभिः ॥ ३१

जयो योगी युगान्ताभस् सव्यसाची रणाग्रगः ।
तेजसा हतवान् सर्वं सुयोधनबलं नृप ॥ ३२

यत्तु गोवृषभाङ्केन मुनिभ्यस्समुदाहृतम् ।
पुराणं हिमवत्पृष्ठे तन्मे निगदतश्शृणु ॥ ३३

यावत्तस्य भवेत् पुष्टिस् तेजो दीप्तिः पराक्रमः ।
प्रभावस्सन्नतिर्जन्म कृष्णे तत्त्रिगुणं विभो ॥ ३४

कश्शक्तोऽन्यथा कर्तुं तद्यदि स्यात्तथा शृणु ।
यत्र कृष्णो हि भगवांस् तत्र पुष्टिरनुत्तमा ॥ ३५

वयं त्विहाल्पमतयः परतन्त्रास्सुविक्लबाः ।
ज्ञानपूर्वं प्रपन्नास्स्मो मृत्योः पन्थानमव्ययम् ॥ ३६

भवांश्चाप्यार्जवपरः पूर्वं कृत्वा प्रतिश्रयम् ।
राजवृत्तं न लभते प्रतिज्ञापालने रतः ॥ ३७

अप्येवात्मवधं लोके राजंस्त्वं बहु मन्यसे ।
न हि प्रतिज्ञा या दत्ता तां प्रहातुमरिन्दम ॥ ३८

कालेनायं जनस्सर्वो निहतो रणमूर्धनि ।
वयं च कालेन हताः कालो हि परमेश्वरः ॥ ३९

न हि कालेन कालज्ञस् स्पृष्टश्शोचितुमर्हसि ।
कालो लोहितरक्ताक्षः कृष्णो दण्डी सनातनः ॥ ४०

तस्मात् कुन्तीसुत ज्ञातीन् नेह शोचितुमर्हसि ।
व्यपेतमन्युर्नित्यं त्वं भव कौरवनन्दन ॥ ४१

माधवस्यास्य माहात्म्यं श्रुतं यत् कथितं मया ।

तदेव तावत् पर्याप्तं सज्जनस्य निदर्शनम् ॥ ४२

व्यासस्य वचनं श्रुत्वा नारदस्य च धीमतः ।
स्वयं चैव महाराज कृष्णस्यार्हतमस्य वै ॥ ४३

प्रभावश्चर्षिपूगस्य कथितस्सुमहान् मया ।
महेश्वरस्य संवादं शैलपुत्र्याश्च भारत ॥ ४४

धारयिष्यति यश्चैनं महापुरुषसम्भवम् ।
शृणुयात् कथयेद्वा यस् स श्रेयो लभते परम् ॥ ४५

भवितारश्च तस्याथ सर्वे कामा यथेप्सिताः ।
प्रेत्य स्वर्गं च लभते नरो नास्त्यत्र संशयः ॥ ४६

न्याय्यं श्रेयोभिकामेन प्रतिपत्तुं जनार्दनः ।
एष एवाक्षयो विप्रैस् स्तुतो राजन् जनार्दनः ॥ ४७

महेश्वरमुखोत्सृष्टा ये च धर्मगुणास्स्मृताः ।
ते त्वया मनसा धार्याः कुरुराज दिवानिशम् ॥ ४८

एवं ते वर्तमानस्य सम्यग्दण्डधरस्य च ।
प्रजापालनदक्षस्य स्वर्गलोको भविष्यति ॥ ४९

धर्मेणापि सदा राजन् प्रजा रक्षितुमर्हसि ।
यस्तस्य विपुलो दण्डस् सम्यग्धर्मस्स कीर्त्यते ॥ ५०

य एष कथितो राजन् मया सज्जनसन्निधौ ।
शङ्करस्योमया सार्धं संवादो धर्मसंहितः ॥ ५१

श्रुत्वा वा श्रोतुकामो वाऽप्यर्चयेद्वृषभध्वजम् ।
विशुद्धेनेह भावेन य इच्छेद्भूतिमात्मनः ॥ ५२

एष तस्यानवद्यस्य नारदस्य महात्मनः ।
सन्देशो देवपूजार्थं तं तथा कुरु पाण्डव ॥ ५३

एतदत्यद्भुतं वृत्तं पुण्ये हिमवति प्रभो ।
वासुदेवस्य कौन्तेय स्थाणोश्चैव स्वभावजम् ॥ ५४

दशवर्षसहस्राणि बदर्यामेष शाश्वतः ।
तपश्चचार विपुलं सह गाण्डीवधन्वना ॥ ५५

त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनञ्जयौ ।
विदितौ नारदादेतौ मम व्यासाच्च पार्थिव ॥ ५६

बाल एव महाबाहुश् चकार कदनं महत् ।
कंसस्य पुण्डरीकाक्षो ज्ञातित्राणार्थकारणात् ॥ ५७

कर्मणामस्य कौन्तेय नान्तं सङ्ख्यातुमुत्सहे ।
शाश्वतस्य पुराणस्य पुरुषस्य युधिष्ठिर ॥ ५८

ध्रुवं श्रेयः परं तात भविष्यति तवोत्तमम् ।
यस्य ते पुरुषव्याघ्रस् सखा चायं जनार्दनः ॥ ५९

दुर्योधनं तु शोचामि प्रेत्य लोकेऽपि दुर्मतिम् ।
यत्कृते पृथिवी सर्वा विनष्टा सहयद्विपा ॥ ६०

दुर्योधनापराधेन कर्णस्य शकुनेस्तथा ।
दुश्शासनचतुर्थानां कुरवो निधनं गताः ॥ ६१

वैशम्पायनः—

एवं सम्भाषमाणे तु गाङ्गेये पुरुषर्षभे ।
तूष्णीं बभूव कौरव्यो मध्ये तेषां महात्मनाम् ॥ ६२

तच्छ्रुत्वा विस्मयं जग्मुर् धृतराष्ट्रादयो नृपाः ।
सम्पूज्य मनसा कृष्णं सर्वे प्राञ्जलयोऽभवन् ॥ ६३

ऋषयश्चापि ते सर्वे नारदप्रमुखास्तदा ।
प्रतिगृह्याभ्यनन्दन्त तद्वाक्यं प्रतिपूज्य च ॥ ६४

इत्येतदखिलं सर्वैः पाण्डवो भ्रातृभिस्सह ।
श्रुतवान् सुमहाश्चर्यं पुण्यं भीष्मानुशासनम् ॥ ६५

युधिष्ठिरस्तु गाङ्गेयं विश्रान्तं भूरिदक्षिणम् ।
पुनरेव महाबुद्धिः पर्यपृच्छन्महीपतिः ॥ ६६

इति श्रीमहाभारते अनुशासनपर्वणि
दानधर्मपर्वणि द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥
[ अस्मिन्नध्याये ६६ श्लोकाः ]

## ॥ कुम्भघोणपुस्तके - पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥

## ॥ पूनाचित्रशालापुस्तके - पञ्चाशदधिकशततमोऽध्यायः ॥

( To face P. 1299 of Vol XVII )

भीष्मेण युधिष्ठिरं प्रति एकादशरुद्रद्वादशादित्यादीनां वसिष्ठादि महर्षीणां राजर्ष्यादीनां च पृथक् पृथङ्नामनिर्देशपूर्वकं तत्तन्नामकीर्तनादेः सावित्रीजपादेश्च महाफलहेतुत्वाभिधानम् ॥

युधिष्ठिरः—

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
किं जप्यं जपतो नित्यं भवेद्धर्मफलं महत् ॥ १

प्रस्थाने वा प्रवेशे वा प्रवृत्ते वाऽपि कर्मणि ।
दैवे वा श्राद्धकाले वा किं जप्यं कर्मसाधनम् ॥ २

शान्तिकं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनम् ।
जप्यं यद्ब्रह्म समितं तद्भवान् वक्तुमर्हति ॥ ३

भीष्मः—

व्यासप्रोक्तमिमं मन्त्रं शृणुष्वैकमना नृप ।
सावित्र्या विहितं दिव्यं सद्यः पापविमोचनम् ॥ ४

शृणु मन्त्रविधिं कृत्स्नं प्रोच्यमानं मयाऽनघ ।
यं श्रुत्वा पाण्डवश्रेष्ठ सर्वपापैः प्रमुच्यते ॥ ५

रात्रावहनि धर्मज्ञ जपन् पापैर्न लिप्यते ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ६

आयुष्मान् भवते चैव यं श्रुत्वा पार्थिवात्मज ।
पुरुषस्तु सुसिद्धार्थः प्रेत्य चेह च मोदते ॥ ७

सेवितं सततं राजन् पुरा राजर्षिसत्तमैः ।
क्षत्रधर्मपरैर्नित्यं सत्यव्रतपरायणैः ॥ ८

इदमाह्निकमव्यग्रं कुर्वद्भिर्नियतैस्सदा ।
नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा ॥ ९

नमो वसिष्ठाय महाव्रताय
पराशरं वेदनिधिं नमस्ये ।
नमोऽस्त्वनन्ताय महोरगाय
नमोस्तु सिद्धेभ्य इहाक्षयेभ्यः ॥ १०

नमोऽस्त्वृषिभ्यः परमं परेषां
देवेषु देवं वरदं वराणाम् ।
सहस्रशीर्षाय नमश्शिवाय
सहस्रनामाय जनार्दनाय ॥ ११

अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
ऋतश्च पितृरूपश्च त्र्यम्बकश्च महेश्वरः ॥ १२

वृषाकपिश्च शम्भुश्च हवनोऽथेश्वरस्तथा ।

एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः ॥ १२

शतमेतत् समाम्नातं शतरुद्रे महात्मनाम् ॥ १३॥

अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः ।
तथा धाताऽर्यमा चैव जयन्तो भास्करस्तथा ॥ १४॥

त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः ॥ १५॥

धरो ध्रुवश्च सोमश्च सावित्रोऽथानिलोऽनलः ।
प्रत्युषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १६॥

नासत्यश्चापि दस्रश्च स्मृतौ द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतौ संज्ञा नासाविनिर्गतौ ॥ १७॥

अतः परं प्रवक्ष्यामि लोकानां कर्मसाक्षिणः ।
अपि यज्ञस्य वेत्तारो दत्तस्य सुकृतस्य च ॥ १८॥

अदृश्यास्सर्वभूतेषु पश्यन्ति त्रिदशेश्वराः ।
शुभाशुभानि कर्माणि मृत्युः कालश्च सर्वशः ॥ १९॥

विश्वे देवाः पितृगणा मूर्तिमन्तस्तपोधनाः ।
मुनयश्चैव सिद्धाश्च तपोमोक्षपरायणाः ॥ २०॥

शुचिस्मिताः कीर्तयतां प्रयच्छन्ति शुभं नृणाम् ॥ २१

प्रजापतिकृतानेतान् लोकान् दिव्येन तेजसा ।

वसन्ति सर्वलोकेषु प्रयतास्सर्वकर्मसु ॥ २२

प्राणानामीश्वरानेतान् कीर्तयन् प्रयतो नरः ।
धर्मार्थकामैर्विपुलैर् युज्यते सह नित्यशः ॥ २३

लोकांश्च लभते पुण्यान् विश्वेश्वरकृताञ् शुभान् ।
एते देवास्त्रयस्त्रिंशत् सर्वभूतगणेश्वराः ॥ २४

नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः ।
ईश्वरास्सर्वलोकानां गणेश्वरविनायकाः ॥ २५

सौम्या रौद्रा गणाश्चैव योगभूतगणास्तथा ।
ज्योतींषि सरितो व्योम सुपर्णः पतगेश्वरः ॥ २६

पृथिव्यां तपसा सिद्धास् स्थावराश्च चरश्च ह ।
हिमवान् गिरयस्सर्वे चत्वारश्च महार्णवाः ॥ २७

भवस्यानुचराश्चैव हरतुल्यपराक्रमाः ।
विष्णुर्देवोऽथ जिष्णुश्च स्कन्दश्चाम्बिकया सह ॥ २८

कीर्तयन् प्रयतस्सर्वान् सर्वपापैः प्रमुच्यते ॥ २८॥
अत ऊर्ध्वं प्रवक्ष्यामि मानवान् ऋषिसत्तमान् ॥ २९

यवक्रीतश्च रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान् बलश्चाङ्गिरसस्सुतः ॥ ३०

ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।

ब्रह्मतेजोमयास्सर्वे कीर्तिता लोकभावनाः ॥ ३१

लभन्ते हि शुभं सर्वे रुद्रानलवसुप्रभाः ।
भुवि कृत्वा शुभं कर्म मोदन्ते दिवि दैवतैः ॥ ३२

महेन्द्रगुरवस्सप्त प्राचीं वै दिशमाश्रिताः ।
प्रयतः कीर्तयेदेतान् शक्रलोके महीयते ॥ ३३

उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
दृढव्यश्चोर्ध्वबाहुश्च तृणसोमाङ्गिरास्तथा ॥ ३४

मित्रावरुणयोः पुत्रास् तथाऽगस्त्यः प्रतापवान् ।
धर्मराजर्त्विजस्सप्त दक्षिणां दिशमाश्रिताः ॥ ३५

दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्तिमान् ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ ३६

अत्रेः पुत्रश्च धर्मात्मा ऋषिस्सारस्वतस्तथा ।
वरुणस्यर्त्विजस्सप्त पश्चिमां दिशमाश्रिताः ॥ ३७

अत्रिर्वसिष्ठो भगवान् कश्यपश्च महान् ऋषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ ३८

ऋचीकतनयश्चोग्रो जमदग्निः प्रतापवान् ।
धनेश्वरस्य गुरवस् सप्तैते उत्तराश्रिताः ॥ ३९

अपरे मुनयस्सप्त दिक्षु सर्वास्वधिष्ठिताः ।
कीर्तिस्वस्तिकरा नृणां कीर्तिता लोकभावनाः ॥ ४०

धर्मः कामश्च कालश्च वसुर्वासुकिरेव च ।
अनन्तः कपिलश्चैव सप्तैते धरणीधराः ॥ ४१

रामो व्यासस्तथा द्रौणिर् अश्वत्थामा च लोमशः ।
इत्येते मुनयो दिव्या एकैकस्सप्त सप्तधा ॥ ४२

शान्तिस्वस्तिकरा लोके दिशाम्पालाः प्रकीर्तिताः ।
यस्यां यस्यां दिशि ह्येते तन्मुखश्शरणं व्रजेत् ॥ ४३

स्रष्टारस्सर्वभूतानां कीर्तिता लोकपावनाः ।
संवर्तो मेरुसावर्णो मार्कण्डेयश्च धार्मिकः ॥ ४४

साङ्ख्ययोगौ नारदश्च दुर्वासाश्च महानृषिः ।
अत्यन्ततपसो दान्तास् त्रिषु लोकेषु विश्रुताः ॥ ४५

अपरे रुद्रसङ्काशाः कीर्तिता ब्रह्मलौकिकाः ।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ॥ ४६

तथा धर्मार्थकामेषु सिद्धिं च लभते नरः ।
पृथुं वैन्यं नृपवरं पृथ्वी यस्याभवत् सुता ॥ ४७

प्रजापतिं सार्वभौमं कीर्तयेद्वसुधाधिपम् ।
आदित्यवंशप्रभवं महेन्द्रसमविक्रमम् ॥ ४८

पुरूरवसमैलं च त्रिषु लोकेषु विश्रुतम् ।
बुधस्य दयितं पुत्रं कीर्तयेद्वसुधाधिपम् ॥ ४९

त्रिलोकविश्रुतं वीरं भरतं च प्रकीर्तयेत् ।

